अभ्येष्याभीष्टमाचार्यो होमरक्षां समाचरेत् ।
स्वार्थे च यजमानार्थे दद्यादर्घ्यं पराङ्मुखम् ॥

व्याङ्गं पूजयित्वान्ते शिवं व्याहृतिमाचरेत् ।
तत्रैव रक्षयेन्नित्यं यावत्कर्म समाप्यते ॥

प्रत्यहं जनयेद्वाथ स्थण्डिले होमकर्मणि ।
अन्तर्बहिर्बलिं दत्वा समाचम्याणुविग्रहः ॥ 155

गत्वा कुम्भान्तिकं कर्म विज्ञाप्येशेऽस्त्ररूपिणि ।
ततस्तत्कुम्भपानीयैः स्नापयेत् परमेश्वरम् ॥

गन्धपुष्पस्रगाद्यैश्च नैवेद्यान्तैः प्रपूजयेत् ।
संप्रार्थ्य वाञ्छितं देवाल्लब्धानुज्ञः प्रसादजम् ॥

भस्मापि यजमानाय दातव्यं होमकर्मणि ।
अत्राप्यध्ययनं मन्त्रजपं शान्तिवदाचरेत् ॥

मूर्तिहोमः समाख्यातः प्रायश्चित्तार्थमीरितः ।
अन्योऽपि मूर्तिहोमस्य विशेषस्त्वत्र कथ्यते ॥

यजेत् कुम्भास्त्रवर्धन्योर्मध्यमे शिवमम्बिकाम् ।
संयजेन्मूर्तिमूर्तीशानष्टकुम्भेषु बाह्यतः ॥ 160

अष्टदिक्षु च शर्वादिमन्त्रैर्होमं समाचरेत् ।
स्थण्डिलेष्वष्टकुण्डेषु वेदिकासहितेषु वा ॥

समिदाज्यतिलक्षीरयवैरष्टोत्तरं शतम् ।
पञ्चाशत्संख्यकं वापि तदर्धं वा पृथक् पृथक् ॥

पलाशोदुम्बराश्वत्थवटा दिक्षु विदिक्ष्वथ ।
शम्यपामार्गश्रीवृक्षप्लक्षास्समिध ईरिताः ॥

क्षीरसस्येन्द्रहीनैर्वा पञ्चकुण्डघटैस्तु वा ।
पञ्चपक्षेऽष्टपक्षे वा स्थण्डिलं पूर्वदिग्गतम् ॥

विधाय सर्वं मन्त्रैस्तु होमं तत्र समाचरेत् ।
पूर्वस्मिन्नीशकुण्डे वा गुरुस्संहितयाहुतिम ॥ 165

पूर्णाहुतिं ततो दत्वा घटोदैःस्नापयेच्छिवम् ।
संपूज्य गन्धपुष्पाद्यैः प्रार्थयेदिष्टसिद्धये ॥

एवं श्रेष्ठादिभेदेन मूर्तिहोमस्त्रिधा मतः ।
कर्तव्यो मूर्तिहोमोऽयं मूर्तीशार्चनहोमयुक् ॥

संप्रोक्षणप्रतिष्ठादौ निष्कृत्यै नायमीरितः ।
शान्त्युक्तदिनसंख्याया वशेनैतत्समाचरेत् ॥

मूर्तिहोम इति प्रोक्तो घृतस्नानादिकः पुरा ।
यतो मया समादिष्टस्ततो नात्रापि कथ्यते ॥

एकसंध्यादिभेदेन नित्यपूजाविलोपने ।
द्वारेशार्चनलोपे च पञ्चशुद्धिविलोपने ॥ 170

लोपे चासनसंस्कारोपचाराणामथावृतेः ।
पाद्यादीनां चतुष्के चाभ्यङ्गकोद्वर्तनेऽपि च ॥

निमज्जनविहीने वा तैलाद्यैस्संयुते शिवे ।
अर्चिते पञ्चगव्ये वा लुप्ते पञ्चामृतेऽपि वा ॥

गन्धेऽदत्तेऽथवा स्वल्पे पुष्पे दत्ते विपर्ययात् ।
दीपे चारात्रिके लुप्ते धूपारात्रिकयोरथ ॥

नीराजनस्य वा दीपमालारथेनाहृतेन वा ।
मूषिकाद्यैस्तु दीपेन वह्निना वा द्विजोत्तमाः ॥

लिङ्गबेरागमादौ तु स्पृष्टे दुष्टेऽन्यवर्णकैः ।
लिङ्गादिस्थेऽम्बरे दग्धे दग्धे सद्मनि वा तथा ॥ 175

दीपे च रक्षादीपे वा हविष्यामन्त्रणात्मके ।
हीने काण्डपटे गन्धे पुष्पे नैवेद्यकादिषु ॥

कृमिकीटनराद्यस्थिनखरोमादिदर्शने ।
देवाय दत्तद्रव्येषु नखरोमादिदर्शने ॥

श्लेष्माश्रुरुधिराद्यक्तद्रव्यैरभ्यर्चिते शिवे ।
सामान्यप्राणिसंभूतमलयुक्तैरथापि वा ॥

नैवेद्याहरणे काले तोयसेके विलोपिते ।
तदाक्रमे वा शङ्खस्य निस्वने वा तदुज्झिते ॥

प्रागेव निश्चितद्रव्यविहीने तस्य वर्धने ।
लिङ्गे बेरादिके शून्यमस्तके पूर्वकल्पिते ॥ 180

मालाद्येऽवस्थिते म्लाने लिङ्गाद्ये पूजिते सति ।
बलाबदत्ते नित्ये वा वह्निकर्मणि नित्यके ॥

काम्ये वा त्वकृते कुण्डवह्निसंस्कारलोपने ।
अशैवाग्नौ कृते होमे वेदिकादिक्रियाकृतौ ॥

केवले सशिवे वाग्नौ निर्वाणे तु द्विजोत्तमाः ।
होमद्रव्येऽथवा हीने नित्योत्सवविलोपने ॥

बेरं विहाय वा तस्मिन् पुष्पलिङ्गादिभिः कृते ।
वृष्टिपातादिभिर्वापि राष्ट्रक्षोभादिहेतुभिः ॥

गर्भगेहे कृते तस्मिंस्तत्काले दीपलोपने ।
आतोद्यनृत्तकरणे वितानस्य विलोपने ॥ 185

बलिप्रदानकाले तु वाद्यदीपविलोपने ।
पादुकाराधने हीने तद्याने वा विलोपिते ॥

अयोजितेऽस्त्रनाथे वा लिङ्गे पाशुपताह्वये ।
उक्तप्रदक्षिणे हीने वैपरीत्यप्रदक्षिणे ॥

बेरादौ पतिते वाललिङ्गे पात्रेऽथ पादुके ।
सौल्येऽकृते तदङ्गे वा पञ्चाचार्याधिपोज्झिते ॥

सौख्यश्लोकविहीने तु गणिकापतनेऽथवा ।
तदा दीपेऽथवा गाने विहीने तु द्विजोत्तमाः ॥

आतोद्यनृत्तवैकल्ये नीराजनविलोपने ।
तदङ्गे वाप्यदत्तायां रक्षायां भस्मनस्तथा ॥ 190

अदत्ते दर्पणे छत्रचामरादौ सति प्रभोः ।
कृते पर्युषितपुष्पाद्यैरर्चने गर्भगेहके ॥

सनिर्माल्येऽथवा विप्रा द्रव्यैरीशे प्रपूजिते ।
निर्माल्यसङ्करोपेतैः क्षयकुष्ठादिरोगिभिः ॥

बधिरैः पापरोगार्तैरपस्मारादिसंयुतैः ।
दुष्टलक्षणयुक्तैश्च हीनाङ्गैर्वाधिकाङ्गिभिः ॥

विशिखैर्वार्चिते देवे सन्ध्यातिक्रमणे तथा ।
आदिशैवकुलोद्भूतव्यतिरिक्तैश्शिवेऽर्चिते ॥

अधिकारविहीनैर्वा देवलैर्वार्चिते शिवे ।
एवं नित्यविधौ प्रोक्तः प्रायश्चित्ते ह्यनुक्रमः ॥ 195

अनुक्रमानुरूपेण नित्यनिष्कृतिरुच्यते ।
एकसन्ध्यार्चनाहीने पूजयोत्तमया युते ॥

स्थानराज्ञोर्निरोधःस्याद्दिशाहोमं तदा नयेत् ।
मध्यया मूर्तिहोमस्स्याद्धीनया शान्तिहोमकम् ॥

विधाय पूजां त्रिगुणां द्विगुणां वा समामथ ।
उपसन्ध्यर्चने हीने हीनोक्तां निष्कृतिं गुरुः ॥

नयेद्दोषापहारार्थं द्विसन्ध्यालोपने ततः ।
कलशैर्नवभिर्देवं संस्नाप्य तदनन्तरम् ॥

प्रायश्चित्तं ततः कुर्यात् प्रागुक्तं देशिकोत्तमः ।
त्रिसन्ध्यार्चनलोपे तु स्नपनं पञ्चविंशति ॥ 200

चतुस्सन्ध्यार्चने हीने पञ्चाशत्स्नपनादिकम् ।
प्रायश्चित्तं प्रकर्तव्यमेकाहे तु विहीनके ॥

अष्टोत्तरशतं स्नानादिकं कार्यं पुरोदितम् ।
दिनद्वये विहीने तु द्विदिनं चैतदाचरेत् ॥

तत्रापि सन्ध्यालोपश्चेत्तदुक्ता निष्कृतिर्मता ।
दिनानि यानि हीनानि पूजया नित्यसंज्ञया ॥

तदहस्संख्यया कुर्यात् प्रायश्चित्तं पुरोदितम् ।
एकमासावधि यावत्तत्संप्रोक्षणं नयेत् ॥

नान्यथा देवदेवस्य सन्निधिर्द्विजसत्तमाः ।
द्वारपालार्चने हीने विघ्नबाधा द्विजोत्तमाः ॥ 205

तदर्थं संहिताहोमं समाप्य द्वारपान्यजेत् ।
पञ्चशुद्धिविहीना या सा पूजा त्वकृता भवेत् ॥

आसनस्कन्धहीने तु दुस्थितिर्भुवि जायते ।
शिवसंस्कारहीने तु नराः स्युर्दुष्टचारिणः ॥

अथोपचारवैकल्ये क्षुत्पिपासादिभिर्नराः ।
पीडयन्ते क्रमभङ्गे तु साङ्कर्यं भुवि जायते ॥

विषादावृत्तिभङ्गे तु प्रेष्याणां दुस्थितिं गुरुम् ।
शान्तिहोमं तदा कृत्वा यथावत्सर्वमाचरेत् ॥

नित्ये नैमित्तिके काम्ये पाद्यादिद्रव्यहीनके ।
तदङ्गे वा भवेल्लोके तत्तद्द्रव्यविनाशनम ॥ 210

पाद्यद्रव्ये तदङ्गे वा विहीने पादरोगता ।
तद्वदाचमनेऽङ्गे वा मुखरोगो भविष्यति ॥

शिरस्यर्घ्ये तदङ्गे वा हीने रोगो भवेद्ध्रुवम् ।
दूर्वापुष्पाक्षतैर्हीने तदङ्गे तत्फलं ध्रुवम् ॥

अभ्यङ्गादिविहीने तु भवेयुस्सरुजा नराः ।
पञ्चगव्यविहीने तु हीने पञ्चामृतेऽङ्गके ॥

तत्तद्द्रव्यविनाशस्तु भवेल्लोके न संशयः ।
गन्धादानेऽङ्गवैकल्ये पुष्पादाने तदङ्गके ॥

तत्तद्द्रव्यविनाशो हि भवेल्लोके मुनीश्वराः ॥
धूपेऽदत्ते तदङ्गे वा हीने स्याद्घोररोगता ॥ 215

घण्टायास्ताडने हीने पिशाचै राक्षसादिभिः ।
पीडयन्ते सोपसर्गाश्च जायन्ते तन्निवासिनः ॥

दीपप्रदाने हीनेऽङ्गलोपे वा दृष्टिरोगता ।
आमन्त्रणहविर्लोपे तदङ्गानामथापि वा ॥

नैवेद्यस्य तदङ्गस्याप्रदाने सस्यनाशनम् ।
ताम्बूलानामभावेऽङ्गे हीने वा वक्त्ररोगता ॥

अथ काण्डपटे हीने देवानां संनिधिक्षयः ।
भवेदिति गुरुर्ज्ञात्वा प्रायश्चित्तं तदाचरेत् ॥

देवं संपूज्य तद्द्रव्यं द्विगुणं दापयेच्छिवे ।
शान्तिहोमं ततः कुर्यात् स्नपनं वा गुरुर्नयेत् ॥ 220

तत्तद्द्रव्यविहीने च द्विगुणं दापयेच्छिवे ।
कर्तव्यस्संहिताहोमश्शताघोरजपोऽथवा ॥

द्रव्याणामेव चैतेषामर्घे पादे तदर्धके ।
प्रदद्येऽघोरमन्त्रेण द्विचतुष्पद्शतं क्रमात् ॥

जप्त्वा देवाय तद्द्रव्यं द्विगुणं दापयेत्ततः ।
द्रव्याण्येतान्यमन्त्रेण दत्तानि यदि शङ्करे ॥

अदत्तमेव तद्द्रव्यं देवमभ्यर्च्य देशिकः ।
दद्यादन्ते स्वमन्त्रेण द्रव्यं वा द्विगुणं समम् ॥

स्नपनं कारयेदिष्टं शतं घोरजपं तु वा ।
नित्ये नैमित्तिके काम्ये पाद्यादित्रयलोपने ॥ 225

सद्योजातनरेशानाख्यान्यथावर्त्य देशिकः ।
पाद्यादि द्विगुणं दद्यात्तद्द्रव्यं केवलं तु वा ॥

दूर्वापुष्पाक्षते हीने शतं जापो हृदा मतः ।
प्रवर्तमानेऽभ्यङ्गे चोद्वर्तनिर्मज्जनादिके ॥

हीने हृदा शतं जप्त्वा द्विगुणं दापयेत्ततः ।
संस्थितेऽभ्यङ्गतैलाद्ये पूजया संहिताहुतिः ॥

नित्ये नैमित्तिके काम्ये पूर्वक्लृप्ते शरावृते ।
विलुप्ते संहिताहोम कृत्वा द्विगुणमाचरेत् ॥

अनेन विधिना कुर्यात् पञ्चगव्ये च निष्कृतिम् ।
पूर्वसंकल्पिते गन्धे लुप्ते सद्यःशतं जपेत् ॥ 230

जुहुयाद्वाथ तद्द्रव्यं द्विगुणं सममेव वा ।
अपुष्कले विहीने वा पुष्पे दत्ते विपर्ययात् ॥

शतवारं जपेदीशं तद्दद्याद् द्विगुणं ततः ।
धूपे चारात्रिके घोरं जप्त्वान्ते द्विगुणं ततः ॥

धूपारात्रिकयोर्दानकाले नीराजनस्य च ।
दीपमालास्थितेनाथ मूषिकाद्याहतेन वा ॥

वह्निना यदि संस्पृष्टे लिङ्गबेरागमादिके ।
अणुना महता वाप राज्ञो रोगो भविष्यति ॥

संशोध्य वह्निना दुष्टं स्नापयेत्परमेश्वरम् ।
पञ्चामृतसमायुक्तं नालिकेरोदकान्वितम् ॥ 235

संपूज्य देवदेवेशं मूर्तिहोमं समाचरेत् ।
अणुमात्रो भवेद्वह्निर्यदि शान्तिं समाचरेत् ॥



लिङ्गबेरादिसंस्थानि वासांसि यदि वह्निना ।
निर्दग्धानि तदा कुर्यात् कर्म संप्रोक्षणादिकम् ॥

दग्धानि चेत् प्रदेशेन तदा शान्तिं समाचरेत् ।
दहने सद्मनः कुर्यात् सद्म संप्रोक्षणात्मकम् ॥

देवाय स्नपनं कुर्याद् धामच्छेदादिसंभवे ।
तदुक्तां निष्कृतिं कुर्यात् संधानादिसमन्वितम् ॥

वह्निना लिङ्गबेरादावन्यवर्णमुपागते ।
मानुषं चेत् परित्याज्यं प्राह्यं स्वयंभुवादिकम् ॥ 240

प्रतिक्रियानुकर्मोक्त्या कार्या संप्रोक्षणान्विता ।
पुस्तको यदि लेशेन दग्धः शान्तिं समाचरेत् ॥

सकले विकले कुर्याच्छिवस्य स्नपनं महत् ।
प्राण्यङ्गधूपदाने च पञ्चमस्य शतं जपेत् ॥

दीपानामथ वैकल्ये जपेद्घोरशतत्रयम् ।
दीपानि द्विगुणं पश्चाद्देवदेवे प्रदापयेत् ॥

रक्षादीपस्य विच्छेदेऽप्येवं द्विगुणजापयुक् ।
हविष्यदत्ते देवाय स्नपनं तु विधाय च ॥

द्विगुणं दापयेत्पश्चादामन्त्रणहविष्यपि ।
अथ काण्डपटे हीने कवचं द्विशतं जपेत् ॥ 245

गन्धपुष्पनिवेद्यादिद्रव्येष्वपि तथा भवेत् ।
कृमिकीटनराद्यस्थिनखरोमादिदर्शने ॥

त्यजेत् स्वल्पं तु तद्द्रव्यं महच्चेन्न परित्यजेत् ।
शिवाय दत्तद्रव्येषु नखरोमादिदर्शने ॥

पञ्चगव्यैस्सुसंस्नाप्य जपेद्घोरं शतत्रयम् ।
श्लेष्माश्रुरुधिराद्यकद्रव्यैश्चेत् पूजितः शिवः ॥

स्नपनं देवदेवाय कल्पयेत् कर्तुरिच्छया ।
सामान्यप्राणिसम्भूतमलयुक्ते तथाचरेत् ॥

नवेद्याहरणे पाकस्थानाद्योयेन सेवनम् ।
हीनं वा लङ्घनं तत्र यदि जायेत दोषदम् ॥ 250

अर्घ्याम्बुना तदा प्रोक्ष्य नैवेद्यं बहुरूपिणा ।
शतं जपेद्विशुध्यर्थं हीने वा शङ्खनिस्वने ॥

आतोद्यसहिते स्थाने पुरुषाणां शतं जपेत् ।
प्रागेव निश्चितद्रव्यहीने तद्दोपकारकम् ॥

तदा मूलं शतं जप्त्वा द्विगुणं दापयेच्छिवे ।
प्रागेव निश्चितद्रव्यवर्धनं धनवर्धनम् ॥

नित्ये नैमित्तिके काम्येऽप्येषा निष्कृतिरीरिता ।
लिङ्गबेरादयश्शून्यमस्तका यदि दोषदाः ॥

तदाघोरं शतं जप्त्वा पुष्पाद्यैरर्चयेत्ततः ।
पूर्वसन्ध्यार्चितम्लानपुष्पाद्यैस्समवस्थिते ॥ 255

पूजिता लिङ्गबेराद्या यदि दोषकरा नृणाम् ।
अघोरेण शतं जप्त्वा पुनः पूजां समाचरेत् ॥

बलिदानविहीनं चेद्व्रजन्त्यखिलदेवताः ।
तत्स्थानविमुखास्तासां तृप्त्यर्थं द्विगुणं नयेत् ॥

दशाहोर्ध्वं विहीनं चेत् स्थाणुनापि शताहुतिः ।
नित्ये नैमित्तिके काम्ये त्वकृते बलिकर्मणि ॥

अवमहो भवेत्तत्र शान्तिहोमं समाप्य च ।
पुनस्तत्त्रिगुणं कार्यं तन्मात्रं वा द्विजोत्तमाः ॥

यदि देशिकसामर्थ्यं द्विसन्ध्यादौ समाचरेत् ।
होमकार्याणि यावन्ति परित्यक्तानि देशिकैः ॥ 260

तत्तद्द्रव्यैश्च तावन्ति मिलित्वा दिनशुद्धितः ।
प्रमाणहीनं तत्कुण्डं स्थण्डिलं वारिशुद्धिदम् ॥

शान्तिहोमं तदा कृत्वा यथावत्पुनराचरेत् ।
कुण्डसंस्कारहीने तु शिवाग्निर्नैव सिद्ध्यति ॥

तथाविधे कृते होमे कुण्डे वा स्थण्डिलेऽपि वा ।
अनिष्पन्ने शिवाग्नौ वा तयोस्संस्कारपूर्वकम् ॥

होमः पुनरपीष्टस्स्यान्नान्यथा देवसन्निधिः ।
अशैवाग्नौ कृतो होमश्शैवो व्याधिप्रदो भवेत् ॥

शिवाग्निरेव शवे स्यान्नान्योऽग्निः शिवमन्दिरे ।
वैदिकाग्निक्रिया या तु नेष्यते शिवमन्दिरे ॥ 265

पुण्याहार्थं कथं चोक्तमिति चेच्छैवचोदितम् ।
इत्यत्र क्रियते नैव स्वमनीषाप्रवर्तितम् ॥

शिवालये प्रकर्तव्यमित्यादि श्रुतिचोदितम् ।
अस्ति चेद्वैदिकं कर्मेत्येतत्सिद्धान्तवर्त्मना ॥

कामिकादिप्रभेदेन स्थापिते पूजितेऽपि वा ।
नोष्यते वैदिकं वाथ पुराणस्मृतिचोदितम् ॥

किमु पाशुपतादीनां प्रवेशो नेति तद्द्विजाः ।
रक्षितेऽग्नौ तु निर्वाणे यजमानविनाशनम् ॥

तदा घोराणुना कुर्यात्सहस्रं जपतर्पणे ।
सशिवेऽपि हि निर्वाणेऽयुतं घोराणुनाहुतिम् ॥ 270

तत्संख्याजपसंयुक्तां निष्कृत्यर्थं समाचरेत् ।
होमद्रव्यविहीने स्यात् तद्द्रव्यद्विगुणाहुतिः ॥

नित्योत्सवो विहीनश्चेत् सर्वदोषकरो नृणाम् ।
तदा देवं समभ्यर्च्याघोरेणैव शतं हुनेत् ॥

सन्धित्रयेऽपि हीने तु शान्तिहोमं समाचरेत् ।
अहोरात्रे विहीने तु स्नपनं कारयेच्छिवे ॥

पञ्चाहं तु तदेव स्यादघोरशतहोमयुक् ।
दशाहे स्नपनं शान्तिहोमसंयुक्तमाचरेत् ॥

तस्य पक्षकविच्छेदे शान्तिःस्यात् स्नपनेन तु ।
एकमासान्तरे हीने स्नपनं च शताहुतिः ॥ 275

शान्तिस्तदूर्ध्वं स्यात् किं तु त्रिदिनं ब्राह्मणोत्तमाः ।
पक्षान्तरे ततोऽप्यूर्ध्वं यदि निष्कृति श्रक्षकम् ॥

वर्धयेद्युग्मसंख्यातं पक्षपञ्चावसानकम् ।
नित्योत्सवश्च कर्तव्यो निष्कृतेरनु देशिकैः ॥

निर्वर्त्यमाने बेरेण तस्मिन्नित्योत्सवे यदा ।
बेरं विहाय पुष्पाद्यैर्लिङ्गैर्निवर्तिते सति ॥

तदाघोरं जपेन्मन्त्री त्रिशतं द्विशतं तु वा ।
वृष्टिपातादिभिर्वापि राष्ट्रक्षोभादिहेतुभिः ॥

गर्भगेहे कृते नित्योत्सवेऽप्येवं जपोऽर्धभाक् ।
तत्काले दीपविच्छेदे राष्ट्रमन्धतमो भवेत् ॥ 280

तदाघोरशतं जप्त्वा दीपद्विगुणमाचरेत् ।
एवं स्याद्यदि वाद्ये वा नृत्ते वा दोषकारकम् ॥

कृत्वा तु संहिताहोममघोरजपमेव वा ।
सहस्रं द्विगुणं पश्चान्नृत्तं वाद्यं समाचरेत् ॥

तदा वितानवैकल्ये तृतीयं त्रिशतं जपेत् ।
एवं स्याद्बलिदानेऽपि वाद्यदीपविलोपने ॥

पादुकाराधने हीने याने वा पादरोगता ।
कुर्याद्वा संहिताहोमं सहस्रं दक्षिणं जपेत् ॥

अयोजितेऽस्त्रनाथे वा लिङ्गे पाशुपताह्वये ।
विघ्नबाधा जपेद्घोरं कुर्याद्वा संहिताहुतिम् ॥ 285

उत्सवे कृत एवं स्याद्वैपरीत्यप्रदक्षिणे ।
उक्तप्रदक्षिणे हीने संहिताहोम इष्यते ॥

बेरादिपतने यानकाले संवत्सरोक्तवत् ।
तद्वत्कुर्यान्निष्कृतिं च अस्त्रलिङ्गादिपातने ॥

बेरे तु पतिते कुर्यादस्त्रलिङ्गोक्तनिष्कृतिम् ।
पादुके पतिते राष्ट्रमुख्यस्तन्निवर्तये ॥

ध्वजाधिवासरीत्या तु कुम्भं संस्थाप्य मध्यमे ।
पादुकं च समभ्यर्च्य तत्पुरस्शान्तिहोमकम् ॥

विधाय कुम्भन्यासं च कृत्वान्ते स्नानमाचरेत् ।
भेदादावनुक्तकर्मोक्तया निष्कृतिस्स्याद्द्विजोत्तमाः ॥ 290

सौख्यं चेन्न कृतं विद्यात्तदा तल्लोकदुःखितम् ।
पञ्चविंशतिभिः कुर्यात्स्नपनं कलशैस्तदा ॥

नवभिः कलशैर्वाथ गव्यस्नपनमेव वा ।
सौख्यानि यानि हीनानि तत्सौख्यं द्विगुणं नयेत् ॥



पञ्चाशत्स्नपनाख्यं स्यादनेकदिनलोपने ।
सौख्याङ्गे तु विहीने वा द्विगुणं तु तदा नयेत् ॥

पञ्चाचार्याः स्वकर्माणि न कुर्वन्ति तदा यदि ।
तदा मर्त्याः स्ववृत्तिस्था न भवन्त्यत्र वासिनः ॥

ईशाख्याघोरवामाजाञ्जपेन्मन्त्राञ्शतं शतम् ।
सर्वाभावे नयेच्छान्तिहोमं बहुदिनेऽपि च ॥ 295

सौख्यश्लोकविहीने स्यात् तत्सौख्यमकृतं भवेत् ।
अघोरेण शतं जप्त्वा पुनस्तद् द्विगुणं नयेत् ॥

सौख्यकाले तु गणिकापतने राष्ट्रदुःखितिः ।
यावदेव तदा कुर्याच्छान्तिहोमं तदुक्तवत् ॥

स्नपनं वा त्वघोरेण सहस्रजपमेव वा ।
सौख्यदीपस्य विच्छेदे घोरेणैकशतं जपेत् ॥

गानाभावे च तद्राष्ट्रभीतिस्सौख्यं यथोदितम् ।
प्रायश्चित्तं तदा कार्यं तद्भीतिविनिवृत्तये ॥

आतोद्यनृत्तवैकल्ये संहिताहोम इष्यते ।
सहस्रं वा जपेद्घोरं द्विगुणं दापयेत्ततः ॥ 300

नीराजने तदङ्गे वा हीनेऽग्निभयमादिशेत् ।
देवं संस्नाप्य गव्येन समभ्यर्च्यादराद्गुरुः ॥

द्विगुणं तु नयेत्पश्चाद्यानि हीनानि तानि च ।
शान्तिहोमस्तु वा कार्यो मूर्तिहोमोऽथवा मतः ॥

अदत्ता भस्मरक्षा चेदघोरेण शतं जपेत् ।
अदत्ते दर्पणछत्रचामरादौ तदा नयेत् ॥

अघोरजपसाहस्रमथ पञ्चशतं तु वा ।
कृतेऽप्युषितपुष्पाद्यैरर्चने राष्ट्रविभ्रमः ॥

स्नपनं देवदेवाय कृत्वा शान्ति त्र्यहं नयेत् ।
गर्भगेहे सनिर्माल्ये देवानां नात्र सन्निधिः ॥ 305

स्थलशुद्धिं तदा कृत्वा देवं संपूज्य यत्नतः ।
अघोराख्यं जपेन्मन्त्रं सहस्रं दोषशान्तये ॥

निर्माल्यसङ्करोपेतैर्द्रव्यैरीशे प्रपूजिते ।
तद्राष्ट्रवासिनो मर्त्याः पीडयन्ते शत्रुभिस्तदा ॥

क्षयकुष्ठादिरोगार्तैर्बधिरैः पापरोगिभिः ।
अपस्मारादिभिर्ग्रस्तैर्दुष्टलक्षणलक्षितैः ॥

हीनाधिकाङ्गैर्वैव्यायां कृतायां विशिखैस्तु वा ।
राष्ट्रक्षोभाय सा पूजा भवेन्निष्कृतिरुच्यते ॥

सकृत्प्रकृतेऽर्चने घोरशतमेकं नयेद्गुरुः ।
तदूर्ध्वं शतवृद्ध्या तु कालभेदाज्जपं नयेत् ॥ 310

पक्षोर्ध्वे संहिताहोमो मासोर्ध्वे शान्तिहोमकः ।
षाण्मासोपरि शान्तिस्स्यान्मूर्तिहोमस्समोपरि ॥

स्वदेशकालयोरेव यज्ञा इष्टफलप्रदाः ।
अन्यदेशेऽन्यकाले च त एवानिष्टहेतवः ॥

सन्ध्यातिक्रमणे घोरसहस्रजपमाचरेत् ।
सा च पञ्चविधा प्रोक्ता शास्त्रे बालादिभेदतः ॥

बालातिबाला युवतिर्वृद्धातिश्रेयसी मता ।
अतिबालातिवृद्धाभ्यां तास्सार्धघटिका मताः ॥

मार्ताण्डस्योदयार्धात्तु मध्यमात् पूर्वगामिनी ।
अतिबाला च बाला च नास्ति ग्राह्यास्तिसृष्वपि ॥ 315

सन्ध्यास्तत्पृष्ठगामिन्यो युवत्याद्यास्समीरिताः ।
तास्वेव प्रारभेत्पूजां पूर्वाह्णादिषु सर्वदा ॥

श्रेयस्यामुत्तमा तस्याः पार्श्वगे मध्यमे मते ।
अतिबालातिवृद्धा च गर्हितारम्भकर्मणि ॥

आरब्धा चेत्तयोः पूजा पूर्वोक्ता निष्कृतिर्मता ।
सन्ध्यारम्भे तदन्यत्र संहिताहोममाचरेत् ॥

आदिशैवकुलोद्भूतव्यतिरिक्तैश्शिवार्चने ।
कृते परार्थे दोषाय सङ्करसन्ध्यार्चने कृते ॥

आचरेत्संहिताहोमं तद्वृद्ध्या दिनवर्धने ।
पक्षोर्ध्वं शान्तिरित्युक्ता मासोर्ध्वं शान्तिहोमकः ॥ 320

द्विमासे मूर्तिहोमः स्याच्चतुर्मासे दिशाहुतिः ।
षण्मासोर्ध्वे विधातव्यं कर्म संप्रोक्षणं द्विजाः ॥

षण्मासात्परतो यस्मादतो देवलकाह्वये ।
अधिकारोऽनुशैवेऽस्ति भृत्यर्थं न भवेद्यदि ॥

मध्यदेशोद्भवश्चेद्यस्तस्य तत्राधिकारिता ।
चललिङ्गप्रतिष्ठायां दीक्षायां सर्वदेशगाः ॥

विन्ध्याद्रेर्दक्षिणे राज्ञामुत्तरे वैश्यजन्मनाम् ।
सान्तानिकस्य सर्वत्र न च शूद्रस्य कीर्तिता ॥

अधिकारविहीनेनानुष्ठितं त्वकृतं भवेत् ।
कृते देवलकाह्वेन स्थापनादौ गुरूत्तमाः ॥ 325

पुनस्संस्थापनं कृत्वा विधिनार्चां समाचरेत् ।
अधिकारविहीनेनानुष्ठितं तद्वदाचरेत् ॥

एवं नित्यविधौ प्रोक्तं प्रायश्चित्तं द्विजोत्तमाः ।
अष्टबन्धादिविश्लेषे निष्कृतिक्रम उच्यते ॥

अष्टबन्धे तु विश्लिष्टे लिङ्गे वा प्रतिमादिके ।
रिपुणा संगृहीते वा देवी वा केवला द्विजाः ॥

देवीं विहाय देवो वा केवलो रिपुणा हृतः ।
तत्रापि धाम्नि स्फुटिते महत्स्वल्पादिभेदतः ॥

स्थूप्याद्यवयवच्छेदे स्वलाभो जलनिस्रवे ।
स्थलेऽधःपतिते वापि तदङ्गे वाखिलेऽपि वा ॥ 330

पिण्डिकापतने वाथः परिवारविलोपने ।
बलिपीठविहीने तु तज्जीर्णे स्फोटनेऽपि वा ॥

तद्वाह्यपतनादौ च प्राकारे गोपुरे तथा ।
जीर्णेऽपि पतिते वापि स्फोटनादिसमन्विते ॥

कपिकुक्कुटकाद्यैर्वा कपोतैस्सूकरैश्श्वभिः ।
उलूकगृध्रकाकैश्च ऋतुस्त्रीचोरगर्दभैः ॥

पतितैः प्रेतकैर्वापि पातकैस्सूतकैरथ ।
गूढजैः पापरोगैस्तैर्वाद्यैर्वा प्रतिलोमजैः ॥

गुर्वादिद्रोहसंयुक्तैर्दीक्षाहीनैर्द्विजातिभिः ।
चतुष्पादैरथान्यैश्च पक्षिभिर्वा सरीसृपैः ॥ 335

हीनजातिभिरन्यैर्वा नरैर्दीक्षान्तरस्थितैः ।
शिल्पिभिः पाणचण्डालरजकाद्यैरथापि वा ॥

स्पृष्टे पीठेऽथ लिङ्गे वा बेरादौ गर्भगेहके ।
प्रविष्टे वाथ पूर्वे तु मण्डपे प्रतिमाह्वये ॥

परिवारालये वान्तर्मण्टपे वा द्वितीयके ।
महानसे प्रविष्टे वा बलिपीठेषु वा द्विजाः ॥

निर्वाणदीक्षया हीनैश्शूद्राद्यैस्समयस्थितैः ।
परार्थे स्थापिते लिङ्गे स्पृष्टे गर्भे प्रवेशिते ॥

अन्तर्मण्डलसालादौ मालिकादौ च मण्टपे ।
क्षपिते वा चिरं मध्ये अशुचिक्षेपणेऽथवा ॥ 340

गर्भेऽर्धमण्टपे बेरमण्टपे बाह्यदेशके ।
विष्ठाद्यप्रस्रवोद्गारश्लेष्ममद्यादिसेचने ॥

आशौचिभिश्चित्रवर्णाद्यैरन्तर्मण्डलवेशने ।
प्रासादे गर्भगेहेऽर्धे प्रतिमामण्टपादिके ॥

साले वा मालिकायुक्ते केवले गोपुराङ्गणे ।
बेरे पीठे वृषादौ वा तद्धाम्नि बलिपीठके ॥

परिवारालये कूपे पचनालय एव वा ।
आस्थानमण्टपेऽन्यस्मिन् तु वेश्मनि वा गृहे ॥

सभायां चूलिकायां वा वल्मीके समुपस्थिते ।
शिथिलीसंभवे वाथ मधुपञ्जरसंभवे ॥ 345

बृहत्पिपीलिकाक्षुद्रारक्तकृक्षुद्रजन्तवः ।
एतेषां वा समुत्पत्तौ द्वारे वा शयनालये ॥

तैलाज्यहविषःस्थाने द्वारनालेऽनिलालये ।
अजगोमहिषादीनां स्थाने वा ग्राममध्यमे ॥

दार्वादिलिङ्गे बेरादौ वीथ्यां वा चैत्यदारुणि ।
मठे प्रपादिके वापि आरामादावथापि वा ॥



लिङ्गमूलेऽथवा तेषां वल्मीकादौ समुद्भवे ।
नित्ये नैमित्तिके काम्ये लुप्ते स्नपनकर्मणि ॥

वैकल्ये वा तदङ्गस्य स्थण्डिले वा तदङ्गके ।
कुम्भादीनां विलोपे च कुम्भादौ मानवर्जिते ॥ 350

स्थापिते शिवकुम्भे वा करके कलशेऽपि वा ।
भेदादिसहिते दत्ते पृष्ठे वा द्विजसत्तमाः ॥

शङ्खहेमादिपात्रैर्वा ब्रह्मवृक्षदलोद्भवैः ।
स्नपने कल्पिते बेरे सूत्रवेष्टनवर्जिते ॥

स्वल्पेन तन्तुना वाथ वेष्टिते कलशादिके ।
पिधानकूर्चलोपे वा उत्कूर्चकमलोपने ॥

रत्नहेमाम्बरादीनां विलोपे च घटादिषु ।
गव्यादिद्रव्यलोपे च पुण्याहे वा विवर्जिते ॥

कुम्भादावर्चनापेते मन्त्रन्यासाप्रकल्पने ।
आषाढादिषु मासेषु कृत्तिकान्तेषु पञ्चसु ॥ 355

पवित्रारोहणे हीने दमनारोहणेऽपि वा ।
कृत्तिकादीपविच्छेदे राष्ट्रक्षोभादिहेतुभिः ॥

बेरादौ भुवि तोये वा गुहायां वा सुरक्षिते ।
पुष्पशून्यशिरोलिङ्गे वृष्टिपातादिसेचिते ॥

भग्नधामस्थिते वापि मृगपक्षिसरीसृपैः ।
पशुभिर्बाधिते लिङ्गे देवतान्तरबाधिते ॥

एवमादिषु कृत्येषु प्रायश्चित्तं विधीयते ।
अष्टबन्धे तु विश्लिष्टे राष्ट्रे शैथिल्यमादिशेत् ॥

अष्टबन्धं त्रिबन्धं वा कृत्वान्ते स्नपनं नयेत् ।
पुरातनं परित्यज्य शास्त्रेणाक्तं समुच्चरन् ॥ 360

अघोरेण शतं होमं समिदाज्यतिलौदनैः ।
रिपुणा संगृहीतं चेल्लिङ्गं वा प्रतिमादिकम् ॥

तद्राष्ट्रनाशो नृपतिश्शत्रुभिः परिपीड्यते ।
सर्वयत्नात् तदाहृत्य तत्रैव स्थापनाय च ॥

लब्धं चेल्लिङ्गबेराद्यं गुप्तदेशे निधाय च ।
लिङ्गोत्पाटजदोषस्य शान्त्यर्थं घोरमन्त्रतः ॥

सहस्रं होमयेदाज्यतिलाभ्यां चरुणा शतम् ।
मधुरत्रयसंयुक्तं सहस्रं दूर्वयाहुतिम् ॥

कृत्वान्ते स्थापनोक्तधा तु स्थापयेत्पूर्वभूतले ।
लक्षणोद्धारणं दृष्टिमोचनं जलवेशनम् ॥ 365

विहायान्यत् प्रकर्तव्यं स्थापयेत् तत्त्वदर्शिभिः ।
अलब्धं लिङ्गबेराद्यं यदान्यत् स्थापयेन्नवम् ॥

मासादर्वाक् तदूर्ध्वं चेद्यावन्मासत्रयावधि ।
प्रत्यहं शान्तिहोमश्च कर्तव्यः स्थापनान्तकम् ॥

तदूर्ध्वं स्थापनं बाललिङ्गादेश्चात्र नोदितम् ।
तस्मात् सर्वप्रयत्नेन मासत्रितयमध्यमे ॥

संस्थाप्य बाललिङ्गाद्यं बालस्थापनकर्मणा ।
कैर्गृहीतं क्व चोराद्याः क्व लिङ्गं कीदृशं तु तत् ॥

प्रतिमा मुखलिङ्गं वा बाणलिङ्गादिकं तु वा ।
प्रत्यहं चैवमन्वेष्य स्थितमन्यत्र चेद्ध्रुवम् ॥ 370

तदा युद्धेन जित्वा वा वित्तं दत्त्वाथवादरात् ।
आहृत्य लिङ्गबेराद्यं स्वस्थाने स्थापयेद्भृशम् ॥

संवत्सरत्रयादर्वाक् संलब्धं बहुयत्नतः ।
संवत्सरत्रयादूर्ध्वमलब्धं चेन्मुनीश्वराः ॥

मूलस्थाने यथापूर्वं तद्द्रव्यैस्तत्प्रमाणतः ।
संस्थाप्य मूललिङ्गाद्यमर्चयेदर्चनोक्तवत् ॥

अज्ञातं पूर्वमानं चेदाचार्यैर्वा गुरूत्तमैः ।
तत्प्रासादानुरूपेण यजमानानुरूपतः ॥

लिङ्गमापाद्य विधिना स्थापयेदुक्तकर्मणा ।
बाणलिङ्गं तु वा तत्र स्थापयेत् सर्वसिद्धये ॥ 375

बेराद्यं पीठिका वापि न्यायेनानेन कारयेत् ।
देवीं विहाय देवो वा देवी वा केवला यदा ॥

शत्रुभिस्संगृहीता चेत् स्थितस्यैवानुरूपतः ।
संपाद्य चेतरं तस्य प्रतिष्ठां च समाप्य च ॥

कल्याणं कारयेदन्ते विधिना देशिकोत्तमः ।
स्थापनान्ते तु बेरायमानीतं चेत्तदन्तिके ॥

देशे संस्थाप्य विधिना पूजयेन्नित्यमादरात् ।
पीठं चेत् सन्त्यजेल्लिङ्गेनायथान्येन योजयेत् ॥

प्रासादस्स्फुटितः पूर्वे यदि राज्ञो भयं भवेत् ।
आग्नेय्यामग्निदाहःस्याद्दक्षिणे कलहो भवेत् ॥ 380

नैर्ऋत्यां धननाशस्स्याद्वारुण्यां भृत्यनाशनम् ।
वायव्यां शत्रुवृद्धिस्स्यादुत्तरे पुत्रनाशनम् ॥

ऐशान्यां दुःखमाप्राजा क्रमेणैवं फलं मतम् ।
उत्तमादिविभेदेन कृत्वा शान्तिं पुरोदिताम् ॥

शान्तिहोमयुतामन्ते सन्धानं धाम्न आचरेत् ।
प्रासादमनुकर्मोक्त्या कारयेद्वा यथाविधि ॥

स्वल्पभेदादियुक्तश्चेच्छान्तिहोमं समाचरेत् ।
प्रासादार्धे त्रिपादे वा पादेऽर्धांशेऽथ भग्नके ॥

कुर्याद्धाम्नोऽथ सन्धानं षट्पञ्चयुगवह्निजम् ।
प्रायश्चित्तं प्रकर्तव्यं पूर्वोक्तं भाषितारमभिः ॥ 385

स्थूण्याद्यवयवछिन्नेऽप्येतदेकाहमाचरेत् ।
स्थलाधो जलनिःस्रावे जलेऽधः पतितेऽपि वा ॥

तदङ्गे वा निमग्ने तु भूमौ दोषः प्रजायते ।
शान्तिहोमं तदा कुर्यात् सलिले पतिते त्र्यहम् ॥

कुम्भस्थं वाथ देवेशं कृत्वा कुर्यात् स्थलक्रियाम् ।
प्रोक्षयेद्वाक्षतोयेन स्नानार्थं प्रतिसन्ध्यकम् ॥

पुण्याहप्रोक्षणोपेतं शिल्पिभिः कारिते स्थले ।
ततस्संप्रोक्षणं कुर्यात् स्थलकर्मावसानके ॥

पिण्डिका पतिताधश्चेत् स्वस्थानान्मुनिपुङ्गवाः ।
पीडारिभिर्भवेत् कुम्भवर्धन्योश्च शिवं शिवाम् ॥ 390

सन्निवेशं समावाह्य पिण्डीं स्थानगतां नयेत् ।
नयेत्तु त्रिदिनं शान्तिं मन्त्रन्यासपुरस्सरम् ॥

ततस्संप्रोक्षणं कुर्याच्छिल्प्यादिस्पर्शने यदि ।
परिवारविहीने तु भृत्यवर्गस्य नाशनम् ॥

परिवारं समापाद्य प्रतिष्ठां कारयेत्ततः ।
बलिपीठे विहीने तु सर्वदोषावहं भवेत् ॥

संकल्प्य पूर्ववत्पीठं ततस्तत्स्थापनं नयेत् ।
तज्जीर्णे स्फुटिते दाहे पतनादौ सति द्विजाः ॥

शान्तिहोमं तदा कृत्वा संप्रोक्षणमथाचरेत् ।
प्राकारे गोपुरे जीर्णे पतिते स्फोटनादिके ॥ 395

राज्ञो भयकरं प्रोक्तं शान्तिहोमं तदा नयेत् ।
ततस्संप्रोक्षणं कुर्यात् सन्धाने स्फोटनादिषु ॥

कृत्वा गव्येन संप्रोक्ष्य शान्तिमेकाहमाचरेत् ।
कपिकुक्कुटकाद्यैर्वा कपोतैस्सूकरैःश्वभिः ॥

उलूकगृध्रकाकैश्च ऋतुस्त्रीचोरगर्दभैः ।
पतितैः प्रेतकैर्वापि पातकैस्सूतकैरथ ॥

शूद्रजैः पापरोगार्तैर्वान्यैर्वा प्रतिलोमजैः ।
गुर्वादिद्रोहसंयुक्तैर्दीक्षाहीनैर्द्विजातिभिः ॥

चतुष्पादैरथान्यैश्च पक्षिभिर्वा सरीसृपैः ।
हीनजातिभिरन्यैर्वा नरैर्दीक्षान्तरस्थितैः ॥ 400

शिल्पिभिः पाणचण्डालरजकाद्यैरथापि वा ।
स्पृष्टे पीठेऽथ लिङ्गे वा बेरादौ तत्र वासिनः ॥

राष्ट्रे शत्रुजनैर्मर्त्याः पीडयन्ते सर्व एव ते ।
मृद्भाण्डांस्तु त्यजेदेतैः स्पृष्टानासन्नकानपि ॥

गोमयालेपनं कृत्वा पुण्याहं च गुरूत्तमः ।
गव्येन स्नपनं कृत्वा संप्रोक्षणमथाचरेत् ॥

ऋतुस्त्रीपातकाशौचकारकैः स्पर्शिते सति ।
शान्तिहोमादिकं कार्यं प्रागुक्तं रजकैरपि ॥



चण्डालपाणकाद्यैश्चेच्छान्तिकर्मादिकं नयेत् ।
गर्भगेहे प्रविष्टे तु स्नपनं शान्तिहोमयुक् ॥ 405

संप्रोक्षणं विना कुर्यात् कपिकुक्कुटकादिभिः ।
ऋतुस्त्रीपातकाद्यैश्चेत् प्रविष्टं गर्भगेहकम् ॥

तदा संप्रोक्षणं कुर्यात् केवलं प्राक् प्रचोदितम् ।
चण्डालरजकाद्यैश्चेच्छान्तिहोमसमायुतम् ॥

संप्रोक्षणं विधातव्यं क्रमादेवं त्रिधा मतम् ।
शान्तिकर्म दिशाहोमं क्रमात्संप्रोक्षणं नयेत् ॥

त्रिप्रकारैः क्रमादर्धमण्टपस्य प्रवेशने ।
प्रथमे च द्वितीये च चण्डालविहितं तु यत् ॥

प्रायश्चित्तमृतुस्त्रीणां स्पर्शनादौ विधीयताम् ।
प्रतिमामण्डपावेशे त्रिप्रकारैः क्रमेण वै ॥ 410

शान्तिहोमं च मूर्त्याख्यं दिशाहोमं क्रमान्नयेत् ।
दीक्षाहीनान् द्विजातींश्च हित्वा दीक्षान्तरानपि ॥

परिवारालयावेशेऽप्येतदेव समीरितम् ।
कपोतकाकसर्पादिप्रवेशो नात्र दोषभाक् ॥

चण्डालरजकाद्यैश्चेदन्तर्मण्डलवेशनम् ।
कृतं चेन्मूर्तिहोमस्स्याच्छान्तिहोमो द्वितीयके ॥

गोमयालेपनाद्यं च समानं सर्वकर्मसु ।
परिवारालयप्रोक्तं प्रायश्चित्तं महानसे ॥

महानससमा ज्ञेया बलिपीठेषु निष्कृतिः ।
निर्वाणदीक्षया हीनाश्शूद्राद्यास्समयस्थिताः ॥ 415

परार्थं स्थापितं लिङ्गं सुस्थिरं संस्पृशन्ति चेत् ।
कर्तव्यं स्नपनं शान्तिहोमो गर्भप्रवेशने ॥

अर्धमण्डपवेशादौ तस्य दोषो न विद्यते ।
अन्तर्मण्डलसालादौ मालिकादौ च मण्डपे ॥

चिरं चेदुषितं मर्त्यैरशुचिक्षेपणं तु वा ।
कृतं संशोध्य भूमिं तु क्षालयेद्गोमयादिभिः ॥

उपघातानुरूपेण पुण्याहं शान्तिमाचरेत् ।
गर्भेऽर्धमण्डपे बेरमण्डपे बाह्यतः क्रमात् ॥

विष्ठाद्यसृक्स्रवोद्गारश्लेष्ममद्यादिसेचने ।
संप्रोक्षणं दिशाहोमं मूर्त्याख्यं शान्तिहोमकम् ॥ 420

कुर्याद्गोमयशुद्ध्यादि पूर्ववत् कथितं द्विजाः ।
आशौचिनां त्रिवर्णानामन्तर्मण्डलवेशनम् ॥

दीक्षितानां न दोषाय भवेदेवं मुनीश्वराः ।
ततोऽन्येषां प्रवेशे तु पञ्चगव्येन सेचयेत् ॥

तद्बहिर्वेशनं तेषां न दोषाय प्रकल्पते ।
मविह्नधारिणो वाथ शूद्रा वा येऽनुलोमिनः ॥

दीक्षिता वा त्रिवर्णैश्च सदृशास्स्युरदीक्षितैः ।
दीक्षिता मन्त्रहीना वा रुद्रकन्यासमा मताः ॥

पञ्चाचार्याश्च विप्राद्यैर्दीक्षिताश्चेददीक्षितैः ।
प्रासादे गर्भगेहेऽर्धे प्रतिमामण्डपादिके ॥ 425

साले वा मालिकायुक्ते केवले गोपुरेऽङ्गणे ।
बेरे पीठे वृषादौ वा तद्वाग्नि बलिपीठके ॥

परिवारालये कूपे पचनालय एव वा ।
आस्थानमण्डपेऽन्यस्मिन् नृपवेश्मनि वा गृहे ॥

सभायां चूलिकायां वा वल्मीके समुपस्थिते ।
शिथिलीसम्भवे वाथ मधुपञ्जरसम्भवे ॥

बृहत्पिपीलिकाक्षुद्रारक्तस्त्रीक्षुद्रजन्तवः ।
समुत्थिताश्चेद्भूम्यादौ सर्वदोषावहो नृणाम् ॥

पूर्वादितः क्रमेणैषां फलं च शृणुत द्विजाः ।
रोगो भयं वह्निदाहो बन्धुनाशो धनागमः ॥ 430

पुत्रनाशस्सुहृत्प्राप्तिर्धान्यमर्थविनाशनम् ।
मध्यादीशानपर्यन्तं वल्मीकस्य च दर्शने ॥

शिथिलीसम्भवे मध्ये उत्पद्यन्ते सुखं भवेत् ।
तदूर्ध्वं प्राणिनाशस्स्यादिन्द्रभागे भयं भवेत् ॥

सुहृदागमनं वह्नौ भवेदादौ द्विजोत्तमाः ।
राजक्षोभस्तदूर्ध्वं स्यादर्थलाभो यमे भवेत् ॥

तदूर्ध्वे चैव भार्याया मरणं स्वामिनो भवेत् ।
वृद्धिर्निर्ऋतिकाष्ठायामनर्थं स्यात्तदूर्ध्वतः ॥

वारुण्यां धनलाभस्स्यादादौ चोरभयं पुनः ।
वायुदिक्स्था तु कन्यायाः सोमे स्याच्छत्रुभिर्भयम् ॥ 435

तदूर्ध्वे धान्यलाभस्स्यादीशाने स्यान्महाभयम् ।
गृहनाशो भवेद्द्वारे शयनस्थानके मृतिः ॥

तैलाज्यहविषःस्थाने चतुष्पान्नाशनं भवेत् ।
द्वारनाले भवेद्भार्यामरणं मूत्रहारिणी ॥

तिलस्थानगता गोऽजमहिषाद्याख्याश्रिताः ।
दृष्टिरोगो भवेद्ग्राममध्ये देवालयादिके ॥

तदङ्गभूते राष्ट्रस्य भयं लिङ्गे नृपस्य तु ।
सभायां चैत्यवृक्षे वा महावीथ्यां मठेऽपि वा ॥

प्रपारामादिके कूपे वाथ राष्ट्रस्य दुःस्थितिः ।
लिङ्गमूले तु जाताश्चेन्नृपतेर्भयमादिशेत् ॥ 440

मधुनीडसमुत्पत्तावेवमेव फलं भवेत् ।
वल्मीकदर्शनेऽप्येवं द्वारादावीरितं फलम् ॥

खातयोग्यं खनित्वादावापूर्य लवणादिभिः ।
शुद्धमृत्खण्डसहितैर्न यथा पुनरुद्भवः ॥

पुण्याहप्रोक्षणं कृत्वा प्रोक्षयेत् पञ्चगव्यतः ।
संस्थाप्य कलशैर्देवं मूर्तिहोमं समाचरेत् ॥

बाललिङ्गादिके लिङ्गे बेरे पीठेऽथ धाम्नि वा ।
गर्भगेहेऽथवा द्वारि सप्ताहं चैवमाचरेत् ॥

जातेऽर्धमण्टपे बेरमण्टपे त्रिदिनं नयेत् ।
कुर्यादन्यत्र मूर्त्याख्यं शान्तिहोममथैकहम् ॥ 445

राजवाग्नि दिशाहोमं द्विसप्ताहं समाचरेत् ।
मधुनीडं तु चेत्तत्स्थं मधुनीडं विसर्जयेत् ॥

संशोध्य गोमयाम्भोभिस्संप्रोक्ष्यास्त्रजप्तवारिणा ।
देवेशस्नपनं कृत्वा दिशाहोमं तदा नयेत् ॥

वल्मीकस्य पुरा प्रोक्तदिनसंख्यावशेन तु ।
नित्ये नैमित्तिके काम्ये लुप्ते स्नपनकर्मणि ॥

महाव्याधिर्भवेत् कर्तुश्शान्तिहोमं तदा नयेत् ।
पुनश्च स्नपनं कुर्यादिष्टकाले पुरोक्तवत् ॥

वैकल्ये वा तदङ्गस्य राष्ट्रं पापरतं भवेत् ।
अघोरं त्रिशतं जप्त्वा सम्पूर्णस्नपनं नयेत् ॥ 450

विहीने स्थण्डिलाङ्गे वा दुःस्थितिर्भुवि जायते ।
हुत्वाघोरं सहस्रं तु यथोक्तं स्थण्डिलं नयेत् ॥

कुम्भादयो विहीनाश्चेत् प्रमाणविहिताश्च वा ।
जायते कलहो राष्ट्रे जप्त्वाघोरं सहस्रकम् ॥

पुनश्च स्नपनं कुर्यात् कुम्भाब्जकरकेतरैः ।
यदि तन्मात्रकैरेव द्विगुणद्रव्यसंयुतैः ॥

यदा मानोज्झिताः कुम्भाः पूर्वाघोरशतत्रयम् ।
द्विशतं च शतं कुम्भे वर्धन्यां कलशेषु च ॥

क्रमाज्जपेद् गुरुर्मन्त्री तेषां मानप्रसिद्धये ।
स्थापितश्शिवकुम्भो वा वर्धनी कलशोऽथवा ॥ 455

भेदादिसहितोऽद्रव्यपूर्णो वा यदि जायते ।
तदा राज्ञो महिष्याश्च कर्मिणां दोषदो भवेत् ॥

तदा पञ्चशतं मन्त्री द्विशतं च शतं क्रमात् ।
जपेदघोरमन्त्रेण सदेवे द्विगुणं जपेत् ॥

कुम्भाद्यमन्यमादाय तत्तद्द्रव्ययुतं न्यसेत् ।
शरावशङ्खहैमादिपात्रे वा ब्रह्मसूत्रजे ॥

संस्थाप्य स्नापयेद्देवं शतघोरजपान्वितम् ।
सूत्रैर्वेष्टिताः कुम्भपूर्वाश्चेच्छत्रुवर्धनम् ॥

अघोरेण जपः पश्चात् कर्तव्यश्शतसंख्यया ।
तथैव वेष्टितास्स्वल्पतन्तुना निष्कृतिर्मता ॥ 460

पिधानलोपे घोरेण शतसंख्यं जपेद्गुरुः ।
कूर्चे विहीने देवानां सन्निधिर्नात्र विद्यते ॥

तत्कूर्चादिविपर्यासे तद्वदेव फलं मतम् ।
तदा रुद्रा जपेन्मन्त्री द्विशतं त्रिशतं तु वा ॥

रत्नहेमाद्यभावे तु निर्धनः स्थपतिर्भवेत् ।
तथैव वस्त्रलोपे च सहस्रं तु जपेद्बुधा ॥

पुनश्च स्नपनं कुर्यादुक्तरत्नादिभिर्यथा ।
गन्धादिद्रव्यलोपे तु राष्ट्रे कलहमादिशेत् ॥

तदाघोरशतं जप्त्वा तद्द्रव्यं योजयेच्छिवे ।
पुण्याहप्रोक्षणे हीने जपेद्घोरं शतं पुनः ॥ 465

कुम्भादावकृतेज्या चेदकृतं स्नपनं भवेत् ।
शान्तिहोमं तदा कुर्यान्मन्त्रन्यासेऽकृते यदि ॥

जपेद्घोरशतं मन्त्री देवसन्निधिहेतवे ।
आषाढादिषु मासेषु कृत्तिकान्तेषु पञ्चसु ॥

पवित्रारोहणे हीने वर्तन्ते तत्र याः क्रियाः ।
तास्सर्वा निष्फला एव प्रासादे वा गृहादिके ॥

देवं संपूज्य विधिवद् दिशाहोमं तु कारयेत् ।
इष्टमासे ततः कुर्यात् पवित्रारोहणं परम् ॥

दमनारोहणेऽप्येवं कीर्तितो विधिरग्रजाः ।
दीपावलिर्विहीना चेत् पीडयन्ते शत्रुभिर्नराः ॥ 470

मूर्तिहोमं तदा कृत्वा नयेत्तां लब्धमासके ।
राष्ट्रक्षोभेऽरिचोराद्यैः परस्परविरोधतः ॥

बेरादिबाधशङ्कायां गुहायां वा जलेऽपि वा ।
भूमौ वा रक्षयेत्तस्मिन् क्रियामेनां विधाय च ॥

संपूज्य बेरं गन्धाद्यैस्तदग्रे स्थण्डिले कृते ।
कुम्भं च वर्धनीयुक्तं कलशैरावृतं न वा ॥

सूत्रादिसहितं न्यस्यावाह्य सोमं महेश्वरम् ।
विद्येश्वरसमोपेतं स्वस्वमन्त्रैस्समर्चयेत् ॥

तत्पूर्वे स्थण्डिले कृत्वा शिवाग्निं शिवमन्त्रतः ।
शतमर्धं मनोन्मन्या ब्रह्मभिस्त्वङ्गसंयुतैः ॥ 475

विद्येश्वरसमायुक्तं प्रत्येकं शतहोमयुक् ।
समिदाज्यान्नसंयुक्तमन्ते पूर्णाहुतिं नयेत् ॥

कुम्भे च करके पीठे मृदादिपरिकल्पिते ।
इष्टकारचिते पीठे लिङ्गे वा विन्यसेन्मनुम् ॥

तत्कुम्भस्थजलेनैव पीठाद्यं स्नापयेद्गुरुः ।
पीठस्याधःस्थले देवीं पिण्डिकायां तु वा न्यसेत् ॥

तदर्थं प्रत्यहं पूजां लिङ्गे पीठेऽथवा नयेत् ।
एतद्विधानं बेराणां भवेत्सन्निधिकारणम् ॥

पुष्पशून्यशिरोलिङ्गं यस्य राष्ट्रे व्यवस्थितम् ।
क्षयं तस्यावहेन्नित्यं वृष्टिवातातपादिभिः ॥ 480

सेवितं भग्नधामस्थं मृगपक्षिसरीसृपैः ।
पशुभिर्बाधितं लिङ्गं देवतान्तरबाधितम् ॥

कर्तारं बाधते नित्यं शत्रूनपि च बाधते ।
तस्मात्प्रोक्षणकर्माद्यमचिरात्कारयेन्नृपः ॥

ततः प्रभृति पूजां च कारयेत्तस्य वृद्धये ।
उत्तमां मध्यमां हीनां कनिष्ठामथवा द्विजाः ॥

एककालं द्विकालं वा त्रिकालं जपसंयुतम् ।
गन्धोपेतं विशिष्टं स्यात् सधूपं तत्परं मतम् ॥

सदीपं चेत् ततश्शिष्टं सनैवेद्यं ततस्तथा ।
सताम्बूलं ततः श्रेष्ठं सबलिश्शस्यते ततः ॥ 485

साग्निकार्यं ततः पूज्यं सोत्सवेज्या ततो वरा ।
ससौख्या तत उत्कृष्टा ज्ञात्वैवं प्रत्यहं नयेत् ॥

जलं पुष्पं च पत्रं वा प्रत्यहं परिकल्पयेत् ।
वृष्ट्यादिबाधिते लिङ्गे तस्य प्रासादमाचरेत् ॥

भग्ने धाम्नि नवीकुर्यान्मृगाद्यैर्बाधितेऽपि च ।
कवाटार्गलयोगाद्यैस्तस्य रक्षां समाचरेत् ॥

पूर्वस्थितस्य लिङ्गादेर्बाधके स्थापिते यदि ।
ब्रह्मादिबेरं तत्तस्मादन्यत्र स्थापयेत्सुधीः ॥

शिवक्षेत्रे शिवारामे शिवग्रामे द्विजोत्तमाः ।
विष्णुर्विरिञ्चिश्शक्रश्च बुद्धस्त्वार्हत एव वा ॥ 490

अन्यदेवादयो ये च स्वप्रधाना द्विजोत्तमाः ।
न स्थाप्याः स्थापितांश्चापि दूरदेशे निवेशयेत् ॥

तेन राज्ञो भवेच्छान्ती राष्ट्रस्यापि जनस्य च ।
व्यतिरिक्तं शिवक्षेत्रात् स्थापयेद्वैष्णवादिकम् ॥

तत्स्थानं देवदेवस्य शिवस्यामिततेजसः ।
योग्यमेवेति निर्दिष्टं शिवस्सर्वाधिपो यतः ॥

वैष्णवं वाथ वैरिञ्चं बौद्धमार्हतकं तथा ।
सौरं वा शाक्रमेवं वा वह्नेः स्थानं यमस्य वा ॥

निर्ऋतेर्वरुणस्यापि वायोर्वैश्रवणस्य वा ।
पार्वत्या वाथ दुर्गायाः क्षेत्रपस्येन्दुमूर्तिनः ॥ 495

ज्येष्ठायाश्च श्रियश्चैव भूम्या वा च स्मरस्य च ।
गणपस्कन्दनन्दीशवसूनां नागपस्य च ॥

मुनीनां च मनुष्याणामसुराणां द्विजोत्तमाः ।
कल्पितं स्थानमीशस्य योग्यमेव न संशयः ॥

सर्वस्मादधिकं येन प्रवदन्ति पिनाकिनम् ।
साधारणं स्मरन्त्येनं ते यान्ति नरकार्णवम् ॥

ब्रह्मा च भगवान् विष्णू रुद्रश्चेति समा इति ।
ते तु दुर्मतयः प्रोक्तास्सुचिरं संचरन्त्यलम् ॥

रौरवादिषु नैतेषां मोक्षस्सर्वात्मना मतः ।
मदेकशरणा ये तु तैः पूज्योऽहं न चापरैः ॥ 500

अशीतेरूर्ध्ववर्षो वा बालो वाप्यूनषोडशः ।
प्रायश्चित्तार्धमर्हन्ति स्त्रियो वा व्याधिपीडिताः ॥

तत्रापि च परिक्लेशं ज्ञात्वार्धार्धं प्रयोजयेत् ।
सुदुष्करं स्वयं कर्तुमक्षमो द्विगुणोऽन्यतः ॥

देशं कालं वयश्शक्तिं जातिं भक्तिं क्रियाक्रमम् ।
सुविचार्य प्रदातव्यं नोपवासो रुजान्विते ॥

प्रायश्चित्तासमर्थस्य पितृभ्रात्रादिबान्धवैः ।
तद्विभज्य विधातव्यं द्विगुणं च परैर्जनैः ॥

बालावलानां वृद्धानामातुराणां च पादतः ।
प्रायश्चित्तं प्रदातव्यं यदि भक्तास्सदाशिवे ॥ 505

ऊनैकादशवर्षस्य पञ्चवर्षात्परस्य च ।
प्रायश्चित्तं चरेद्भ्राता पिता वान्यत् सुहृज्जनः ॥

अतो बालनरस्यास्य नापराधो न पातकम् ।
राजदण्डो न चैवास्ति प्रायश्चित्तं न विद्यते ॥

देश आदिश्यते येन देशिकस्त्विति कथ्यते ।
देशाश्च बहवश्शास्त्रे मुक्तिस्थानं परं मतम् ॥

भोगस्थानं च देहस्याद्यथा स्थानान्तराणि च ।
हृत्कण्ठतालुभ्रूमध्यब्रह्मरन्ध्रं क्रमाद्भवेत् ॥

नाभिर्मेढ्रस्य मूलस्य स्थानं देशोऽत्र कथ्यते ।
सकृत्सन्ध्याविलोपे तु सद्योजातं शतं जपेत् ॥ 510

प्रतिसन्ध्यं शतं धातुस्सन्ध्यालोपे त्वकामतः ।
कामतस्तूपवासश्च लुप्ते देवार्चने यदा ॥

एककालार्चके वापि द्विकालाद्यर्चकेऽपि वा ।
एकाहेऽघोरसाहस्रजपस्तु ज्ञानतो भवेत् ॥

उपवासोऽपि विज्ञेयः कामतस्त्वननुष्ठिते ।
बहुकालार्चकस्यापि द्विकालादिविलोपने ॥

लुप्तसंख्यावशेनैव प्रायश्चित्तं समाचरेत् ।
द्विदिनादिविलोपे तु बहुरूपसहस्रतः ॥

प्रत्यहं त्रिशतार्धं स्यात् पक्षपूजाविलोपने ।
अयुताघोरजापस्स्यात्तद्वृद्ध्या प्रतिमासकम् ॥ 515

संवत्सरात्तदूर्ध्वं तु दीक्षायाश्शुद्धिरिष्यते ।
स्वेष्टलिङ्गे परिभ्रष्टे नष्टे दग्धे हृतेऽपि वा ॥



नरवानरकाकाद्यैः स्पृष्टेऽघोरजपात्ततः ।
लिङ्गान्तरं प्रतिष्ठाप्य भवेच्छुद्धो न संशयः ॥

हस्तादेः पतिते लिङ्गे त्वङ्गुलात्तु द्विवृद्धितः ।
सहस्राघोरवृद्धिस्स्यात् सहस्रात् प्रभृति क्रमात् ॥

साधारे पतिते लिङ्गे ताले तालेऽयुतं जपेत् ।
द्विगुणं तु निराधारे कल्पनीयं गुरूत्तमैः ॥

एकहस्ताद्द्विहस्तान्तं पतने त्वेवमीरितम् ।
जप्त्वा दशसहस्रादि पञ्चगव्यामृतादिना ॥ 520

संस्नाप्य पूजयेद्देवं विशेषेणार्चयेद्बुधः ।
अव्यङ्गत्वे तदुद्दिष्टं लिङ्गादौ द्विजसत्तमाः ॥

द्विहस्तादूर्ध्वतः पाते त्वव्यङ्गे लक्षजापतः ।
संस्कारेण विशुद्धिः स्यात् प्रतिष्ठा वात्र संमता ॥

अकामतो यदा लिङ्गं विशीर्णं पिण्डिकाथवा ।
प्रागुक्तद्विगुणं कुर्यात् कामतो निष्कृतिर्नहि ॥

ब्राह्मणाद्यैस्तु संस्पृष्टे शिवसंस्कारवर्जितैः ।
क्रमाज्जपेदघोरस्य शतवृद्ध्या नरोत्तमः ॥

लिङ्गे पादेन संस्पृष्टे लङ्घिते वायुतद्वयम् ।
पादलग्नरजःस्पृष्टे बहुरूपायुतं जपेत् ॥ 525

श्लेष्माद्युपहते लिङ्गे तद्युक्तोदकादिभिः ।
त्र्ययुतं द्व्ययुतं कुर्याद् बहुरूपं नरोत्तमः ॥

मूत्रोदकेन संस्पृष्टे जपेत् सार्धायुतद्वयम् ।
रक्तमूत्ररजश्शुक्लदूषितेऽयुतपञ्चकम् ॥

तत्संयुक्तोदकस्पर्शात् पादहीनं जपेदिदम् ।
विष्ठास्पर्शे तु लक्षं स्यात् पादहीनं तदम्भसा ॥

तद्वन्निर्माल्यगर्ते तु पतनाच्छुद्धिमादिशेत् ।
विष्ठादिगर्तपाते तु लक्षमर्धाधिकं जपेत् ॥

स्पृष्टेऽनुलोमजैर्लिङ्गे कुर्यान्मात्रं कुलोचितम् ।
प्रतिलोमादिभिः स्पृष्टे लक्षमावर्त्य शुद्ध्यति ॥ 530

वामदक्षादिमार्गस्थैः स्पृष्टे लिङ्गेऽयुतं जपेत् ।
चण्डालपाणकाद्यैश्च स्पृष्टे शुद्धिः प्रतिष्ठया ॥

लक्षेण स्थिरमुन्मूल्य स्थापयेच्च तदेव हि ।
नित्यहोमे विलोपे च प्रायश्चित्तं तु नित्यवत् ॥

अष्टम्यां वा चतुर्दश्यां पर्वण्ययनयोरपि ।
विषुग्रहणयोर्नित्यलोपे कुर्याच्चतुर्गुणम् ॥

अन्यपुण्यदिनेष्वेवं तच्चतुर्गुणमाचरेत् ।
प्रागुक्तनिष्कृतिं वह्निनिर्वाणे तां समाचरेत् ॥

अदत्ते च बलौ कुर्याच्छिवस्याष्टाधिकं शतम् ।
व्रतस्यान्यक्रियायाश्च नियमस्य च लोपने ॥ 535

गायत्र्यष्टशतेनैव विशुद्धिमधिगच्छति ।
अविधाय पवित्रं तदाषाढादिषु पञ्चसु ॥

लक्षत्रयमघोरस्य जप्त्वा चान्द्रायणं चरेत् ।
पवित्रारोहणत्यागे प्रायश्चित्तमिदं मतम् ॥

अन्यमासे कृते तस्मिञ्जपमात्रं विधीयते ।
जपोऽपि लक्षमात्रं स्यान्नात्र चान्द्रायणं मतम् ॥

शतद्वयजपाच्छुद्धिरर्घ्यपात्रे विसर्जिते ।
सहस्रेण विनाशे तु तदर्धात् परिवर्तिते ॥

स्फोटे वा त्वक्षसूत्रस्य शुद्धिर्लिङ्गोक्तवादतः ।
नवसूत्रस्य विच्छेदे सहस्रं जपमाचरेत् ॥ 540

शतं स्याज्जीर्णसूत्रस्य हस्तपातात्तथा मतम् ।
अक्षमालां कराद्भ्रष्टां क्षालयेद्गन्धवारिणा ॥

गायत्र्याः शतजापोऽपि सैव प्रागुक्तकर्मणि ।
घण्टादोषे तु लिङ्गोक्तादष्टमांशाच्छुचिर्भवेत् ॥

पूजोपकरणं पद्रूषां स्पृष्टं पीठादिकं यदा ।
शतद्वयमघोरस्य कामतस्त्वयुतं जपेत् ॥

प्राण्यङ्गधूपदाने च पञ्चमस्य शतं जपेत् ।
केशमांसास्थिकीटादिदुष्टनैवेद्यदर्शने ॥

अघोरस्यायुतं कामादकामात्तु शतं जपेत् ।
नित्यनैवेद्यमानस्य ह्रासे नैमित्तिकस्य वा ॥ 545

अयुतं घोरमन्त्रस्य जप्त्वा शुद्धिमवाप्नुयात् ।
पादेनाकामतः स्पृष्ट्वा गुरुं देवं शिवागमम् ॥

द्व्ययुतं घोरमन्त्रस्य कामतष्षड्गुणं जपेत् ।
महेशगुरुचण्डाज्ञाभङ्गे लक्षेण शुद्ध्यति ॥

एतदर्थार्जितद्रव्यभक्षणात् पादवर्जितम् ।
निर्माल्यभक्षणे घोरं प्रमादादयुतं जपेत् ॥

भक्षणेन समं दानं स्यात् तदर्धमुपेक्षणे ।
अथवा भक्षणे कामात् प्रजपेद्ब्रह्मपञ्चकम् ॥

यावत्सहस्रमध्यर्धं कामतो दीक्षया शुचिः ।
निर्माल्यलङ्घनं कृत्वा दक्षिणार्धायुतं जपेत् ॥ 550

लङ्घनेन समं स्पर्शे समं विक्रयभक्षणे ।
देवस्वं देवताद्रव्यं नैवेद्यं च निवेदितम् ॥

चण्डद्रव्यं च निर्माल्यं निर्माल्यं षड्विधं स्मृतम् ।
ग्रामादीशस्य देवस्वं देवद्रव्यं पटादिकम् ॥

नैवेद्यं कल्पितं तस्मै देवोच्छिष्टं निवेदितम् ।
चण्डद्रव्यं तु तद्दत्तं निर्माल्यं प्रेरितं बहिः ॥

पिण्डिकास्थं न निर्माल्यमपि देवे विसर्जिते ।
क्रव्यादो जायते दानान्मातङ्गस्तस्य भक्षणात् ॥

लङ्घने सिद्धिहानिश्च विक्रये शबरो भवेत् ।
स्पर्शने जायते क्लीबं निर्माल्यस्य न संशयः ॥ 555

यन्निर्माल्येन संस्पृष्टं तद्भुजा पुरुषेण वा ।
पादोनं तत्र पूर्वोक्तं स्पर्शलङ्घनभक्षणैः ॥

भक्षणं द्विविधं प्रोक्तमनिवेद्य तदन्यथा ।
देवदेवाय तत्राद्यं देवग्रामादिसम्भवम् ॥

व्रीह्यादि येन केनैवोपाधिनादाय भक्षणम् ।
करोति यस्स संमूढो मद्धनस्तेयकृन्मतः ॥

मदर्थं कल्पितं वाथ तण्डुलं चौदनं तु वा ।
यः प्रयच्छति वा भुङ्क्ते सोऽपि स्तेयकृदुच्यते ॥

त एवातीव दुष्टा मद्भक्षितादपि दोषदाः ।
तथैवेति चतुष्काष्ठा मद्भुक्तिस्त्वतिदोषदा ॥ 560

नैवेद्यं कल्पयित्वा तु शिवायेति तदूर्ध्वतः ।
निवेद्य मह्यं तच्छिष्टं भुङ्क्ते प्रत्यहमादरात् ॥

सोऽयं मत्सदृशः प्रोक्तश्चरुभुग्यस्तथा भवेत् ।
मद्भुक्तं चण्डभुक्तं वा यो लोभाद्भक्षयेन्नरः ॥

स पापी दुर्मतिः प्रोक्तः पूर्वाभ्यां नातिरिच्यते ।
भक्षयेद्यो नरो भक्त्या पवित्रमिति शंसितम् ॥

शुद्धात्मा ब्राह्मणस्तस्य पापं क्षिप्रं विनश्यति ।
अशुद्धात्माशुचिर्लोभान्मद्भुक्तं पावनं नरः ॥

भक्षणे नाशमायाति रसभोक्ता यथा द्विजाः ।
मद्देहधारिणो लोके देशिका मत्परायणाः ॥ 565

मदेकशरणास्तेषु योग्यं नैवान्यजन्तुषु ।
तस्मान्मदीयं निर्माल्यं भुक्त्वा निष्कृतिमाचरेत् ॥

सर्वेषां देशिकादीनां चातुर्वर्णोद्भवात्मनाम् ।
प्रायश्चित्तमहं वक्ष्ये श्रूयतां द्विजसत्तमाः ॥

मौनं त्रिषवणस्नानं शिवाग्निगुरुपूजनम् ।
अघोरायुतजापश्च गोमयालिप्तमण्डले ॥

पञ्चगव्यं चरुं दन्तधावनं च क्रमाद्भजेत् ।
प्रतिरात्रं चरेदेतद्व्रतं पापविशुद्धये ॥

अग्निकार्यं विना वापि जपमात्रं विधीयताम् ।
एतद्व्रतं समाख्यातं दशवृद्धमनुव्रतम् ॥ 570

उपव्रतं तथा तस्माद्दशवृद्धं महाव्रतम् ।
महापातकिनां प्रोक्तं महाव्रतमिहागमे ॥

अन्त्यादिपातकानां तु व्रतमन्वाद्यमीरितम् ।
ब्रह्महत्या सुरापानं स्तेयं गुर्वङ्गनागमः ॥



महान्ति पातकान्यत्र तत्संयोगेन पञ्चमः ।
कामतस्त्वेवमाख्यातमज्ञानादर्धमिष्यते ॥

महाव्रतपादं तु क्षत्रियस्य वधे कृते ।
तदर्धं वैश्यजातेस्तु तदर्धं शूद्र इष्यते ॥

अनुलोमिषु सर्वेषु मातृप्रोक्तं समाचरेत् ।
शूद्रजेषु च तेष्वर्धं तदर्धं प्रतिलोमिषु ॥ 575

दीक्षितेषु च सर्वेषु द्विगुणं समुदाहृतम् ।
अभिषिक्तस्य हनने दीक्षितोक्तं व्रतं मतम् ॥

पानसं द्राक्षमाधूके खार्जूरं गौल्यमैक्षवम् ।
माध्वीखण्टकमृद्वीकमैरेयं नालिकेरजम् ॥

सामान्यानि विजानीयाद् मद्यान्येकादशैव तु ।
द्वादश्येव सुरा पैष्टिस्सर्वेषामधमा स्मृता ॥

पीत्वा पैष्टिं सुरां विप्रो महाव्रतमथाचरेत् ।
एकादशसुरापाने कुर्याद्व्रतदशांशकम् ॥

सकृत्पैष्टिं प्रमादेन पीत्वा विप्रो द्विजोत्तमाः ।
गोमूत्रयवकाहारो दशरात्रेण शुद्ध्यति ॥ 580

द्विवारादिप्रयोगेण दिनवृद्धिः प्रशस्यते ।
सर्वेषां क्षत्रियादीनां पूर्वोक्तन्याय ईरितः ॥

सुवर्णस्यापहारेण शतादभ्यधिके वधः ।
क्षत्रियादिषु संप्रोक्तो विप्रस्य न वधः क्वचित् ॥

निष्कस्तेयेऽयुतं पञ्चनिष्कान्तं लक्षमीरितम् ।
दशलक्षं जपान्तं तु तदूर्ध्वं दशवृद्धितः ॥

शतलक्षान्तमुद्दिष्टं ब्राह्मणे क्षत्रियादिषु ।
शतमर्धार्धहासेन स्वर्णस्तेये समीरितम् ॥

रजतस्यापहरणे धान्यस्य द्विगुणं मतम् ।
सुवर्णे रजते धान्ये शतमेकादशोत्तरम् ॥ 585

दरिद्रस्यानुरूपेण द्विगुणाधिकमेव हि ।
गुरुतल्पं विहायान्यस्त्रीयोगो नैव पातकम् ॥

याजनं योनिसंबन्धं स्वाध्यायं सहभोजनम् ।
पातकैस्सह चेत् कुर्यात् सोऽपि तत्सम इष्यते ॥

वत्सरान्तं तदर्वाक् चेदर्धं पादं समाचरेत् ।
अनुपातकशुद्ध्यर्थमनुव्रतमुदाहृतम् ॥

मातृष्वसा च भगिनी स्वसुता च पितृष्वसा ।
आसां च गमनं विप्रास्त्वनुपातकमीरितम् ॥

विप्रस्त्रीगमनं बन्धोराश्रितस्य च यो वधः ।
चण्डालपाणरजकोच्छिष्टभोगोऽनुपातकम् ॥ 590

लिङ्गस्य पिण्डिकायाश्च प्रतिमादेर्द्विजोत्तमाः ।
द्वेषेणोत्पाटनं कृत्वा पातकादधिको भवेत् ॥

तदुक्तं द्विगुणं कुर्याद्राजचोरभयादिषु ।
दुःस्थाननिम्नदोषादौ परिहर्तुं तदुद्धृतम् ॥

संस्थाप्य विधिनाघोरं लक्षमावर्त्य शुद्ध्यति ।
देवक्षेत्रापहरणं देवोपहरणाहृतिः ॥

शिवागमापहारश्च शिवलिङ्गापहारणम् ।
शैवादीनां चतुर्णां तु दण्डनिर्णय एव च ॥

उपपातकशुद्ध्यर्थमुपव्रतमुदाहृतम् ।
पितृव्यसखिशिष्यस्त्रीस्नुषाश्च शरणागताः ॥ 595

राज्ञी प्रव्रजिता धात्री साध्वी वर्गोत्तमा च या ।
सगोत्रा मातुलानी च समानप्रवरा च या ॥

तासां संगमनं चोपपातकं समुदाहृतम् ।
परिवित्तिः परिवेत्ता तयोर्याजनमेव च ॥

तयोर्दानं च कन्यायाः शिवाग्न्यागमनिन्दनम् ।
गुरोश्च प्रतिकूलत्वं तथा निक्षिप्तसंग्रहः ॥

पितृमातृगुरुत्यागः कूटसाक्ष्याभिशापने ।
उक्तित्वं पतितश्चेति तद्धीनं वाथ तद्धनम् ॥

भूवेश्मरत्नवापीनां कुजानामपहर्तृता ।
वापीकूपतटाकादेर्दूषणं तूपपातकम् ॥ 600

गजाश्वनरनार्युष्ट्रमहिषाणां खरोष्ट्रयोः ।
उपव्रतं वधे कुर्यात्तदर्धं हरणे भवेत् ॥

तन्मांसभक्षणेऽर्धं स्यात्तद्विष्ठास्पृष्टिभक्षणे ।
तत्पादं स्यात्तदालीढस्पर्शादौ स्नानमाचरेत् ॥

तदालीढान्नभुक्तौ च विष्ठास्पृष्टयर्धमाचरेत् ।
तद्रोमाद्यस्थ्यादिसंस्पर्शे स्नानमेव विधीयते ॥

उपव्रतस्य द्विगुणं गोघ्नः कुर्यात्तदर्धकम् ।
गोहर्ता तस्य मांसाशी तत्समानं समाचरेत् ॥

गोष्ठे वसन् गोऽनुगामी गोप्रदानेन शुद्ध्यति ।
गवामभावे तन्मूल्यं दातव्यं पुष्कलं तथा ॥ 605

गर्भिणीं कपिलां दोग्ध्रीं होमधेनुं च सुव्रताम् ।
रोधादिना सादयित्वा द्विगुणं व्रतमाचरेत् ॥

पादमेकं चरेद्रोधे द्वौ पादौ बन्धने चरेत् ।
योजने पादहीनं स्याच्चरेत् सर्वं निपातने ॥

औषधं लवणं चैव स्नेहपिण्याकभोजनम् ।
अतिरिक्तं न दातव्यं काले स्वल्पं तु दापयेत् ॥

न नालिकेररज्ज्वा च न च मौञ्जेन बन्धयेत् ।
बलाभावाद्विपद्येत गौश्चरन्ती कथंचन ॥

जले वा पल्वले मग्ना मेघविषद्हतापि वा ।
श्वभ्रे वा पतिताकस्माच्छ्वपचेनापि भक्षिता ॥ 610

शीतवाताहता चेत्स्याद्बन्धनेन मृतापि वा ।
शून्यागारे त्वटव्यां वा गृहदाहेऽपि पादपात् ॥

उपेक्षयैस्तु तद्विष्ठाभक्षणाद्यं परं मतम् ।
कन्यानां दूषणं चैव परभार्यात्मविक्रयौ ॥

नास्तिक्यमभिचारश्चाप्ययाज्ययाजनमेव च ।
प्रतिलोमान्त्यजोच्छिष्टभोजनं चोपपातकम् ॥

मद्यभाण्डस्थितं द्रव्यं मद्यस्पृष्टं तु वा भवेत् ।
तस्य पानादिना विप्रस्त्वेतद्द्विगुणमाचरेत् ॥

भुक्त्वा शूद्रस्य चाशौचे विप्रस्तूपव्रतार्धभाक् ।
वैश्याशौचेऽर्धभाग्विप्रः क्षत्राशौचे तदर्धभाक् ॥ 615

नृपशूद्रविडाशौचे भुक्त्वा विप्रोऽर्धमाचरेत् ।
वैश्यस्शूद्रगृहे भुक्त्वा क्षत्रियोक्तार्धमाचरेत् ॥

स्वाशौचभोजने कृत्यमन्त्येष्टावेव कीर्तितम् ।
स्वोत्कृष्टाशौचभुक्त्या तु स्वगृहाशौचभुक्तितः ॥

पादोनं च द्विपादोनं त्रिपादोनं क्रमाच्चरेत् ।
शूद्रस्त्वेवं तदन्यौ चेत् कुर्यातां विधिनामुना ॥

विण्मूत्रभक्षणे विप्रः कुर्यादितदुपव्रतम् ।
रजस्वलामुखास्वादे तथा चण्डालयोषिताम् ॥

रजकादेश्च पैशुन्यं कृत्वा तद्वदुपव्रतम् ।
विप्रपातकशुद्ध्यर्थं व्रतमत्र समीरितम् ॥ 620

चण्डालपाणरजकस्त्रीगमे द्विगुणं मतम् ।
व्रतमात्रमुदक्यास्तु शुद्ध्यर्थं विप्र आचरेत् ॥

विप्रस्त्रीगमने चैवोपव्रतं तु समाचरेत् ।
पादपादविहीनं तु क्षत्रादित्रितयं चरेत् ॥

ब्राह्मणी शूद्रसंयुक्ता पतिता सप्रजा यदि ।
विप्रजोपव्रतार्धं तु सकृदागमने चरेत् ॥

उपव्रतं तु मासोर्ध्वं षण्मासोर्ध्वमनुव्रतम् ।
महाव्रतं समोर्ध्वं स्यात्त्र्यब्दोर्ध्वं पतितैव सा ॥

एतदर्धं तु राज्ञी चेद्वैश्यस्त्री चेत्तदर्धकम् ।
शूद्रस्त्री शूद्रसंयोगात् तदर्धं तु समाचरेत् ॥ 625

शूद्रश्चैव तथा कुर्यात् प्रायश्चित्तं विशुद्धये ।
कन्यासंगमने कुर्यात् प्रागुक्तं द्विगुणं द्विजाः ॥

वैश्यश्चेदर्धभाक्तस्मादर्धभाक् क्षत्रियो यदि ।
तदर्धभाग् द्विजः प्रोक्तो विप्रादिस्त्रीसमागमे ॥

अनुलोमास्स्वमातृकमाचरेयुः स्वशुद्धये ।
प्रतिलोमेषु निर्दिष्टं शूद्रोक्तद्विगुणं व्रतम् ॥



अमानुषीषु पुरुषः प्रतिलोमिष्वयोनिषु ।
रेतस्सिक्त्वा जले वापि व्रतमब्दं समाचरेत् ॥

नदीशैलूषिकीवेणुजीवनीगमने व्रतम् ।
पतितान्यस्त्रियं गत्वा चण्डालस्यार्धमाचरेत् ॥ 630

अन्तर्वत्नी भवेत् स्त्री चेत् प्रायश्चित्तमशक्यतः ।
गर्भे विनिःसृते कुर्याद् द्विगुणं प्रागुदीरितम् ॥

न प्रचारं गृहे कुर्यान्न चान्नादिप्रसाधनम् ।
न शयीत समं भर्त्रा न च भुञ्जीत बन्धुभिः ॥

न च स्नात्वा च भुक्त्वा च गत्वा चैव दिवा स्त्रियम् ।
शेफं भ्वाप्यसावैश्च व्रतमेतत्समाचरेत् ॥

उच्छिष्टं प्रतिलोमानां भुक्त्वा कुर्याद्व्रतं द्विजाः ।
उच्छिष्टं तु समानानां भुक्त्वोपोष्य विशुद्ध्यति ॥

सहस्रमयुतं चैव जपो मध्यमहीनयोः ।
द्वित्रिरात्रोपवासश्च सवर्णोच्छिष्टभोजने ॥ 635

जघन्योच्छिष्टसंस्पर्शादेवं शतगुणं भवेत् ।
जपोपवासवृद्धिःस्यादेकरात्रादितः क्रमात् ॥

शैवब्राह्मणयोर्निन्दा मद्यपस्त्रीनिषेवणम् ।
स्त्रीहिंसौषधजीवा च वार्धुष्यं मूल्यकर्म च ॥

सर्वकार्येष्वधीकारो महायन्त्रप्रवर्तनम् ।
स्वाध्यायाग्निसुतानां च परित्यागश्च पातकम् ॥

तिलव्रीहिकुलुत्थानां शालीनां मुद्गमाषयोः ।
निष्पावाढकशिम्बानां सर्षपस्य यवस्य च ॥

कङ्कुप्रियङ्गुनीवारकोद्रवादेर्द्विजोत्तमाः ।
सत्वचां वित्वचां वापि हरणेऽर्धं व्रतस्य च ॥ 640

यानशय्यासनानां च कांस्यरीतिशिलायसाम् ।
त्रपुसीसकताम्रादेर्वस्त्रस्य हरणे कृते ॥

व्रतमात्रं समुद्दिष्टं त्रिगुणं स्तेयमोक्षणम् ।
वानरश्वमृगाणां च विष्ठाशनवराहयोः ॥

दुष्टादुष्टमृगाणां च शिवाय वा वधे कृते ।
शशस्य शिशुमारस्य शङ्खस्य मकरस्य वा ॥

हनने च व्रतं कुर्यात् तत्पापस्य विशुद्धये ।
उलूककङ्कगृध्राणां काकस्य जलबर्हिणः ॥

कुक्कुटश्येनभासानामथ हंसमयूरयोः ।
पिङ्गलस्तनेभ्योश्च सरटाशतपत्रयोः ॥ 645

कपोतस्य बकस्याथ टिट्टिभस्य जराङ्गिणः ।
पिङ्गल्याश्चक्रवाकस्य कौशिकाय शुकस्य च ॥

मण्डूको गौश्च गौधा च कृकलासश्च मूषिकः ।
नागरचुचुन्दरी मत्स्यः कूर्मः कर्कटकाह्वयः ॥

वृश्चिकश्चैव शम्बूकश्शलभो मक्षिका तथा ।
पिपीलिका च भूनागो लूताद्या ये च कीर्तिताः ॥

भूगता जलजा वाथ ये चान्ये त्वन्तरिक्षगाः ।
तेषां कृत्वा वधं विप्रो व्रतपादं समाचरेत् ॥

अनस्थिमत्सु चैतेषु शताघोरजपो मतः ।
अन्येनापि प्रकारेण प्रायश्चित्तमिहोच्यते ॥ 650

हत्वाकामाद्द्विजस्सद्यो गवां गोष्ठे जपेत्तदा ।
पीत्वाकामात् सुरां वामं शिवहर्म्ये जपेत्तदा ॥

कृत्वा स्तेयमकामाच्च घोरं पितृवने जपेत् ।
गुरुस्त्रीगमने वक्त्रमकामात्तु जपेद्वने ॥

योगं कृत्वा समस्तैस्तु नगाग्रे पञ्चमं जपेत् ।
प्रकाशे कामतस्तस्मिंल्लक्षमावर्त्य शुद्ध्यति ॥

अकामाद्वा रहस्ये च सहस्राच्छुद्धिरिष्यते ।
कामतस्तु रहस्ये च जपेत्तत्रायुतं द्विजाः ॥

अकामतः प्रकाशे च तत्राप्ययुतकद्वयम् ।
गुरुद्रोहादृते शुद्धिः कामतोऽपि भवेदिह ॥ 655

दद्याद्वा देशिकस्तस्य तदा कृच्छ्रपुरस्सरम् ।
पुनर्योगः प्रकर्तव्यश्शुद्धिस्तस्यान्यथा न हि ॥

पातकत्रयसंयोगस्सामान्यो ब्राह्मणादितः।
मद्यपानं यदा शूद्रेऽदीक्षिते स्वल्पकं भवेत् ॥

निषेधाभावतस्तस्य दोषस्तत्र न जायते।
नियमाद्घोरजापस्य प्रकर्तव्यं शतं त्रिकम् ॥

गुरुस्त्रीगमनं यच्च चतुर्णां सदृशं भवेत्।
गुरुद्रोहः शिवद्रोहस्तस्मात्तत् पातकं भवेत् ॥

काष्ठादिपार्थिवस्तेये तेजोद्रव्यं विना द्विजाः।
सद्योजातजपाच्छुद्धिरकामादिह कथ्यते ॥ 660

पञ्चविंशतिको जापः कर्तव्योऽकामतश्शतम्।
घृतं वापि गृहीत्वा तु लवणं शर्करादिकम् ॥

कामतोऽकामतो वापि जपेद्वामं तु पूर्ववत्।
रीतिकेतरकांस्यादि गृहीत्वा तैजसं च यत् ॥

धेनुं वा घृतवच्छुद्धिः कामाकामात्तु पूर्ववत्।
पुष्पं गन्धादिकं हृत्वा पुरुषं स्त्रियमेव वा ॥

अनड्वाहं गजाश्वादिवस्तुजातं तु पूर्ववत्।
क्षीरं जलं वा शस्त्रं वा हृत्वेशं पूर्ववज्जपेत् ॥

अभक्ष्यभक्षणे जाते गुह्यकस्य शतं जपेत्।
अकामात् त्रिशतं कामाज्जपेन्मद्यादिवर्जितान् ॥ 665

उदक्यान्नाशने मोहाज्जपेद् गुह्यायुतं बुधः।
दशोर्ध्वं त्रिशतादर्वाग् जप्त्वा स्नानेन शुद्ध्यति ॥

तदूर्ध्वं पञ्चकं यावच्छतं नक्तं विधीयते।
तदूर्ध्वमुपवासस्स्यात् त्रिरात्रमयुतोर्ध्वतः ॥

स्वजातिदीक्षितं स्पृष्ट्वा तदाचम्य विशुद्ध्यति।
आचम्यादीक्षितेनापि सजातीशशतं जपेत् ॥

सदीक्षदीक्षितस्पर्शात् प्रायश्चित्तं तु पूर्ववत्।
तस्मिन्नदीक्षिते स्पृष्टे जपेत् स्नात्वा शतद्वयम् ॥

इदमेवान्तरस्पर्शादीक्षितस्येतरस्य तु।
शतत्रिकं जपेत् स्पर्शात् सोपवासः शुचिर्भवेत् ॥ 670

भवेत्तदेव शूद्रस्य स्पर्शनादीक्षितस्य तु।
स्पर्शनादीक्षितस्यापि शतं पञ्चाप्युपोषितम् ॥

इतरे पादहीनं तु कुर्यात्स्नात्मशुद्धये।
त्रिरात्रमन्त्यजस्पर्शात्सहस्राणि दशैव तु ॥

पञ्चमस्य तु मन्त्रस्य जपेत्त्वविचारतः।
कृच्छ्रो घोरजपः कार्योऽयुतं चण्डालसङ्गमात् ॥

गृहादौ पातकावेशे त्यक्त्वा भाण्डान् प्रलिप्य च।
कृच्छ्राच्छुद्धिर्भवेद्भुक्तौ तप्तकृच्छ्रं समाचरेत् ॥

ज्ञात्वा भुक्त्वा तु पादेन तदासौ तत्समो भवेत्।
रजकादिप्रवेशादाश्रुतार्धमजानतः ॥ 675

बहुदेवलसंयोगे कृच्छ्रचान्द्रायणाच्छुचिः।
हेमरूप्यादिपात्राणां वारिणा शुद्धिरिष्यते ॥

शङ्खादीनां भवेच्छुद्धिस्तुषैर्वा मथितेन वा।
भस्मना कांस्यशुद्धिः स्यात् ताम्रमाम्लेन शुद्ध्यति ॥

उच्छिष्टलिप्तपात्राणां शुद्धिरेषा प्रकीर्तिता।
प्रोक्ष्य शुद्ध्यत्यसन्देहादुच्छिष्टस्पृष्टभाजनम् ॥

तुम्ब्यादिवेणुपात्राणां गोवालैस्तोयघर्षणात्।
दारवं लोहजोत्कृष्टं वारिणा तद्विशुद्ध्यति ॥

चर्मणां रज्जुवस्त्राणां शुद्धिः स्यात् क्षारवारिणा।
शुद्धिश्चोदकभाण्डानां पर्यग्निकरणात्मिका ॥ 680

तृणादिकं च यत् किञ्चित् काष्ठं वा प्रोक्षितं शुचिः।
उल्लेखाद्भूमिशुद्धिः स्यात् तथा गोमयघर्षणात् ॥

विष्ठाद्युपहतं भाण्डं त्याज्यं स्याद्वेणुमृण्मयम्।
तद्वन्निर्माल्यसंस्पृष्टं रजसा स्त्री विशुद्ध्यति ॥

शेषस्य पूर्ववच्छुद्धिर्वस्त्रशुद्धिर्जलाद्भवेत्।
शरावपत्रपुटकप्रभृतीनां च भोजने ॥

शुद्धिरत्रोपयुक्तानां परित्यागो विधीयते।
सत्येन मनसश्शुद्धिरिन्द्रियाणां यमादिभिः ॥



गर्वस्य शमता दृष्टा शुध्यर्थमविचारतः।
बुद्धेरपि मुनिश्रेष्ठास्सङ्गत्यागात् प्रकीर्तिताः ॥ 685

प्राणाश्शुध्यन्ति विधिवत् प्राणायामबलात्सदा।
ध्यानाच्छुद्धिस्समुद्दिष्टा प्रधानस्य गुणात्मनः ॥

विवेकाच्छुध्यते ह्यात्मा नात्र कार्या विचारणा।
श्वमार्जारखरादीनां विलेहे स्नानमाचरेत् ॥

नाभेरूर्ध्वमधस्ताद्वा मृद्भिश्शुध्यति सप्तभिः।
उत्तमाङ्गविधानेन स्नात्वा विद्याङ्गपञ्चकम् ॥

जप्तव्यं शतमेकं स्याद्द्विगुणं मन्त्रवादिना।
अदीक्षितेन संस्पृष्टे स्नानमाग्नेयमाचरेत् ॥

निर्माल्यसंकरे कामात् संपूज्यश्चण्डनायकः।
तस्यैव देवदेवस्य जपस्साङ्गस्य वै शतम् ॥ 690

अकामतो वा संपर्कात् केवलस्य शतं भवेत्।
वारिणा त्वश्मजातीनां मथितेनाथ मस्तुना ॥

जलजानां च सर्वेषां वैणवानां तथाम्भसा।
स्निग्धानां रूक्षणाच्छुद्धिः पात्राणां परिकीर्तिता ॥

शुद्धिः स्यादप्यशुद्धानां प्रोक्षणादेव केवलात्।
मधुनः पाकतश्शुद्धिस्तथैवेक्षुरसस्य च ॥

फलानां क्षालनाच्छुद्धिर्दध्नश्चैव निरीक्षणात्।
क्वथितं शुध्यते क्षीरं पक्वानां प्रोक्षणादपि ॥

अथ शैवगुरोरस्य शुद्धिर्वाचा विधीयते।
परेभ्यो दुःखमापाद्य वाङ्मनःकायकर्मभिः ॥ 695

प्रमादतः परिज्ञाय शुद्धिश्शक्तिजपात्सदा।
समयानां प्रमादे तु शक्तिजापः प्रशस्यते ॥

वस्त्रशय्यासनादीनां स्तेये गायत्रिकाशतम्।
गुरुदेवाग्निकार्येषु गर्हितस्य निवेदनात् ॥

शुध्यते नीयमानस्य त्वन्यायान्मुनिपुङ्गवाः।
ग्लानेभ्यो व्याधितेभ्यो वा यतिभ्यः किञ्चिदौषधम् ॥

सर्वेभ्यस्सर्वदा ग्राह्यं न दोषो ह्यत्र शासने।
पुनः पाकेन संशुद्धिर्लवणस्य सहाम्भसा ॥

अन्यायेन गृहीतस्तु न्यायमर्थयते तु यः।
यमुद्दिश्य त्यजेत्प्राणान् ब्रह्महा स तु कीर्त्यते ॥ 700

देवार्थं गुरुपित्रर्थमात्मार्थमथवा तु यः।
यमुद्दिश्य त्यजेत्प्राणान् ब्रह्महा स च कीर्त्यते ॥

अग्निदो गरदश्चैव शस्त्रपाणिर्धनापहः।
क्षेत्रदारहरश्चैव षडेते आततायिनः ॥

आततायिनमायान्तमपि शस्त्रान्तगं रणे।
जिघांसन्तं जिघांसेत्तु न तेन भ्रूणहा भवेत् ॥

युवानं बालवृद्धौ वा ब्राह्मणं वा बहुश्रुतम्।
आततायिनमायान्तं हन्यादेवाविचारतः ॥

असूर्या नाम ये लोका अन्धेन तमसा वृताः।
तांस्ते प्रेत्याधिगच्छन्ति ये चात्महननाजनाः ॥ 705

न च दुःखसमुत्पत्तौ कामतो देहमुत्सृजेत्।
यदा निर्वेदमायातः प्राप्तभोगोऽथवा पुनः ॥

ध्यानधारणायोगेन शिवलीनमनास्त्यजेत्।
शिवादित्रयनिन्दास्तु श्रुत्वा देहं स्वकं त्यजेत् ॥

तं वा हन्यान्न दोषस्स्याच्छिवत्वं च समाप्नुयात्।
शैवं पाशुपतं कालामुखं कापालधारिणम् ॥

यदि हन्याज्जगत्सर्वं हतं तेन दुरात्मना।
ब्रह्मघ्नश्च कृतघ्नश्च विशुद्धावपि कर्मतः ॥

शरणागतहन्ता च योषिद्घ्नश्चापि पापिनौ।
तथा चागमविध्वंसी स्वर्णस्तेयसमो भवेत् ॥ 710

अश्वरत्नमनुष्यस्त्रीभूधेनुहरणं तथा।
निक्षेपस्य च सर्वं हि स्वर्णस्तेयसमं भवेत् ॥

देवब्राह्मणहर्तिश्च कूटसाक्ष्यं सुहृद्वधः।
तथैवेह समुद्दिष्टमभिशापो महात्मनि ॥

औषधं स्नेहमाहारं ददतो बन्धकस्य च।
प्राणिनां प्राणवृत्त्यर्थं तत्र दोषो न विद्यते ॥

प्रतिसंवत्सरं मासं तिथियुक्तं तु तीर्थभम्।
निश्चित्य वर्तते पूर्वमुत्सवो यैर्दिनैः पुरा ॥

नवाहाद्यैर्युतो भेरीताडनादिपुरस्सरः।
तद्दिनत्रिगुणे वापि द्विगुणे वाथ तद्दिने ॥ 715

तदन्यथाकृते राष्ट्रराज्ञोर्दोषावहो भवेत्।
तत्र शान्तिर्विधेयादौ प्राग्वदुत्सवमाचरेत् ॥

किं तु मासान्तरे तु स्यात् तस्मिन्मासेऽथवा भवेत्।
द्विगुणे तद्दिने वाथ मूर्तिहोमं दिशाहुतिम् ॥

क्रमाद्विधाय कर्तव्यमुत्सवं तद्विधानतः।
ध्वजारोहणपूर्वं तु त्रिगुणाहःप्रकल्पिते ॥

विधानमेतदाख्यातं द्विगुणेऽप्येवमूह्यताम्।
लिङ्गं स्वायम्भुवं चेत्तु विधानमिदमीरितम् ॥

मानुषे बाणलिङ्गादौ दैविके वार्षकेऽपि वा।
मासभं तीर्थनक्षत्रमन्यथा वा नयेत्पुनः ॥ 720

उत्सवो यो दिनैर्हीनस्तस्य वृद्धिः फलप्रदा।
राष्ट्रक्षोभे च दुर्भिक्षे राजचोरभयादिषु ॥

वित्ताभावेऽन्यहेतुभ्यः प्राग्वत्कर्तुमशक्यता।
यदि जायेत तत्रापि शान्तिं पूर्वं विधाय च ॥

दिनहीनं तु वा कुर्यादुत्सवं पूर्वमार्गतः।
सर्वलोपात् प्रशस्तस्स्यादल्पाहैर्निर्मितोत्सवः ॥

सर्वलोपे कृते तस्य महादोषः प्रजायते।
शान्तिं च शान्तिहोमं च मूर्तिहोमं तदा नयेत् ॥

अनेन विधिना येन सर्वो नैमित्तिकादितः।
विघ्नाद्यैरुत्सवो हीनः प्रारब्धो राष्ट्रनाशनः ॥ 725

शान्तिहोमं तदा कुर्यात् पुनरुत्सवमाचरेत्।
वृषाधिवासने हीने ध्वजे वारोपिते सति ॥

गावो नश्यन्ति तत्कुर्याच्छान्तिहोमं तदुक्तवत्।
वृषयागं नयेत्तत्र ध्वजदण्डस्य मूलतः ॥

किन्तूर्ध्वेऽधध्वजे मन्त्रन्यासार्थं मनसाचरेत्।
ध्वजारोपे विहीने तु नृपतेर्भङ्गमादिशेत् ॥

शान्तिं कृत्वा तदा मन्त्री पुनरारोपयेद् ध्वजम्।
ध्वजस्य भ्रमणे हीने ग्रामादावशुभावहः ॥

शान्तिहोमं तदा कुर्यात् सर्वदोषनिवृत्तये।
वेदी विहीना वा हीनलक्षणा वाशुभप्रदा ॥ 730

शान्तिहोमं तदा कृत्वा वेदीं कुर्यात्सलक्षणाम्।
दण्डो लक्षणहीनश्चेत् प्रधानस्याशुभावहः ॥

मूर्तिहोमं तदा कुर्याच्छान्तिहोममथापि वा।
स्वलक्षणविहीनश्चेदुपदण्डो भयप्रदः ॥

स्कन्धमानस्य वै हानौ शान्तिहोमं तदा नयेत्।
दण्डोपदण्डस्कन्धादेर्भेदभङ्गादिसंभवे ॥

शान्तिहोमं तदा कुर्याद्भग्ने शान्त्यन्तरं नयेत्।
ध्वजो लक्षणहीनश्चेद्राष्ट्रस्यास्य भयंकरः ॥

सलक्षणं ध्वजं चान्यं रोहणार्थं समाहरेत्।
शान्तिकर्म नयेद्धीमांल्लक्षणध्वजरोहणम् ॥ 735

एवमेव वृषे कुर्यान्निष्कृतिं दोषहानये।
ऊर्ध्ववेत्रविहीनश्चेद्ध्वजस्येशं शतं जपेत् ॥

अधोवेत्रविहीनश्चेन्नैव दोषाय कल्पते।
रज्जुछेदेऽरिभिर्बाधा शान्तिहोमं समाचरेत् ॥

आप्त्वादिदष्टे वस्त्राद्ये शान्तिहोमं तदाचरेत्।
पताका पतिता भूमौ यदि राष्ट्रस्य दुःस्थितिः ॥

शान्तिहोमं तदा कृत्वा विधिनारोपयेद्ध्वजम्।
ध्वजे भेदादिसंयुक्ते शान्तिकर्म तदाचरेत् ॥

पताकां रोपयेदन्यां सप्ताहाभ्यन्तरे द्विजाः।
पूर्वे पूर्वे प्रशस्तं स्यादल्पहानिर्यदि द्विजाः ॥ 740



मूर्तिहोमं तदा कुर्याच्छान्तिहोममथापि वा।
केतावारुह्यमाणेऽस्मिन्यष्टयाद्यभिभवेन च ॥

लम्बिते दोषदग्धशान्त्यै शान्तिहोमं समाचरेत्।
दर्भमाला विहीना चेच्छान्तिहोमं तदाचरेत् ॥

दण्डं सलक्षण दर्भमालया वेष्टयेत्ततः।
रज्जुर्वा दर्भमाला वा प्रदक्षिणविधानतः ॥

दण्डेऽसुयोजिता सा चेज्जप्त्वाघोरं सहस्रशः।
प्रदक्षिणक्रमादग्राद्दर्भमालादिकां नयेत् ॥

उपदण्डो विकूर्चश्चेज्जपेद्घोरं शतत्रयम्।
ध्वजघण्टा विहीना चेन्न स्याद्वृषभसन्निधिः ॥ 745

आवर्तयेदघोरेण त्रिशतं देशिकस्तदा।
घण्टायाः पतने भूमौ दक्षिणं त्रिशतं जपेत् ॥

आरब्ध बन्धनं नेष्टं दण्डनाथशिवो यथा।
ध्वजारोहणकाले तु कुम्भन्यासो न चेत्कृतः ॥

वृषकुम्भविभेदादिकारणात् केतुरोहणम्।
कृत्वान्ते शान्तिहोमं च कुम्भं संस्थाप्य पूर्ववत् ॥

मन्त्रन्यासं ततः कुर्यान्मनसोर्ध्वं ह्रदम्बुजे।
तदावरणकुम्भाम्भोऽभिषेको न कृतो यदि ॥

एकैकं स्वस्वमन्त्रैस्तु जपं कुर्याच्छतं शतम्।
आरोपिते ध्वजे तस्मिन् बध्यादवलम्बिते ॥ 750

एकद्वित्रिचतुर्मात्रैर्न दोषाय प्रकल्पितः।
ततोऽधो रविमात्रान्तमघोरं त्रिशतं जपेत् ॥

तदधो लम्बिते केतौ शान्तिहोमं विधाय च।
आरोपयेद्ध्वजं पश्चाद्वृषभार्चनसंयुतम् ॥

भेरीसंताडने हीने लोको मूकः प्रजायते।
शान्तिहोमं तदा कृत्वा भेरीं संताडयेत्ततः ॥

उत्सवारम्भतः पूर्वं देवताह्वानसंयुतम्।
देवतावाहने हीने देवादीनामसन्निधिः ॥

शान्तिहोमं नयेत्प्राग्वद्देवताह्वानमाचरेत्।
ईशाम्बास्कन्दविघ्नेशभानुचण्डेश्वरादयः ॥ 755

अनाहूतास्तदा दोषो नान्यानाहूतिरापदि।
पताकारोपणोपेते देवानावाहयेन्न वा ॥

भेरीताडनकार्यं तु तद्वदेव समाचरेत्।
भेरीचर्मादिभेदादौ कोणच्छेदादिसंभवे ॥

अघोरं त्रिशतं जप्त्वा भेरीमन्यामथाहरेत्।
तथैव कोणमन्यं च गृहीत्वा प्राग्वदाचरेत् ॥

कोणे वा पतिते भूमावघोरं त्रिशतं जपेत्।
तत्काले बलिकाले वा वादके पतिते भुवि ॥

शान्तिहोमं तदा कुर्याद्राष्ट्रदुःस्थितिहानये।
भेरिकापतने भूमौ भवेद्राज्ञो भयं महत् ॥ 760

शान्तिहोमं तदा कृत्वा भेरीं संपूजयेद्बुधः।
यागशालाग्निदग्धा वा विहीना लक्षणैस्तु वा ॥

विमानं कुण्डवेदी वा राष्ट्रदुःस्थितिमावहेत्।
कुर्याद्यथावत्तत्सर्वमुत्सवं तूत्सवे यदि ॥

प्रत्यहं शान्तिहोमस्स्याद्यावत्तीर्थदिनं भवेत्।
ज्ञात्वा चेदुत्सवान्ते च यागशालां विलक्षणाम् ॥

शान्तिं कुर्यात्तदेकाहं तद्दोषविनिवृत्तये।
विधानमेतत्सामान्यं प्रतिष्ठायां च निष्कृतौ ॥

स्नपने प्रोक्षणे मासपूजादौ सूत्ररोपणे।
उत्सवाङ्के च धान्यस्मिञ्जीर्णोद्धारेष्टकाविधौ ॥ 765

नित्ये नैमित्तिके काम्ये कर्मण्यन्यत्र योज्यताम्।
यागोपकरणेऽप्येवं किं तु यागावसनाके ॥

शान्तिहोमो विधेयस्स्यादेकाहमुत्सवेऽपि च।
प्रधानाधममध्यानां करणानां विलोपने ॥

शान्तिहोममघोराणां द्विशतं त्रिशतं जपेत्।
विहीने स्थण्डिलेऽङ्के वा शान्तिहोमं तदाचरेत् ॥

पूर्ववत्स्थण्डिलं कुर्यात् सस्यनाशनिवृत्तये।
शिवकुम्भेषु वर्धन्यामावृतेषु घटेषु च॥

उत्सवाङ्गेषु चान्येषु कलशेषु यदा भवेत्।
भेदो वा सुषिरच्छेदो वैलक्षण्यं क्रमेण तु॥ 770

शान्तिहोममघोराणुजपं पञ्चशतं चतुः।
शतं त्रिशतमित्येवं कुर्याद्दोषापनुत्तये॥

कुम्भाद्यं नवमनीय प्राग्वत् संस्थापनं नयेत्।
वर्धनी वाथ कुम्भो वा घटा विघ्नेश्वराधिपाः॥

स्वर्णाम्बुजविहीना वा स्वल्पव्रणसमन्विताः।
कुर्युः कर्तुश्च दारिद्र्यं जप्त्वाघोरं सहस्रकम्॥

शास्त्रसिद्धं पुनर्दद्यात् तद्दोषविनिवृत्तये।
कुम्भाद्या वस्त्रहीनाश्चेद्दातरोगो भवेन्नृणाम्॥

जप्त्वाघोरसहस्रं तु दद्याद्वस्त्रं पुनर्गुरुः।
पञ्चरत्नादिवैकल्येऽप्येवमेव समाचरेत्॥ 775

सूत्रकूर्चपिधानादेरभावेऽप्येवमाचरेत्।
हीने कौतुकबन्धे तु तदङ्गे वा पुरोदिते॥

स यागो निष्फलः प्रोक्तस्तस्मात्तद्दोषहानये।
शान्तिहोमं तदा कुर्यात् कौतुकं बन्धयेत्ततः॥

जपेदघोरं त्रिशतं तदङ्गानां विलोपने।
तद्वदह्निकृते तस्मिन् कृत्वा सद्योऽधिवासनम्॥

पूर्वस्थानस्थिते देवे प्रोक्तं कौतुकबन्धनम्।
आनीते मण्टपादौ वा जप्त्वाघोरं शतार्धकम्॥

बलिताला‌द्यभावे तु सहस्रं दक्षिणं जपेत्।
त्रिशतं दीपहानौ च द्विगुणं दीपमाचरेत्॥ 780

उत्सवो यानहीनश्चेत् सर्वदोषावहो नृणाम्।
स्नपनं शान्तिहोमं च प्रतियानं समाचरेत्॥

वृष्टिकाले महावाते राष्ट्रक्षोभे महाभये।
ग्रामप्रदक्षिणं नेष्टमिष्टं धामप्रदक्षिणम्॥

स्नपनं शान्तिहोमं च तदा कार्यं द्विजोत्तमाः।
एकवास्तुनि विप्रेन्द्रा वर्तमाने शिवोत्सवे॥

अन्यदेवोत्सवस्तत्र कृतश्चेद्ग्रामविभ्रमः।
तद्दोषविनिवृत्त्यर्थं शान्तिहोमं समाचरेत्॥

तथैव मातृशान्तौ च प्रायश्चित्तं समाचरेत्।
अङ्गारकबलिश्चैव यामलोक्तो न दोषदः॥ 785

वामभैरवसिद्धश्चेद्बलिर्ग्रामक्षयो भवेत्।
बलिः प्रमादाद्दत्तश्चेच्छान्तिहोमं समाचरेत्॥

तथैव मातृशान्तौ च प्रायश्चित्तं समाचरेत्।
शून्यग्रामं समाश्रित्य बलियाने प्रकल्पिते॥

तदा राष्ट्रक्षयं विद्यात् कृतं चेच्छान्तिमाचरेत्।
आलये बलियाने वा तस्यां देवालयावृतौ॥

देवाङ्गवास्तौ शस्तस्स्यात् परवास्तोर्विशेषतः।
तथैवासन्नवास्तुश्च दूरवास्तौ द्विजोत्तमाः॥

नानावृक्षसमायुक्तोऽनेकवेश्मसमन्वितः।
इतरस्मात् प्रशस्तस्स्याद्विपरीते विपर्ययम्॥ 790

ब्रह्मक्षत्रविशां वास्तुः श्रेष्ठ इत्यभिधीयते।
अनुकल्पो ह्यशकानामन्यत्रैव समाचरेत्॥

अनुलोमाधिवासो वा शौद्रो वा मध्यमो मतौ।
तद्भिन्नाधिष्ठितो वास्तुर्हीन इत्यभिधीयते॥

अन्तर्वास्तोर्विशिष्टस्स्याद्बहिर्वास्तुबलिभ्रमः।
एकत्र बलियाने च श्रेष्ठमित्यभिधीयते॥

अनुकल्पो ह्यशकानामन्यत्रैवं समाचरेत्।
अनुकल्पप्रवृत्तानां शान्तिहोमो जपोऽथवा॥

हीने विताने घोराणोःशतसंख्यं जपं नयेत्।
ध्वजे विहीनेऽप्येवं स्याज्जपोऽत्र शतसंख्यया॥ 795

ध्वजे विहीने रात्रौ तु दोषो नास्ति द्विजोत्तमाः।
बलिद्रव्ये विहीने तु क्षुद्बाधा जायते नृणाम्॥



तद्दिनाधिपमन्त्रेण जपेद्द्विशतसंख्यया।
बलिद्रव्यसमायुक्तं दापयेदन्यसन्निधौ॥

बलिदाने विहीने च क्षुद्बाधा जायते नृणाम्।
मूर्तिहोमं ततः कृत्वा यानान्ते वा बलिं नयेत्॥

देवालये बलिर्हीनो यदाघोरं शतं जपेत्।
यस्यां दिशि बलिर्हीनो ग्रामादौ संहिताहुतिम्॥

तत्तद्दिशापतेर्मन्त्रं शतजापसमन्वितम्।
विधाय यानकाले वा तदन्ते वा बलिं नयेत्॥ 800

अनलिङ्गे विहीने तु दुर्भिक्षं जायते भुवि।
शान्तिहोमं ततः कृत्वा सान्नलिङ्गं बलिं नयेत्॥

तच्छेदभेदपातादौ तथैव फलमादिशेत्।
तल्लिङ्गं सुदृढं कृत्वा यजेदस्त्रं तु तद्गतम्॥

विधाय संहिताहोमं तस्मिन्स्थानेऽप्यनन्तरम्।
नयेदारभ्य तल्लिङ्गपातस्थानात्प्रदक्षिणम्॥

पतितं चेत्यजेदस्त्रं संपाद्यान्नं समर्चयेत्।
समाप्य पूर्ववद्यानं संहिताहोममाचरेत्॥

बलिपात्रे तु पतिते त्वघोरेण शतं जपेत्।
भेदाद्यावन्यदादाय बलिद्रव्यं तु निक्षिपेत्॥ 805

दशायुधानि वा भूमौ संभूतानि पतन्ति चेत्।
निर्वाणानि तदा कुर्याच्छान्तिहोमं तदा नयेत्॥

छेदभेदादियुक्तानि यदि दारुमयानि वा।
तयान्यानि समापाद्य संभूतानीतराणि वा॥

संस्कृत्य स्वस्वमन्त्रैस्तु सावशेषं समापयेत्।
लोहजान्यनुकर्मोक्त्या नीत्वान्ते स्थापनं नयेत्॥

शूलास्त्रे पतिते राज्ञो भयं भवति तत्र च।
धामादौ वा दिशाहोमं नयेदस्त्रार्चनान्वितम्॥

छेदभेदादिके जाते त्वापाद्यैवानुकर्मवत्।
उत्सवं पूर्ववत् कुर्यादन्येनास्त्रेण वा द्विजाः॥ 810

समाप्योत्सवकार्यं तु तत्संधायानुकर्मवत्।
संप्रोक्षणं ततः कुर्यादस्त्रराजप्रतिष्ठया॥

यानकालेऽन्यकाले वा बेरादौ पतिते सति।
राजा मरणमाप्नोति सद्यः कुर्यात् प्रतिक्रियाम्॥

अन्यङ्गे पतिते बेरे पतिते वा करादधः।
द्विकरात् त्रिकराद्वापि तदूर्ध्वं च क्रमान्नयेत्॥

संहिताशान्तिहोमौ च शान्तिं मूर्तिदिशाहुती।
स्नपनं च जपेद्घोरमन्त्रेण शतसहस्रकम्॥

नैवेद्यमपि सामान्यमुत्सवं शेषमाचरेत्।
अङ्गहीनेऽनुकर्मोक्त्या सन्धानाद्यं च निष्कृतिम्॥ 815

अधिवासादिकं कर्म सद्य एव समाचरेत्।
मासर्क्षतिथिवारादिप्रेक्षां हित्वैव देशिकः॥

पुनश्च कौतुकं बध्वा उत्सवाद्यं प्रकल्पयेत्।
उत्तमाङ्गादिहीने चानुकर्मोक्त्या समाचरेत्॥

तत्राप्यन्येन बेरेण सन्धानान्तं हि चोत्सवम्।
कारयेद्देशिको धीमान् प्रत्यहं शान्तिहोमयुक्॥

धामान्तरगतेनाथ कर्तव्यो वा द्विजोत्तमाः।
गर्भद्वारादिमानेष्टमानयुक्तेन नान्यथा॥

ततो बेरं समापाद्यानुकर्मोक्त्या तदेव हि।
प्रतिष्ठां च विधायान्ते चाङ्कुरार्पणपूर्वकम्॥ 820

उत्सवं कारयेद्देवे नवाहाद्युत्सवेषु च।
लिङ्गेऽप्येवं समानं स्यात् कर्म हे शिवदीक्षिताः॥

उत्सवे ग्रामबाह्ये तु बद्धप्रतिसरे द्विजाः।
बेरेऽतिनिन्दिते दोषो राज्ञो भवति शान्तये॥

शान्तिहोमं तदा कुर्यात् संहिताहोममेव वा।
कुर्वाणश्चेत् क्रियाभूमौ पतितो देशिकस्तदा॥

ग्रामानवस्थितिर्ज्ञेया तदर्थं बहुरूपिणम्।
जपेत्पञ्चशतं मन्त्री पतितेऽप्येवमेव हि॥

बलिदातरि तत्काले पतिते तं शतं जपेत् ।
आयुधास्त्रानलिङ्गेशवाहने पतिते भुवि ॥ 825

गुरुश्शतं जपेद्घोरं द्विगुणं शंकरालयोः ।
पूजायाश्चैव सन्ध्यादिविभिन्नाया विलोपने ॥

पाद्यादीनां च गन्धस्य पुष्पाणां धूपदीपयोः ।
अनिर्वाणप्रदीपस्य नैवेद्यादेर्विलोपने ॥

प्रागुक्तविधिना कुर्यात् प्रायश्चित्तं गुरूत्तमाः ।
विलुप्ते वह्निकार्ये वा होमद्रव्यविलोपने ॥

निर्वाणेऽग्नौ शिवोपेतेऽप्यशिवे वाथ पूर्ववत् ।
रथारोहो विहीनस्चेन्नीचास्स्युर्मनुजा भुवि ॥

शान्तिहोमं तदा कृत्वा रथारोहणमाचरेत् ।
यानकाले रथादीनां भङ्गे भङ्गो भुवो भवेत् ॥ 830

सन्धानयोग्यं सन्धानं कृत्वा शान्ति समाचरेत् ।
तद्देशे धाम्नि वा कुर्याद्यानादौ दोषशान्तये ॥

सन्धानकर्मायोग्यश्चेद्रथान्तरमथानयेत् ।
आनीय शिविकायां वा तत्रारोप्य महेश्वरम् ॥

पूर्ववद्देवदेवेशं स्वालये विनिवेशयेत् ।
विनोददर्शने काले जातश्चेत् कलहो महान् ॥

शान्तिहोमं तदा कुर्यादघोरस्यायुतं जपेत् ।
विनोददर्शने हीने संहिताहोममाचरेत् ॥

नीराजनविधौ हीने प्रायश्चित्तं तु पूर्ववत् ।
यानान्तस्नपने हीने शान्तिहोमविलोपिते ॥ 835

देवसन्निधिवैकल्यं मूर्तिहोमः प्रतिक्रिया ।
स्नपनं शान्तिहोमं च नयेत् सन्निधिसिद्धये ॥

हीनाधिष्ठितदेशे वा देवयाने प्रवर्तिते ।
प्रचुरस्नपनं कुर्याच्छान्तिहोमं महत्तरम् ॥

तैलाभ्यङ्गे विहीने तु शिरोरोगो नृणामिह ।
शान्तिहोमं तदा कृत्वा तैलाभ्यङ्गं समाचरेत् ॥

नृत्तमूर्त्युत्सवे हीने पूर्वसंकल्पिते नराः ।
भवन्ति पापिनस्सर्वे तदर्थं शान्तिमाचरेत् ॥

नटेशभ्रमणं पश्चाद्दिष्टकाले समाचरेत् ।
यात्रादानस्य विच्छेदे सा यात्रा निष्फला भवेत् ॥ 840

शान्तिहोमं तदा कृत्वा पूर्ववद्दानमाचरेत् ।
मृगयायास्तु वैकल्ये नृपस्यापजयो भवेत् ॥

शान्तिहोमं तदा कृत्वा मृगयामिष्टमे नयेत् ।
हीने कौतुकतीर्थे स्यान्नैव गङ्गादिसन्निधिः ॥

तद्वत्सूर्योदयात् पश्चात् तीर्थकार्ये कृते सति ।
निष्कृतिस्स्यात् क्रमाच्छान्तिहोमो वा संहिताहुतिः ॥

एतत् कौतुकतीर्थे स्याद्ध्वजारोहे कृते सति ।
अन्यत्र कौतुकस्नानं कल्पयेद्वर्जयेत्तु वा ॥

चूर्णोत्सवे तदङ्गे वा हीने स्याद्रोगपीडनम् ।
शान्तिहोमो भवेदङ्गिन्यङ्गे स्यात्संहिताहुतिः ॥ 845

विलुप्ते धाम्नि वा स स्यात्तीर्थस्नानेऽथवा पुनः ।
चूर्णोत्सवभ्रमे हीने संहिताहोममाचरेत् ॥

महातीर्थे विलुप्ते स्यात्स यागो निष्फलो द्विजाः
शान्तिं कृत्वा तदर्थं तु तीर्थकार्यं ततो नयेत् ॥

पूर्वं नद्यादिके तस्मिन्वर्तमाने तदन्यथा ।
कृते तद्दोषशान्त्यर्थं शान्तिहोमं तदाचरेत् ।

तीर्थाङ्गलोपे कर्तव्यस्संहिताहोम इष्टदः ।
प्रासादे मनुजे जाते मृते राज्ञो भयं महत् ॥

मृतादि तत्प्रदेशात्तु विसृज्य च बहिस्ततः ।
प्रोक्षयेद्गोमयाम्भोभिर्येन देशेन ते गताः ॥ 850

तद्देशे तु ततः कुर्यात् पुण्याहप्रोक्षणं च वै ।
मृतप्रसूतदेशं तु खानयोग्यं खनेत्तदा ॥

परित्यज्य मृदोऽशुद्धा मृद्भिश्च परिपूरयेत् ।
प्रक्षाल्यासनकुण्डाद्यं गोमयालेपनं स्थले ॥



पुण्याहं तत्र गव्येन प्रोक्षणं च क्रमान्नयेत् ।
शैवसंभोजनं चान्ते जलसंप्रोक्षणं नयेत् ॥

स्नपनं शान्तिहोमं च यदि गर्भगृहे भवेत् ।
शान्तिहोमोज्झितं कुर्यादर्धमण्टपके सति ॥

प्रतिमामण्टपे शान्तिहोमे च स्नपनं विना ।
अन्तस्सालान्तरे चेद्धि जलसंप्रोक्षणं नयेत् ॥ 855

अन्तस्सालस्थदेवानां स्नपनं शान्तिहोमवत् ।
गव्येन प्रोक्षयेत्तत्स्थपीठान्यपि विशुद्धये ॥

त्यजेन्मार्दानि भाण्डानि क्षालयेद्दारवं जलैः ।
अन्तस्सालस्य बाह्ये चेत् स्नपनेन दिशाहुतिः ॥

पाकस्थानादिदेशेषु मरणादौ च संभवे ।
पूर्ववच्छुद्धिमापाद्य पर्यग्निकरणं नयेत् ॥

शान्तिहोमं ततः कुर्यान्मूर्तिहोममथापि वा ।
प्राकारद्वयबाह्ये चेच्छान्तिहोमं समाचरेत् ॥

धाम्नो द्वादशदण्डान्तवास्तौ मर्त्यो मृतो यदि ।
परित्यज्यैव तत् कुर्यान्नित्यनैमित्तिकादिकम् ॥ 860

कृतश्चेद्ग्रामनाशस्स्यात् तदर्थं स्नपनं नयेत् ।
सुता वापि मृता धाम्नि पक्षिणः पशवो मृगाः ॥

सर्पो वा जायते राष्ट्रनराणामिह दुःस्थितिः ।
गोमयालेपनं तत्र प्रोक्षयेत् पञ्चगव्यतः ॥

स्नपनं गर्भगेहे चेच्छान्तिहोमं च कारयेत् ।
केवलस्नपनं चार्धमण्टपे परिकल्पयेत् ॥

देवतामण्टपे तत्स्थदेवान् संप्रोक्ष्य गव्यतः ।
संपूज्य गन्धपुष्पाद्यैश्शान्तिहोमं च कारयेत् ॥

एतत्सर्वं तु सामान्यमुत्सवेऽनुत्सवेऽपि च ।
उष्णीषमुत्तरीयं वा वसनं यज्ञसूत्रकम् ॥ 865

शिरो वा वह्निना दग्धं स्यादाचार्यस्य सुव्रताः ।
व्यसबाधा भवेद्ग्रामे तद्दोषशमनाय च ॥

गुरुस्स्नात्वा शुचिर्भूत्वा शान्तिहोमं च कारयेत् ।
एवमेव भवेत् कर्तृहोत्रादीनां मुनीश्वराः ॥

वस्त्रशय्यासनादीनां दाहच्छेदादिसंभवे ।
दष्टे वा मूषिकाद्यैस्तु क्रमात् फलमिहोच्यते ॥

कोणे वा भोगवृद्धिस्स्यात् प्रान्तेऽनिष्टं प्रकीर्तितम् ।
पुत्रोत्पत्तिर्यशश्चैव दशापाशान्तमध्यमे ॥

प्रान्तेऽनिष्टं समाख्यातं रोगो वा मृत्युरन्यतः ।
वस्त्रं वा त्रिगुणं कृत्वा क्षेत्रद्वयमवद्धितु ॥ 870

महादोषस्समाख्यातो दोषो नान्यत्र कथ्यते ।
एवमेव नराणां च तदा स्नानं विधाय च ॥

जप्त्वाघोरसहस्रं तु दशवस्त्राणि दापयेत् ।
नराणां शिवभक्तानां दीक्षितानां शिवाय वा ॥

वस्त्राद्यं दैविकं चेद्धि प्रोक्ष्य गव्येन शुद्धये ।
कारयेत्संहिताहोममघोरं वा जपेत्तथा ॥

अदीक्षितैश्च शूद्राद्यैः प्रविष्टे यागमण्टपे ।
संप्रोक्ष्यास्त्राम्बुनाघोरं दशवारं जपेन्मनुम् ॥

तत्संस्पृष्टे तु कुम्भादौ तदन्यं विनिवेशयेत् ।
संहिताहोमपूर्वं तु श्वादीनां च प्रवेशने ॥ 875

गोमयालेपन चैव पुण्याहप्रोक्षणान्वितम् ।
गव्यसंप्रोक्षणोपेतं प्रतिलोमान्त्यजैर्यदि ॥

सूतकैः प्रेतकाद्यैर्वा कुम्भादींस्तद्गतांस्त्यजेत् ।
गोमयालेपनं कृत्वा पर्यग्निकरणं नयेत् ॥

मूर्तिहोमं विधायान्ते कुम्भादीन् पूर्ववन्न्यसेत् ।
श्वादीनां स्पर्शनेऽप्येवं निष्कृतिः परिकीर्तिता ॥

चण्डालाद्यैः प्रविष्टश्चेद्देवं कृत्वा तदन्तिके ।
स्नपनं कारयेच्छम्भोर्दिशाहोमं च कारयेत् ॥

तैःस्पृष्टाः प्रतिमाद्याश्चेत् प्राग्वन्निष्कृतिमाचरेत् ।
यागशालाग्निदग्धाचेद्भयं स्याद्राजवेश्मनि ॥ 880

व्यपोह्य पूर्वकुम्भादीन् संपूज्य वृषभध्वजम् ।
मूर्तिहोमं विधायान्ते पूर्ववद्यागमण्टपम् ॥

कृत्वा सद्योऽधिवासं तु पूर्ववत्सर्वमाचरेत् ।
कुम्भसंस्थापनोपेते विदग्धे यागमण्टपे ॥

महानसेऽथवास्थानमण्टपे गोपुरादिके ।
विदग्धे शान्तिहोमं तु कृत्वा पूर्ववदाचरेत् ॥

प्रपायामग्निदग्धायां संहिताहोममाचरेत् ।
विदग्धे गर्भगेहेऽर्धमण्टपे प्रतिमादिके ॥

अन्तस्सालान्तरे बाह्ये साले च क्रमशो भवेत् ।
स्नपनेन दिशाहोमो मूर्तिहोमस्तथाविधः ॥

शान्तिश्च शान्तिहोमश्च संहिताहोम एव च ।
दुष्टे तु लिङ्गबेरादौ तदुक्तां निष्कृतिं नयेत् ॥

परिवारालये कुर्यात् प्रतिमामण्टपोक्तवत् ।
उत्सवेऽप्युत्सवेष्वेतत् सामान्यं कर्म संमतम् ॥

ग्रामादिवेश्मदाहे तु संहिताहोममाचरेत् ।
महादाहोद्भवे ग्रामे शान्तिहोमं समाचरेत् ॥

प्रतिक्रियावादतो चेद्वसनं चोत्तरीयकम् ।
सोष्णीषं देशिकद्रव्यं हैमपद्माङ्गभूषणम् ॥

अङ्गुलीयकमात्रं वा तानि यानीष्टमानतः ।
अघोरशतमावर्त्य दद्यात्तान्यादराद्गुरोः ॥

आचार्यसंकरो राष्ट्रं राजानं नाशयत्यथ ।
एकाचार्येण कर्तव्यमेकदेवालयस्थितम् ॥

कर्मान्येन कृतं तच्चेत् तत्स्यादाचार्यसंकरः ।

ऋषय ऊचुः—

जलाद्याहरणं गन्धपुष्पधूपादिकल्पनम् ॥

दीपनैवेद्यसंक्लृप्तिर्दैवे नित्यार्चनं च यत् ।
सकलाराधनं यच्च परिवारार्चनादिकम् ॥

नित्योत्सवश्च गानाद्यं स्नपनाद्यङ्गकल्पनम् ।
उत्सवाद्यङ्गक्लृप्तिर्वा देवतावाहनादिकम् ॥

तत्काले मूललिङ्गादिपूजनं नित्यहोमकम् ।
अनेकनरनिर्वर्त्यं कथमेकः करोत्यहो ॥

शिवः—

साधवस्ते महाप्राज्ञाः समाधिं कथयाम्यहम् ।
नित्ये नैमित्तिके काम्ये यत्कर्मैकालये स्थितम् ॥

एकाचार्येण कर्तव्यमिति साधूदितं मया ।
देशिकस्यास्य पुत्रो वा पौत्रो वा तस्य बान्धवाः ॥

तद्दीक्षितास्तदादेशसमाविष्टाश्च ये नराः ।
आदिशैवकुले जाता ब्राह्मणाः क्षत्रिया विशः ॥

शूद्रा वा येऽनुलोमास्ते गन्धर्वा नर्तकादयः ।
रुद्रकन्याश्च महात्मस्तदाज्ञापालका यदि ॥

तैरप्यनुष्ठितं कर्म देशिकानुष्ठितं भवेत् ।
यथा राज्ञा नियुक्तैस्तु सामन्तप्रमुखैरपि ॥

यत्कृतं राजकार्यं स्यात्तथैवात्रापि संमतम् ।
अन्यथा सति कर्तव्ये शान्तिं तत्र समाचरेत् ॥

तत्र संकरदोषोऽपि फलमेवं च निष्कृतिः ।
क्रिया या वर्तते पूर्वं शास्त्रसिद्धा पुनः पुनः ॥

सव क्रिया प्रकर्तव्याशास्त्रसिद्धां परित्यजेत् ।
अन्यथा सति कर्तव्ये राज्ञो ध्वंस उदाहृतः ॥

शान्तिस्तदर्थं कर्तव्या तद्दोषविनिवृत्तये ।
शास्त्रसिद्धैव पूर्वापि ततो वृद्धिसुखप्रदा ॥

तस्मात्सर्वप्रयत्नेन पूर्वमप्यधिकं चरेत् ॥

इति उत्तरकामिकाख्ये महातन्त्रे प्रायश्चित्तविधिः त्रिंशतितमः पटलः ॥



## अद्भुतशान्तिविधिः ॥

वक्ष्येऽद्भुतानां शान्तिं तु सर्वारिष्टनिवारिणीम् ।
रजन्यां दर्शनं भानोः परराजभयं भवेत् ॥

विप्रभोजनसंयुक्तां तत्र शान्तिं समाचरेत् ।
दर्शे चाभ्युदिते चन्द्रे परो राजा भविष्यति ॥

पूर्ववत् कल्पयेच्छान्तिं मध्यमेनाधमेन वा ।
संभवे भूमिकम्पे तु नृपभङ्गो भवेद्ध्रुवम् ॥

मधुक्षीरघृतैस्स्नानं सहस्रप्रस्थसंमितैः ।
तदर्धैर्वा तदर्धैर्वा शतप्रस्थैस्तदर्धतः ।

स्नपनोक्त्या शिवे कुर्यात् त्रिसप्ताहं द्विसप्तमम् ।
सप्ताहं वा घृतक्षीरैः श्रेष्ठमार्गेण कारयेत् ॥

प्रासादमण्टपादिभ्रमणेऽप्येवमाचरेत् ।
नदीतटाककूपादिक्षोभे दुर्भिक्षता भवेत् ॥

तत्तीरे मण्टपं कृत्वा तन्मध्ये स्थण्डिले शिवम् ।
साम्बं कुम्भे च वर्धन्यां परितोऽष्टघटेषु च ॥

ससूत्राम्बरहैमेषु सप्ततीर्थं च कल्पयेत् ।
पूजयेद्गन्धपुष्पाद्यैर्दिशाहोमं समाचरेत् ॥

कुम्भाम्भः प्रक्षिपेत्तेषु पञ्चाहं होममाचरेत् ।
प्रतिमारोदने स्वेदे नृपस्य मृतिमाचरेत् ॥

सर्वेषां प्राणिनां नाशं सद्यः कुर्यात् प्रतिक्रियाम् ।
कृत्वा तु प्रतिमाशुद्धिं श्रेष्ठां शान्तिं समाचरेत् ॥

शान्तिहोमं च विप्राणां भोजनं नित्यमाचरेत् ।
तदन्ते चोत्सवं कुर्याद्यथावित्तं मुनीश्वराः ॥

जाते शोणितवर्षे तु सर्वेषां नाशनं भवेत् ।
प्रासादमण्टपादीनि रुधिराक्तानि शोधयेत् ॥

गोमयालेपनं कृत्वा पर्यग्निकरणं नयेत् ।
पुण्याहं वाचयित्वा तु मध्वाद्यैस्स्नपनं नयेत् ॥

भूमिकम्पोक्तमार्गेण शान्तिहोमं तु कारयेत् ।
सप्ताहमेवं कुर्याद्वा द्वित्रिसप्ताहमेव वा ॥

मधुक्षीराज्यवृष्ट्यादौ राष्ट्रक्षोभं समादिशेत् ।
घृततैलाश्मासृगाद्यैर्वा वर्षश्चेत्तद्वदेव हि ॥

तद्द्रव्यैस्स्नपनं कुर्याद्भूमिकम्पोक्तमार्गतः ।
विशेषाच्छिवमभ्यर्च्य भूरिनैवेद्यसंयुतम् ॥

शैवान् संभोजयेत्पश्चादेवं सप्ताहमाचरेत् ।
लोके मृदादिवृष्टिश्चेत् क्षीरस्नपनसंयुतम् ॥

लिङ्गबेरद्रुमादिभ्यश्शोणितादेः समुद्भवे ।
संपूज्य गन्धप्रमुखैर्वस्त्रयुग्मेन वेष्टयेत् ॥

दिशाहोमं नयेत्तेषु शैवान् संभोजयेत्ततः ।
परचक्रागमं ज्ञेयं तद्भीतेर्विनिवृत्तये ॥

लिङ्गबेरद्रुमाद्यङ्गं शोधयेदस्त्रवारिणा ।
वास्तुं संपूजयेत्पश्चात्तदन्ते स्नापयेच्छिवम् ॥

शान्तिकर्मोक्तनक्षत्रवशादेतत्समाचरेत् ।
अकस्मात्पतितं धाम मूलादामस्तकं यदि ॥

नृपभङ्गो भवेत्तेन मूर्तिहोमं तु कारयेत् ।
स्नपनं च शिवे नित्यं कुर्याद्वित्तानुसारतः ॥

शान्त्युक्तदिनसंख्याया वशेनैतत्समाचरेत् ।
प्रासादमत्युकर्मोक्त्याद्येष्टकादियुतं नयेत् ॥

त्रिपादेऽर्धे तथा पादे तदर्धे वाथ भग्नके ।
कुर्याद्धाम्नोऽथ सन्धानं सप्तषट्पञ्चवेदभम् ॥

प्रायश्चित्तं प्रकर्तव्यं प्रागुक्तं भावितात्मभिः ।
स्थूण्याद्यवयवे छिन्नेऽप्येतदेकाहमाचरेत् ॥ 25

नासिकाद्यङ्गवैकल्ये सन्धानं सम्यगाचरेत् ।
अकस्माद्धामभेदादौ फलमिन्द्रादिदिग्वशात् ॥

निष्कृतिश्च पुरा प्रोक्ता ततस्तद्वत्समाचरेत् ।
धामान्तरस्थदेवानां भग्नादौ समुपस्थिते ॥

अनुकर्मविधानोक्तं कुर्यात्कर्म गुरुस्तदा ।
मण्टपादिनिपाते च शान्तिमेकाहमाचरेत् ॥

धाम स्थानान्तरं प्राप्तं यदि लिङ्गादिसंयुतम् ।
तृतेरादिशेऽङ्गं तेन वै देशिकोत्तमः ॥

संपूज्य देवं गन्धाद्यैः श्रेष्ठशान्तिं समाचरेत् ।
शैवसंभोजनोपेतां विप्रभुक्तिसमन्विताम् ॥ 30

लिङ्गान्तरं प्रतिष्ठाप्य पूर्वमानसमं यथा ।
बाणलिङ्गादिकं वाथ प्रासादेन समन्वितम् ॥

अथवा पूर्वलिङ्गं चेत् तत्प्रासादसमन्वितम् ।
अनुकर्मविधानेन पूर्वस्थाने समं नयेत् ॥

हीनं प्रासादमात्रं चेत् पूर्वस्थाने समाचरेत् ।
स्थानान्तरगतं लिङ्गमुदक्पूर्वत्र विन्यसेत् ॥

तत्स्थाने धाम वा कार्यमनुकर्मोक्तकर्मणा ।
वृक्षे स्थानान्तरं प्राप्ते सस्यनाशो भविष्यति ॥

तद्वृक्षजातिसंभूतसमिद्भिर्मूर्तिहोमकम् ।
समाचरेद्द्विसप्ताह शैवभोजनसंयुतम् ॥ 35

तत्समीपे स्थिते लिङ्गे स्वयंभूतादिके परम् ।
स्नपनं कारयेन्नित्यं प्रभूतहविषान्वितम् ॥

स्थापयेत् पूर्वदेशेऽन्यद्वृक्षं तज्जातिसंभवम् ।
तदन्यकुसुमे जाते तदन्यफलसंभवे ॥

संवत्सरत्रयादर्वाग् वृक्षे पुष्पफलोद्भवे ।
सप्ताहं वा नवाहं वा पञ्चाहं शान्तिमाचरेत् ॥

तन्मूले शान्तिहोमं च प्रत्यहं गुरुराचरेत् ।
शिवलिङ्गे च बेरे वा पीठे शोणादिसंभवे ॥

सर्वे ज्वराभिभूतास्तु नश्यन्ति मनुजा ध्रुवम् ।
गन्धोदैर्नालिकेराद्यैर्विन्यस्तैः स्नपनोक्तितः ॥ 40

स्नापयेत्परमेशानं पञ्चामृतसमन्वितम् ।
अथवा क्षीरमध्वाज्यैः प्रस्थैस्संस्नापयेच्छिवम् ॥

सहस्रादिचतुष्प्रान्तैराढकादिसमन्वितैः ।
चन्दनागरुकर्पूरोशीरकुङ्कुमसंयुतम् ॥

गन्धं महत्समालभ्य पुष्पाद्यैः पुष्कलं यजेत् ।
दिशाहोमं ततः कुर्याद्यावद्दोषं निवर्तते ॥

शीतकुम्भोऽपि कर्तव्यस्शान्तिमिच्छन्नरैस्सदा ।
नरा मृगाश्च पशवः पक्षिणो वा सरीसृपाः ॥

जनयन्ति स्वजात्यन्यं यदि क्षोभो भवेद्भुवि ।
बहुशीर्षकहस्ताङ्घ्रिनासादेहादिसंयुताः ॥ 45

स्ववर्णेतरवर्णादिभ्रूविकारादिसंयुताः ।
स्पष्टवर्णायुता अश्वादयो जाता यदि द्विजाः ॥

तथाभूतान्परित्यज्य सद्यः कुर्यात्प्रतिक्रियाम् ।
शिवं संपूज्य विधिवद्दिशाहोमं समाचरेत् ॥

शैवान्संपूज्य विधिवच्छान्तिहोमं समाचरेत् ।
शैवान्संभोजयेद्देवं नयेद्वा सप्तपञ्चमम् ॥

निष्कृतौ गोगजाश्वानां सत्यां तेषां निकेतने ।
नित्यं वास्तुबलिं शान्तिहोमं क्षेत्रेश्वरेज्यया ॥

युद्धे वा पर्वतादीनां राज्ञो युद्धभयं भवेत् ।
शिवं संपूज्य विधिवद्दिशाहोमं तु कारयेत् ॥ 50

स्नापयेत्परमेशानं नवसप्ताहमाचरेत् ।
लिङ्गे बेरे च पीठे वा स्वेदो राष्ट्रभयं भवेत् ॥

प्रक्षाल्याशाम्बुनाभ्यर्च्य शान्तिं सप्ताहमाचरेत् ।
लिङ्गे बेरे विमाने वा मण्टपे गोपुरादिषु ॥



परिवारालये साले देवेशास्थानमण्टपे ।
सभास्वशनिपाते च राज्ञो व्याधिं समादिशेत् ॥

नवप्रकारमार्गेण क्रमाच्छान्तिं समाचरेत् ।
तत्र लिङ्गे च पीठे च बेरे वायं विधिर्भवेत् ॥

दिशाहोमं ततः कृत्वा महास्नपनसंयुतम् ।
अष्टोत्तरशतस्नानयुतं पञ्चामृतान्वितम् ॥ 65

पञ्चगव्यसमोपेतं मधुक्षीरघृतैरपि ।
सहस्रादिचतुष्प्रान्तैः प्रस्थमानैर्महेश्वरम् ॥

स्नापयित्वार्चयेद्विप्रान् भोजयेच्छान्तिहोमयुक् ।
एवं कृते तु सप्ताहमन्ते चोत्सवमाचरेत् ॥

प्रासादे सर्वदा भिन्ने प्रदेशे वा मुनीश्वराः ।
अकस्मात्पतिते धाम्नि यदुक्तं तद्वदाचरेत् ॥

प्रायश्चित्तं तथैव स्यान्मण्टपादौ शिवाग्रजाः ।
शैवान्संभोजयेन्नित्यं शिवशास्त्रविशारदान् ॥

प्रासादे निष्कृतिः प्रोक्ता या सा नृपनिकेतने ।
चैत्यवृक्षेऽथवाश्वत्थे चान्यस्मिन्देवतात्मके ॥ 60

सप्ताहशान्तिः कर्तव्या महाशनिनिपातने ।
प्रत्यहं शान्तिहोमं च कृत्वा तद्वृक्षपूर्वतः ॥

तत्रैव तत्समीपे वा तज्जातीयं तरुं न्यसेत् ।
गृहे कूपे तटाके वा नद्यां वा शान्तिरेकमम् ॥

करिणी मदयुक्ता चेद्वाहनानां क्षयो भवेत् ।
सप्ताहशान्तिः कर्तव्या शान्तिहोमं च तद्गृहे ॥

महावातप्रकोपे तु राष्ट्रक्षोभो भविष्यति ।
पञ्चाहं त्रिदिनं चैकदिनं वा शान्तिमाचरेत् ॥

धूमे समुद्भवे चाग्नौ करोति स्वामिनो भयम् ।
गव्येन प्रोक्षयेत्तत्र धारयाधः खनेद्भुवम् ॥ 65

शुद्धमृद्भिश्च पूर्याथ पञ्चमृद्भिश्च लेपयेत् ।
पुण्याहप्रोक्षणं कृत्वा ब्राह्मणांस्तत्र भोजयेत् ॥

शान्तिस्तत्र विधातव्या नवभेदविभेदिनी ।
लिङ्गबेरासने धूमे दृष्टे त्वेतच्च कारयेत् ॥

क्षीरप्रस्थसहस्रैर्वा तदर्धैस्स्नापयेच्छिवम् ।
तदर्धैर्वा तदर्धैर्वा शीतकुम्भस्तदन्तिके ॥

लिङ्गे बेरे च पीठादौ वर्णान्तरगते सति ।
राज्ञो व्याधिं विजानीयात् क्षालयेन्निर्मलं यथा ॥

पिष्टमृद्बिल्वदर्भैश्च रजन्यामलवारिभिः ।
शान्तिरत्र प्रकर्तव्या श्रेष्ठमध्यादिभेदतः ॥ 70

चन्दनोशीरकर्पूरकुङ्कुमागरुसंयुतम् ।
पुष्कलं गन्धमापाद्य लेपयेद्गन्धमादरात् ॥

संपूज्य गन्धपुष्पाद्यैः प्रार्थयेद्दुरितक्षयम् ।
शैवान् संभोजयेन्नित्यं सामान्यान् ब्राह्मणानपि ॥

भेर्यादीनां स्वयं घोषे महामारी प्रवर्तते ।
संप्रोक्ष्यास्त्राम्बुना भेरीप्रमुखान् गन्धपुष्पकैः ॥

अभ्यर्च्य देवदेवेशं शान्तिमिष्टां समाचरेत् ।
प्रतिसूर्योदये वापि प्रतिचन्द्रप्रदर्शने ॥

जायते भूपतिस्त्वन्यो यत्र राष्ट्रे भवेदिदम् ।
नवाहाद्येकरात्रान्तं शान्तिमिष्टां समाचरेत् ॥ 75

रात्राविन्द्रधनुर्दृष्टे परचक्राद्भयं भवेत् ।
शुक्रादिकग्रहं त्यक्त्वा दिवातारकदर्शने ॥

अनावृष्टिर्भवेल्लोके ग्रहनक्षत्रपातने ।
वाहनानां क्षयं विद्यात् तदर्थं शान्तिमाचरेत् ॥

नवाहाद्येकरात्रान्तं विभवस्यानुरूपतः ।
अग्निनक्षत्रपाते च जपेद्घोरं शतत्रयम् ॥

प्रत्यहं षड्दिनादूर्ध्वमशनेः पतने सति ।
राज्ञो दोषः प्रजायेत तदर्थं तु दिशाहुतिम् ॥

सप्ताहं वाथ पञ्चाहं तत्पातदिनसंख्यकम् ।
स्नपनेन समोपेतं राज्ञो दोषनिवृत्तये ॥ 80

क्षीराद्यैः स्नपनं कुर्यात्सप्ताहाग्निसंभवे ।
चन्द्रार्कमण्डले पञ्चदिनोर्ध्वं परिवेष्टिते ॥

तन्मण्डलाधिपो राजा शत्रुभिश्चाभिभूयते ।
शान्तिं कुर्याद्विशेषेण श्रेष्ठमध्यादिभेदिनीम् ॥

वह्निदाहे दिशां जाते दुर्भिक्षं भुवि जायते ।
क्षीराभिषेचनं देवे स्नपनोक्त्या ततो नयेत् ॥

तदन्ते शान्तिहोमं च पञ्चाहं त्र्यहमाचरेत् ।
लिङ्गादावर्चिते गन्धपुष्पाद्यैस्त्वन्यवर्णके ॥

सर्वेषामपि वर्णानां मसूरीरोगमादिशेत् ।
शिवं संपूज्य विधिवद्दिशाहोमं तु कारयेत् ॥ 85

पञ्चाहं त्रिदिनं वापि प्रभूतं तु हविर्नयेत् ।
अकस्माद्बिल्ववृक्षे तु पतिते बोधिसंज्ञिते ॥

समूले नृपतेर्व्याधिमादिशेन्मृतिसूचनम् ।
शिवं संपूज्य विधिवच्छ्रेष्ठां शान्तिं समाचरेत् ॥

तद्देशे शान्तिहोमं च यद्देशे पतितस्तरुः ।
तज्जातीयं तरुं तत्र न्यसेद्वा तत्समीपके ॥

तच्छाखाः पतिताश्चेद्धि राष्ट्रक्षोभो महान्भवेत् ।
शान्तिं श्रेष्ठस्य मध्यं तु दिशाहोमं तु कारयेत् ॥

तदेकशाखापतने कलहो भुवि जायते ।
शान्तिं श्रेष्ठाधमां कुर्यात् क्रमादेवं त्रिधा मतम् ॥ 90

द्विसप्ताहं नवाहं वा सप्तपञ्चाग्निभं तथा ।
शान्तिं समाचरेद्वाथ पक्षेषु त्रिषु चाग्रजाः ॥

एवमेवान्यवृक्षाणां प्रधानानां समाचरेत् ।
शस्त्रभादिसमुत्पन्ने दुर्भिक्षं जायते भुवि ॥

मूर्तिहोमं त्रिसप्ताहं कारयेच्छैवमुत्तमम् ।
नरा मृगाश्च पशवः पक्षिणो वा सरीसृपाः ॥

जन्मताश्चेत्तु सप्ताहं दिशाहोमं त्र्यहं तु वा ।
कारयेत्त्रिदिनं वाथ गजाश्वमरणोद्भवे ॥

अतिवृष्टिसमुत्पत्तौ भुवो दुर्भिक्षतां वदेत् ।
सक्तुप्रस्थसहस्रैश्च रात्रिचूर्णैस्तथा मतैः ॥ 95

तदर्धैर्वा तदर्धैर्वा शतप्रस्थैस्तदर्धतः ।
अर्धैर्वा स्नापयेद्देवं स्नपनोक्तप्रकारतः ॥

अलोऽथ रजनीं पश्चात् कर्पूरेण विमिश्रिताम् ।
षड्वेदनेत्रमात्रं तु वेष्टयेल्लिङ्गपिण्डिके ॥

बेरं वागरुकर्पूरवर्तिदीपाननेकशः ।
मुद्गान्नं दापयेत्पश्चाच्छान्तिहोमं तु कारयेत् ॥

एवं कुर्यात्तु सप्ताहं पञ्चाहं त्रिदिनं तु वा ।
राज्ञः प्रधानमहिषी प्रधानाश्वो गजोऽथवा ॥

गुरुः पुरोहितो वाथ मृतश्चेन्नृपतेर्भयम् ।
संपूज्य देवदेवेशं सप्ताहं शान्तिमाचरेत् ॥ 100

पञ्चाहं त्रिदिनं वाथ गजाश्वमरणे नयेत् ।
मृत्युजिन्मनुना साष्टसहस्राख्यधकेन तु ॥

तोयेन सेचयेद्राज्ञो मस्तके तं मनुं स्मरन् ।
शेषोदं स्नानपानार्थं दद्यादायुष्यसिद्धये ॥

प्रत्यहं होमरक्षां च देवदेवप्रसादजम् ।
भस्मापि नेयमाचार्यैश्शैवसिद्धान्तपारगैः ॥

सप्ताहाभ्यन्तरे तांश्च वरयेन्मतिमान्नृपः ।
गुरुं पुरोहितं वाथ महिषीं गजमेव च ॥

वाजिनं वा तदन्येवं राजराजाङ्गमाहरेत् ।
प्रासादे मण्टपादौ वा प्राकारे गोपुरेऽथवा ॥ 105

परिवारालयोर्ध्वे वा नृपस्य भवनोपरि ।
गृहेषु माळिकादौ वा श्वारोहस्तस्य रोदनम् ॥

मार्जारप्रमुखानां वा रोदनं यदि जायते ।
स्थानभ्रंशं तदा मर्त्याः प्राप्नुयुस्तन्निवृत्तये ॥

तं हत्वाथ ततस्त्यक्त्वा पुण्याहं वाचयेत्ततः ।
शान्तिं तत्र नयेद्दर्शा रोहणे रोदनेऽपि च ॥



शान्तिहोमोऽथवा घोरजपो मार्जाररोदने ।
शिवारोहे विशेषेण शान्तिमेकाहमाचरेत् ॥

अश्वालयेऽग्नौ संजाते सप्ताहं शान्तिमाचरेत् ।
लिङ्गे बेरे च पीठादौ खद्योतारोहणे सति ॥ 110

राज्ञि वा तन्महिष्यादौ चान्यस्मिन् पुरुषेऽथवा ।
तेषां रोगं विजानीयाद्देवे चेद्राजदोषदम् ॥

तं हत्वा तांश्च संप्राप्य शान्तिहोमं समाचरेत् ।
स्नपनं च शिवे कुर्यादेकाहं त्रिदिनं तु वा ॥

नृपतेश्च मनुष्याणां देहे घोरं जपेत्तु वा ।
लिङ्गमूले च पीठे वा बेरे वा गर्भगेहके ॥

परिवारेऽथ जायेरञ्जन्तवो वाथ मक्षिकाः ।
प्रचुराश्चेद्भुवःक्षोभो भवेत्तद्दोषशान्तये ॥

तत्स्थानं शोधयित्वाथ्वन्धावेर्नयेद्दृढम् ।
पुण्याहं वाचयित्वान्ते शान्तिं युक्त्या समाचरेत् ॥ 115

कवाटोद्घाटने वाथ पिधाने स्वयमेव च ।
संजाते राष्ट्रविक्षोभश्शान्तिं सप्ताहमाचरेत् ॥

चरन्ति केतवो व्योम्नि नानारूपाः समन्ततः ।
सूर्ये वास्तंगते तस्मिन्नुदयात्पूर्वमेव वा ॥

दृश्यन्ते श्वेतरक्तादिवर्णा नक्षत्रसन्निभाः ।
दीर्घपुच्छा यदा विद्याद्राष्ट्रक्षोभं महत्तरम् ॥

शान्तिं कुर्यात्तदा श्रेष्ठमध्यमाधममार्गतः ॥

इति उत्तरकामिकाख्ये महातन्त्रेऽद्भुतशान्तिविधिः एकत्रिंशतितमः पटलः ॥

—०—

## अनुकर्मविधिः ॥

अनुकर्मविधिं वक्ष्ये सर्वेषां च सनातनम् ।
प्रासादे पतिते भिन्ने वक्त्रे जीर्णे च दिग्भ्रमे ॥

हीने जात्यादिसंस्थाने मानोन्मानादिहीनके ।
तत्तद्द्रव्यैर्यथोक्तैर्मानयुक्तं तथा नयेत् ॥

मानयुक्तं तु यद्वस्तु तत्सर्वं पूर्ववन्नयेत् ।
मानयुक्तमधिष्ठानाद्यङ्गं यद्विपरीतजम् ॥

तदप्यलक्षणं तस्याप्यन्यथाभाव इष्यते ।
स्वायम्भुवादिलिङ्गेषु कल्पितं पूर्ववन्नयेत् ॥

शास्त्रोक्तं वाथ तन्नेयं तत्र दोषो न विद्यते ।
अथवाश्मभयं वाहोऽवाहे स्यादिष्टकामयम् ॥ 5

मानयेन्मानवे चापि कूटपञ्जरकोष्ठकाः ।
अस्थानस्था विधातव्याः स्वस्थानस्था विशेषतः ॥

नागरे नागरं कुर्याद्वेसरे वेसरं मतम् ।
द्राविडे च तथा कार्यं वराटादौ तथा मतम् ॥

घनेऽघने विमाने तु तथा भवनमिष्यते ।
भवनं जीर्णमन्यस्मिन् कुर्वन्दिक्षु च कारयेत् ॥

पूर्वस्मिन्नुत्तरे वापि कुर्यात्कोणेषु बुद्धिमान् ।
द्वारं पूर्वदिशि स्यात्पश्चिमद्वारमेव वा ॥

नष्टे संस्थापयेद्गर्भं तथा चाष्टकामपि ।
नासिकाद्यङ्गहीने तु पुनस्तद्वत्समाचरेत् ॥ 10

प्रत्यहं चार्चनं कार्यं शान्तिहोमसमन्वितम् ।
ततः पाशुपतास्त्रेण प्रतिभागं सहस्रकम् ॥

हुत्वा शान्त्यम्भसा प्रोक्ष्य कुशैस्स्पृष्ट्वा जपेद्गुरुः ।
बिलोमार्घ्यं ततो दत्वा विसृजेत्तत्वतस्त्वपान् ॥

तदन्ते मूर्तिमूर्तीशौ लिङ्गपिण्डयादिसंस्थितान् ।
सुवर्णान्तरया रज्ज्वा वृषभेण प्रवाल्येत् ॥

शिवमस्तु गृणंल्लोकैः प्रक्षिपेत्तु जले गुरुः ।
भूयः पुष्पार्घ्यकं हुत्वा दिक्पतीनां प्रतर्पणम् ॥ 70

प्रासादवास्तुशुद्ध्यर्थं होतव्यं तु शतं शतम् ।
महापाशुपतास्त्रेण प्रासादं तत्र रक्षयेत् ॥

तन्मानमपरं चात्र स्थापयेद्देशिकोत्तमः ।
स्वयमुद्भूतलिङ्गानां दैविके चार्षकेऽपि वा ॥

गाणपे लोहजे चैव नदीप्रस्रवणादिषु ।
एवमादिषु लिङ्गेषु नैव कार्या घटस्थितिः ॥

मानुषाणां च लिङ्गानां घटकार्यं तदुच्यते ।
सप्ताहान्तं च पक्षान्तं मासान्तं चेद्घटस्थितिः ॥

तदूर्ध्वं कुम्भसंस्थश्चेद्देवेशस्सर्वदोषकृत् ।
तस्मात्सर्वप्रयत्नेन मासान्ते चाथ पूर्वके ॥ 75

संस्थाप्य बाललिङ्गाद्यं तन्मध्ये विन्यसेन्मनुम् ।
मासादि द्वादशाब्दान्तं तदन्तरदिनेष्वथ ॥

तस्मादादाय देवेशं मूललिङ्गे निवेशयेत् ।
मूललिङ्गं न लभ्यं चेद्देशकालानुरोधतः ॥

षट्त्रिंशदब्दपर्यन्ते मूललिङ्गे निवेशयेत् ।
बाललिङ्गप्रतिष्ठोक्तदिनपक्षादिहोमकम् ॥

द्विगुणं त्रिगुणं तस्य चतुर्विंशतिवत्सरे ।
कृतं चेद्द्विगुणं होममाचरेद्देशिकोत्तमः ॥

षट्त्रिंशद्वत्सरोर्ध्वं तु मूलस्थानं तदेव हि ।
तत्रस्थं बाललिङ्गाद्यं त्यक्त्वा मूलं तु विन्यसेत् ॥ 80

सकलेऽप्येवमेव स्याद्विशेषः कश्चिदिष्यते ।
द्वादशाब्दान्तरेऽवश्यं मूलस्थाने निवेशयेत् ॥

नो चेत्तत्रैव संस्थाप्य मूलबेरं विशेषतः ।
एष एव विधिः प्रोक्तः प्रासादादौ शिवद्विजाः ॥

किं तु खड्गेऽङ्गले मन्त्रान् विन्यस्यापरमारभेत् ।
परिवारामरानेवं घटस्थान् स्थापयेद्गुरुः ॥

शिवलिङ्गादि यद्वस्तु यदङ्गेन प्रतिष्ठितम् ।
दैवैश्शिवलिङ्गमान्यैर्वा शिवदीक्षाविवर्जितैः ॥

भूयोऽपि तस्य संस्कारं कुर्यात्पूर्वोक्तवद्गुरुः ।
शैवसिद्धान्तमार्गस्थादन्ये पाशुपतादयः ॥ 85

तैरपि स्थापितं लिङ्गं पुनस्संस्कृत्य पूजयेत् ।
आदौ पाशुपताः प्रोक्ताः सोमसिद्धान्तकाः परे ॥

लाकुलाश्चापरे ज्ञेयाः प्रत्येकं त्रिविधाः स्मृताः ।
वामदक्षिणसिद्धान्तभेदेन नवभेदिनः ॥

शैवाश्चतुर्विधास्त्वन्ये मन्त्रतन्त्रव्यवस्थिताः ।
गारुडा भैरवा वामभूततन्त्रव्यवस्थिताः ॥

प्रत्येकं त्रित्रिभेदेन पूर्ववत्संव्यवस्थिताः ।
तैरपि स्थापितं लिङ्गमादिशैवस्समर्चयेत् ॥

यामलं त्वपरं ज्ञेयं तच्च मिश्रमिहोच्यते ।
वामदक्षिणसिद्धान्तभेदेन त्रिविधं मतम् ॥ 90

वामं पारशिवार्हं स्याद्दक्षिणं भैरवार्हकम् ।
सिद्धान्तं यामलं शैवमादिशैवार्हकं विदुः ॥

व्यतिरिक्तं तु सिद्धान्ताद्रौद्रं सर्वमुदीरितम् ।
वामदक्षिणमिश्रादिभेदेन बहुभेदनम् ॥



लौकिकं वैदिकं चान्यदध्यात्ममतिमार्गकम् ।
तथा पाशुपतं सोमसिद्धान्ताख्यं च लाकुलम् ॥

गारुडं भैरवं वामं भूततन्त्रं च यामलम् ।
कापालं पाञ्चरात्रं च बौद्धमार्हमतं तथा ॥

बृहस्पतिमतं सांख्यं योगं वैखानसं तथा ।
वेदान्ताख्यं च मीमांसा पुराणं धर्मशास्त्रकम् ॥ 95

वास्तुशास्त्रं तथा सौत्रं षडङ्गमितिहासकम् ।
तथा वेदाश्च चत्वारो यत्तत्र परिचोदितम् ॥

सर्वं रौद्रं समादिष्टं सिद्धान्तं सौम्यमिष्यते ।
रौद्रैश्च स्थापितं यच्च विष्णवादिप्रतिमादिकम् ॥

तत्सर्वं शैवमापाद्य शैवस्सर्वं समर्चयेत् ।
लिङ्गाद्यमादिशैवेन स्थापितं पूजितं तु वा ॥

तद्रूपं पूजितं तैश्चेद्राष्ट्रं राजानमेव च ।
तद्ग्रामं ग्रामसंस्थांश्च सर्वान् हन्ति न संशयः ॥

तैस्तु संस्थापितं पूर्वमादिशैवेन पूजितम् ।
यदि तैः पूजितं पश्चात् सेनानी सेनया सह ॥ 100

अमात्यं मन्त्रिणं विप्रान् क्षत्रियं वैश्यमेव च ।
शूद्रान्तरजनान् सर्वानचिरान्नाशयिष्यति ॥

तस्माद्राजा प्रयत्नेन वारयेदचिरेण तान् ।
तैस्तु संस्थापितं पश्चादादिशैवेन पूजितम् ॥

राज्ञो विजयदं चायुर्वृद्धिदं फलदं सदा ।
शान्तत्वाच्छैवमन्त्राणां सर्वेषां शुभदा मताः ॥

आभिचारकलिङ्गाद्य रौद्रैश्च स्थापितं च यत् ।
तन्मन्त्रोद्धारणं वक्ष्ये श्रूयतां द्विजसत्तमाः ॥

तत्स्थानं संप्रविश्याथ मृद्भाण्डांश्च विवर्जयेत् ।
शैलं लोहं च दारूत्थं संशोध्य च पुनः पुनः ॥ 105

कुड्याद्यं सुधयालिप्य स्थलं गोमयवारिणा ।
पुण्याहं वाचयित्वा तु वास्तुहोमं च कारयेत् ॥

पर्यग्निकरणं कृत्वा पुनः पुण्याहमाचरेत् ।
अस्त्रतोयेन संप्रोक्ष्य पञ्चगव्येन शोधयेत् ॥

कर्षणादिप्रतिष्ठान्तं क्रियायां ये निवेशिताः ।
मन्त्रांस्तानुद्धरेन्मन्त्री महापाशुपतेन च ॥

महाजालप्रयोगेण सर्वमन्त्रांश्च संहरेत् ।
ओं हूं हां हं पुनर्हां हूं जालमुद्रा च संहृतिः ॥

तल्लिङ्गाद्यं च संशोध्य कुशभस्ममृदाम्भसा ।
कषायोदकसंयुक्तं गोमूत्रेणोदकान्तरम् ॥ 110

पञ्चगव्येन संस्नाप्य गन्धपुष्पादिभिर्यजेत् ।
लिङ्गस्थशम्बरे ज्ञाते पूर्ववन्मन्त्रसंहृतिः ॥

अविज्ञाते च तन्मन्त्रे प्रणवं योजयेद्गुरुः ।
जन्तुकल्पवशार्थं तु मन्त्रमस्त्रं नियोजयेत् ॥

एकीभूतांस्तु दीपेन मन्त्रांस्तल्लिङ्गसंस्थितान् ।
स्मरन् समुद्धरेद्दीपं तल्लिङ्गाणुभिरन्वितम् ॥

पूर्वमन्त्रेण संहृत्य मुद्रया संहरेद्गुरुः ।
पुनःसंशोध्य तल्लिङ्गं पूर्वद्रव्यैस्स्वरेण च ॥

कर्षणादिप्रतिष्ठान्तमाचरेन्मानसीं क्रियाम् ।
स्वस्वमन्त्रसमोपेतां स्वस्वहोमसमन्विताम् ॥ 115

लिङ्गसंस्थापनोक्तेन प्रतिष्ठामाचरेद्गुरुः ।
लक्षणोद्धारणं नेष्टं जले चैवाधिवासनम् ॥

शयनस्थापनं चैव हित्वान्यत्सर्वमाचरेत् ।
गर्भगेहेऽथ तत्सर्वं मण्टपे वा समाचरेत् ॥

देवाग्रे तत्र कुण्डे वा स्थण्डिले वाथ होमयेत् ।
स्वयंभुदैविके बाणे चार्षे गाणाधिपे तथा ॥

छिन्ने वा स्फुटिते भिन्ने तत्र शान्तिर्विधीयते ।
दिशाहोमं ततः कुर्याद्वागाध्ययनं तथा ॥

अष्टोत्तरशतप्रस्थैः कुर्यात्क्षीराभिषेचनम् ।
शान्तिहोमं ततः कृत्वा स्नपनं कारयेत्ततः ॥ 120

ब्राह्मणान् भोजयेत्पश्चाच्छैवान् संभोजयेत्ततः ।
प्रभूतहविषं दत्वा ताम्बूलं दापयेत्ततः ॥
मध्यरात्रे बलिं दद्याद्ग्रामे वा नगरेऽथवा ।
मुद्गान्नं पायसं गौळं कदलीफलसंयुतम् ॥
सप्ताहमेवं कर्तव्यं सर्वदोषापनुत्तये ।
आचार्यं पूजयेन्नित्यं स्वर्णवस्त्रादिभिस्ततः ॥
तदन्ते स्नपनं कुर्यात् प्रभूतं तु हविर्ददेत् ।
सर्वैरङ्गैर्विशीर्णं चेत् पुनस्संस्थापयेन्नवम् ॥
लिङ्गे स्वायम्भुवादौ तु जीर्णादौ शान्तिरीरिता ।
सर्वलक्षणसंयुक्तमल्पदोषं तु वा भवेत् ॥ 125

प्रासादस्य तु विस्तारे रसमात्रान्न दुष्यते ।
उत्सेधे रविमात्रान्तं क्षन्तव्यं चाङ्गुलादिकम् ॥
द्विमात्रं तु स्थले प्रोक्तं स्तम्भाद्यङ्गेषु मात्रकम् ।
ग्रामखेटपुरादौ तु दण्डान्तं परिकीर्तितम् ॥
सालेषु हस्तमानान्तं यवान्तं लिङ्गमानके ।
चतुर्यवान्तमर्चासु मात्रान्तं पीठकल्पने ॥
द्वाराद्यङ्गेषु मात्रान्तं वालाग्रं ब्रह्मसूत्रके ।
तदप्यकार्यं लिङ्गाग्रे क्षन्तव्यं मानमीरितम् ॥

इति उत्तरकामिकाख्ये महातन्त्रे अनुकर्मविधिः द्वात्रिंशत्तमः पटलः ॥

## काम्ययोगविधानविधिः ॥

काम्ययोगविधानं तु प्रवक्ष्यामि समासतः ।
काम्यसिद्धिश्च मन्त्रैस्स्यान्मन्त्राश्च बहवो मताः ॥
सर्वे मन्त्रास्समर्थास्स्युस्सर्वे चेष्टफलप्रदाः ।
तेष्वघोराणुरत्यन्तदोषघ्नः कृष्णवर्णभाक् ॥
व्यालबद्धजटाजूटः कपालदलमण्डितः ।
क्षुरपिङ्गेक्षणोऽत्यन्तं श्वेतदंष्ट्रासमन्वितः ॥
चन्द्रचूडो विशालास्यो नागयज्ञोपवीतवान् ।
महाकायो महादंष्ट्री किङ्किणीरवसंयुतः ॥
महाशूलाग्रसंप्रोतमहासुरविनाशनः ।
खड्गखेटधनुर्बाणमुण्डकः कालशक्तिधृत् ॥ 5

वराभयकपालाहिपाशप्रासगदाकरः ।
दंष्ट्रे द्वे कीलनिर्याते वक्त्राग्रे भीषणे सिते ॥
स्वसेनारक्षको नित्यं परसेनाभयंकरः ।
वैरिप्रयुक्तकर्मघ्नस्सर्वव्याधिनिवारकः ॥
सर्वदोषविनाशे तु समर्थो भक्तवत्सलः ।
असिताङ्गादिभिर्नित्यमावृतो वा निरावृतः ॥
असिताङ्गो रुरुश्चण्डः क्रोधश्चोन्मत्तभैरवः ।
कपाली भीषणश्चैव संहारश्चाष्टमस्स्मृतः ॥
चतुर्भुजास्त्रिणेत्राश्च कृष्णवर्णा महाबलाः ।
त्रिशूलमुण्डसंयुक्ता हृदयाञ्जलिसंयुताः ॥ 10



सुदंष्ट्रा भीमवक्त्राश्च स्वामिचेष्टासमन्विताः ।
ओं जुंस इति मन्त्रोऽयं देवो मृत्युञ्जिदाह्वयः ॥
एष एवामृतेशस्स्यादादौ कूटयुतो न वा ।
रसादिशुक्लपर्यन्तधातुसप्ताक्षरान्वितम् ॥
हकारेण शरीरं तु रसमित्यादितः पठेत् ।
अन्ते च रक्ष रक्षेति वीप्सितं च पदं पठेत् ॥
आदौ स्याद्देवदेवेशेति (पदं) समुद्धरेत् ।
प्राणं च देवदत्तस्य मूलमन्त्रं नियोजयेत् ॥
पीठं जुंकारवत्प्रोक्तं स्यान्मूर्तिरों जुंसतो भवेत् ।
मध्ये निवेशयेत्कूटं प्रासादं वा नवात्मकम् ॥ 15
कण्ठोष्ठ्यं वा हकाराद्यं ब्रह्माण्यङ्गानि कल्पयेत् ।
अनेन सदृशो नास्ति मन्त्रो मृत्युञ्जयो द्विजाः ॥
सुधाकलशमध्यस्थः श्वेतपद्मासनास्थितः ।
चतुर्भुजस्त्रिणेत्रश्च जटाखण्डेन्दुमण्डितः ॥
व्याघ्रचर्मपरीधानो नागेन्द्रोरोविभूषणः ।
त्रिशूलं चाभयं चोर्ध्वे सुधाकलशमध्ययोः ॥
दधानश्चाष्टभुजश्चेत् स त्रिशूलं चाक्षमालिकाम् ।
कपालं कुण्डिकां वामे योगमुद्रां करद्वये ॥
अनेन सदृशो मन्त्रो नास्ति प्राणादिरक्षणे ।
न भविष्यति भूतश्च सत्यमेतदुदाहृतम् ॥ 20
भोजने चापि कर्तव्यं त्र्यक्षरेणामृतीकृतम् ।
तेनामृतं भवत्याशु स्वादितं मृत्युजिद्भवेत् ॥
अमृतेशेन देवेन जलं संग्राह्य यत्नतः ।
शतजप्तं पिबेत्तोयममृतीभवति ध्रुवम् ॥
क्षीरेण सहसंपृक्तदूर्वाकाण्डमखण्डितम् ।
ब्रह्मवृक्षेन्धनैर्दीप्ते वह्नौ जुहुयान्मृत्युभाक् ॥
देवं समुपासते यस्तु नित्यं मृत्युञ्जयात्मकम् ।
नाचिरेणैव कालेन मृत्युस्तस्य भविष्यति ॥

मासाद्वर्षशतं प्रोक्तं द्विमासाद्द्विशतं भवेत् ।
प्रतिमासप्रयोगेण चाब्दैनैकेन सुव्रताः ॥ 25
कालः प्रदक्षिणं कृत्वा स्तुत्वा संपूज्य साधकम् ।
गच्छत्यत्र न सन्देहस्सत्यं विप्रा मयोदितम् ॥
स पुनाति दृशा वाचा चरणेन करेण च ।
नदीजनपदोद्यानपुरादीनि न संशयः ॥
किं पुनः प्राणिनं भीतं स्वात्मानं स्वाश्रयं च वा ।
अघोरास्त्रमतो वक्ष्ये बीजमालात्मकं द्विजाः ॥
रक्तवस्त्रधरं देवं भिन्नाञ्जनसमप्रभम् ।
भुजाष्टकसमोपेतमूर्ध्वकेशं सुदंष्ट्रिणम् ॥
स्पष्टदंष्ट्राधरोष्ठं च दीप्ताग्निसमलोचनम् ।
किङ्किणीमालया भ्राजत्पादनूपुरसंयुतम् ॥ 30
सप्तायुधसमायुक्तं सर्वाभरणभूषितम् ।
शुक्लयज्ञोपवीतं च रक्तपुष्पोपशोभितम् ॥
घृतवृश्चिकसंयुक्तं कण्ठाभरणभूषितम् ।
मेखलोदरकण्ठेषु कर्णहस्तकरवाहुषु ॥
पादयोर्हस्तयोर्नागैश्चतुर्दशभिरुज्ज्वलम् ।
पङ्कजासनमध्यस्थं त्रिणेत्रं रौद्ररूपिणम् ॥
शूलमूलं च वेतालं खड्गं डमरुकं शुभम् ।
दधानं दक्षगैर्हस्तैर्वामगैश्शूलमध्यमम् ॥
घण्टां खेटं कपालं च शत्रुसंक्षयसंमुखम् ।
अग्रस्थवामपादं च ध्यात्वाघोरास्त्रमर्चयेत् ॥ 35
अन्यथाप्युच्यते ध्यानं यथावच्छृणुत द्विजाः ।
ध्यायेत्सूर्यसहस्राभमघोरास्त्रमरिंदमम् ॥
प्रदीप्तदशनप्रान्तं प्रकाशमुखकन्दरम् ।
त्र्यक्षं तटिल्लताजिह्वं दीप्तभ्रूश्मश्रुमूर्धजम् ॥
सर्पोपवीतं शूलासिशक्तिमुद्गरधारिणम् ।
चतुर्भुजं चतुर्वक्त्रं स्फुरच्चन्द्रार्धशेखरम् ॥

नृत्यमानं महाकायं नागाभरणभूषितम् ।
देवदानवदैत्यानां दर्पितानां विमर्दकम् ॥

प्रस्फुर स्फुर इत्येवं हृदयं परिकीर्तितम् ।
घोरघोरतरेत्येतत् तच्छिरस्संप्रकीर्तितम् ॥ 40

ततश्च तनुरूपेति शिखामन्त्रः प्रकीर्तितः ।
चटप्रचटशब्दं तु दीप्सितं कवचं भवेत् ॥

ततः कह कहेत्युक्त्वा बम मन्दयेति स्मरेत् ।
घातयेति द्विरुच्चार्य पञ्चमाङ्गं प्रकीर्तितम् ॥

प्रान्ते स्याद्धुंफडित्येवं चतुर्थ्यन्तं हृदादिकम् ।
नमस्कारादिसंयुक्तमादौ प्रणवसंयुतम् ॥

परचक्रप्रमथने महाव्याधिप्रकोपने ।
शान्तिके पौष्टिके वश्ये प्रायश्चित्ते विचिन्तयेत् ॥

किमनेन बहूक्तेन भयकालेऽप्युपस्थिते ।
मन्त्रेणानेन नश्यन्ति ज्वरग्रहविषादयः ॥ 45

परैर्यदभिचारादि कर्म मन्त्रौषधादिकम् ।
यन्त्राणि योगयुक्तानि पावके शलभा यथा ॥

तथा पाशुपतास्त्रं च शिवास्त्रं क्षुरिकास्त्रकम् ।
अनेनैव प्रकारेण ध्यात्वा संपूजयेद्गुरुः ॥

अघोरमर्चयित्वाथ तदग्रेऽस्त्रं समर्चयेत् ।
दक्षिणेऽघोरदेवस्य मध्ये देवं सदाशिवम् ॥

विशेषाद्दक्षिणे वक्त्रेऽघोरदेवं समर्चयेत् ।
चतुर्दिक्षु यजेदस्त्रचतुष्कं शिवपूर्वकम् ॥

अघोरपूर्वकं पाशुपतास्त्रं क्षुरिकास्त्रकम् ।
एवमभ्यन्तरेऽभ्यर्च्य तज्जातीन् परितो यजेत् ॥ 50

हित्वा शिवास्त्रं तत्रैव यजेत् प्रत्यङ्गिरां पराम् ।
संग्रामविजयं वाथ क्षुरिकास्थानमध्यमे ॥

एवमभ्यर्चयेद्योऽसौ सोऽयं मत्सदृशो मतः ।
तेन नासाध्यमस्तीह लोके त्रिभुवने द्विजाः ॥

सत्यमेतत्समुद्दिष्टं गोपनीयं प्रयत्नतः ।
पालनीयो विशेषेण साधकाधिपतिस्सदा ॥

दक्षिणामूर्तिमन्त्रस्योद्धारस्त्वत्र निगद्यते ।
वाक्सिद्धिस्तेन मन्त्रेण जयोत्पादे च शस्यते ॥

फलान्यन्यानि सर्वाणि तत्प्रसादात् भवन्ति हि ।
ओं नमो भगवच्छब्दं संबुध्यन्तं नियोजयेत् ॥ 55

दक्षिणामूर्तिशब्दं च तथैव विनियोजयेत् ।
मेधां प्रयच्छ स्वाहेति मूलमन्त्र उदाहृतः ॥

स्वरेषु हृदयादीनामुद्धारः परिकीर्तितः ।
नमस्स्वाहा वषड् हुं च फडित्यन्ते नियोजयेत् ॥

[ओं नमो भगवन्दक्षिणामूर्ते मेधां प्रयच्छ स्वाहा]

शुद्धस्फटिकसंकाशं प्रसन्नवदनान्वितम् ।
गङ्गाचन्द्रसमोपेतं कुण्डलीकृतमूर्धजम् ॥

व्याघ्रचर्मपरीधानं चतुर्बाहुसमन्वितम् ।
शुद्धस्फटिकमालां च ज्ञानमुद्रां च दक्षिणे ॥

वामे पद्मं च वह्निं च वरदाभयदं तु वा ।
पुस्तकेन युतं वाथ दधानं नयनत्रयम् ॥ 60

महावृषभसंयुक्तमृषिसंघैस्समावृतम् ।
ध्यात्वैवं देवदेवेशं सर्वकार्याणि साधयेत् ॥

यान्तारूढं (हकारं च) षष्ठस्वरसमन्वितम् ।
चतुर्दशस्वरोपेतं बिन्दुनादविभूषितम् ॥

अथवान्यप्रकारेण भैरवं विकृताननम् ।
ऊर्ध्वरेफसमायुक्तं भैरवं बीजमुत्तमम् ॥

संग्रामविजयो नाम्ना मन्त्रोऽयं परिकीर्तितः ।
अस्य मन्त्रप्रभावेण त्रैलोक्यविजयी भवेत् ॥

यत् किंचित् क्रियते कर्म त्रैलोक्ये येन केनचित् ।
रहितो मन्त्रराजेन नैव सिध्यति साधकः ॥ 65



आरूढाब्जं सशक्ति हृदयकमलजं भास्करं पद्महस्तं
वक्त्रैर्युक्तं चतुर्भिः परमरुणचतुश्शक्तिभिर्व्याप्तदिक्कम् ।
कायार्धारूढकान्तं शिवमभयवरं साक्षमालाकपालं
मूर्त्यै पाशाङ्कुशाभ्यां ग्रहगणनमितं नौमि खट्वाङ्ग-
हस्तम् ॥

अङ्गानि च षडङ्गानि क्रमेणैव समुद्धरेत् ।
विस्तारादिचतुश्शक्तीश्चतुर्वक्त्रेषु पूजयेत् ॥

भोगाङ्गं पूजयेत्पश्चाद्धृदादीनग्निकोणतः ।
नेत्रं दक्षिणदिग्भागे गर्भावरण ईरितः ॥

दीप्तयादिशक्तयो बाह्ये ग्रहास्तद्बाह्यमार्गतः ।
तद्बहिर्लोकपालास्तु क्रमेणाभ्यर्चयेद्गुरुः ॥

कामाचाररतो वापि भावयेद्भास्करं सदा ।
वक्ष्ये प्रत्यङ्गिरोद्धारं समासाद्द्विजसत्तमाः ॥ 70

सर्वभक्तिप्रदं सर्वव्याधिविध्वंसनं परम् ।
ज्वरापस्मारमारीणां नाशनं क्षयनाशनम् ॥

शत्रुकृत्यादिसंभूतरोगानीकविनाशनम् ।
चतुरङ्गबलोपेतशत्रुक्षयकरं परम् ॥

स्वसेनारक्षकं नित्यं समर्थं सर्वकर्मसु ।
ओं ह्रींकारं समुद्धृत्य तदन्ते कृष्णवाससे ॥

ततश्च सिंहवदने महावदन इत्यपि ।
महाभैरविवर्णे च सर्वशत्रुपदं तथा ॥

कर्मविध्वंसिनीत्येवं परमन्त्रपदं ततः ।

[छेदिनीत्युद्धरेत्पश्चात्सर्वभूतदमन्यपि ।
सर्वभूतांस्ततो बन्ध बन्धेति पदमुद्धरेत् ॥

सर्वविघ्नानिति पदं छिन्धि छिन्धीति यत्पदम् ।
सर्वव्याधिं निकृन्तेति निकृन्तेति पदं च यत् ॥]

सर्वदुष्टांस्तथा भक्ष भक्षेति पदमुद्धरेत् ॥ 75

ज्वालाजिह्वे करालेति पदं दंष्ट्रेपदं पुनः ।
प्रत्यङ्गिरेपदं ह्रीं च नमोऽस्त्विति पदं ततः ॥

ते स्वाहेत्युद्धरेदेष मन्त्रः प्रत्यङ्गिरात्मकः ।
प्रत्यङ्गिरेयं विख्याता शतवर्णस्वरूपिणी ॥

आद्यसप्ताक्षरं हृत्याच्छिरः पञ्चदशाक्षरम् ।
दशाक्षरा शिखा तस्मात् कवचं सप्तवर्णकम् ॥

तथैव तस्मान्नेत्राणुश्चतुस्त्रिंशद्भिरस्त्रकम् ।
त्रयोदशाणुर्गायत्री सावित्री सप्तवर्णतः ॥

नमस्स्वाहा वषट् वौषड्ढुंफड्युक्ता हृदादयः ।
सिंहवक्त्रोग्रदंष्ट्राग्निसप्रभोर्ध्वशिखान्विताम् ॥ 80

कृष्णाञ्जननिभां वृत्तरक्तनेत्रत्रयान्विताम् ।
वहन्ती सव्यहस्ताभ्यां शूलं डमरुकं परम् ॥

वहन्तीं वामहस्ताभ्यां मुण्डं शेषे तु पल्लवम् ।
अट्टहासादिशब्देषु गर्जितां मुदितामपि ॥

कृष्णाम्बरधरां सान्द्रमांसास्यां नर्तने रताम् ।
मौक्तिकाभरणैर्योग्यैस्सर्वावयवभूषिताम् ॥

कृष्णाजिनधरां नाम्ना भैरवीमर्चितां सुरैः ।
देवीं ध्यात्वैकचित्तस्तु सर्वशत्रून्विनाशयेत् ॥

ध्वंसयेत्सर्वरोगांश्च परमन्त्रान्निवारयेत् ।
विद्याधरत्वलाभाय कृष्णागरुयुतं पुरम् ॥ 85

अथवा नाभिकिञ्जल्कं जुहुयात्साधकोत्तमः ।
कदम्बकलिकाहोमाद्यक्षिणी सिद्धयति ध्रुवम् ॥

प्रियङ्गुकदलीपुष्पाण्याहतो जुहुयाद्बुधः ।
करवीरस्य पुष्पाणि घृतं च मधुसंयुतम् ॥

खादिरादिसमिच्चैव क्षिप्रमातुष्टिकारिका ।
सिद्धार्थं चैव मुक्तां च अश्वमांसीसमन्वितम् ॥

पायसं पयसा युक्तं तत्क्षणात् क्षणतां भवेत् ।
धुर्धूरपुष्पसंयुक्तं खदिरोर्ध्वसमन्वितम् ॥

कृष्णतिलं घृतं चैव स्तम्भयेदभिचारतः।
रक्तपङ्कजपुष्पं च तत्समं रक्तचन्दनम्॥

कपिलाघृतसंयुक्तं कपिलाक्षीरसंयुतम्।
होमयेद्दशसाहस्रं क्षिप्रं मोहयति ध्रुवम्॥

महिषोद्भूतमार्कं च गार्दभं क्षीरमेव च।
गिरिकायाश्च तत्पुष्पमङ्गारास्थिसमन्वितम्॥

जुहुयाच्छतसाहस्रं तत्कुलोत्साधनं भवेत्।
कुङ्कुमं रोचनां चैव कार्पासफल्गुगुग्गुलु॥

वेणुना भेदनं सद्यो भवेदेव न संशयः।
निम्बपुष्पं तथा व्रीहिं निम्बतैलसमायुतम्॥

अर्कक्षीरसमायुक्तं होमयेदपि पारतम्।
राजयक्ष्मादिरोगाणां शान्तये जुहुयाद्गुरुः॥

घृताक्तेन तिलेनैव दूर्वया घृतसिक्तया।
दुकूलचरुलाजांश्च मधुत्रयसमन्वितान्॥

औदराणां च रोगाणां शुण्ठीं पथ्यां मरीचिभिः।
जुहुयादग्निसिद्ध्यर्थमग्निबीजपुरस्सरम्॥

अक्षिरोगादिरोगाणां क्षीरेण च घृतेन च।
मधुना होमयेत्सर्वं नेत्रमन्त्रेण मन्त्रवित्॥

विषमज्वरनाशाय चूतपत्राणि होमयेत्।
घृतेन सह सार्द्राणि प्लुतमृत्युंजिता यथा॥

सर्वोपद्रवनाशाय रुद्रशान्त्या खिलादिभिः।
वचाद्यैर्वातशान्त्यर्थं सर्षपैः श्लेष्मशान्तये॥

पित्तशान्त्यै च जुहुयाच्चन्दनाद्यैस्सुशीतलैः।
सहस्रमयुतं वाथ लक्षं तत्त्रिगुणं तु वा॥

इति उत्तरकामिकाख्ये महातन्त्रे काम्ययोगविधानविधिः त्रयस्त्रिंशत्तमः पटलः॥

---

## संप्रोक्षणविधिः॥

संप्रोक्षणविधिं वक्ष्ये सर्वदोषनिकृन्तनम्।
आवर्तं चेत्यनावर्तं पुनरावर्तनं तथा॥

ततोऽन्तरितकं चेति प्रोक्षणं तु चतुर्विधम्।
मूलबालगृहान्मूलस्थाने यत् स्थापनं मतम्॥

तदावर्तमिति प्रोक्तमनावर्तं ततो भवेत्।
पतितैः पातकैः स्पृष्टे चण्डालैरन्त्यजैस्तथा॥

मासोर्ध्वपूजाहीने च विश्लिष्टे स्थलकर्मणि।
लिङ्गे पीठे च चलिते त्वनावर्तमिति स्मृतम्॥

मूलालयात्समादाय स्थाप्य बालालये पुनः।
तस्मात्संस्थापनं मूले पुनरावर्तनं स्मृतम्॥

प्रतिमानां च मिश्राणां शक्तीनामायुधादिभिः।
स्फोटने वर्णहीने च अङ्गोपाङ्गविहीनके॥

चर्मच्छेदेऽक्षहीने च भूषणादिविहीनके।
अम्बुजासनहीने च स्थलकर्मविहीनके॥

विश्लिष्टे पीठबन्धे तु तदन्तरितमुच्यते।
यात्राहोमयुगावर्तेऽन्ये स्युस्तद्विहीनकाः॥



आवर्ते तु द्विजास्सर्वान् मासपक्षर्क्षकादिकान्।
लिङ्गसंस्थापनस्योक्तमार्गेणैव समाचरेत्॥

न तिथिर्न च नक्षत्रं न वारांशकादिकाः।
कालापेक्षां विना कुर्याच्छेषाण्यन्यानि सुव्रताः॥

आवर्तवदनावर्तं कुर्यादेभिर्विहीनकम्।
लक्षणोद्धारणं तोयाधिवासः शयनं तथा॥

अनावर्तमिति ज्ञेयं पुनरावर्तनं त्विह।
सर्वमावर्तवत्कुर्यात् किं तु मूलद्वयान्वितम्॥

ततोऽन्तरितकं विप्रास्संक्षेपेण वदाम्यहम्।
रत्नन्यासाक्षिमोक्षौ च जले चैवाधिवासनम्॥

शय्याधिवासनं विप्रा विना वै बेरकर्मणि।
नववस्त्रेण संवेष्ट्य बेरस्य सकलाङ्गकम्॥

प्रागुक्तविधिना कुम्भन्यासं होमं च कारयेत्।
स्नपनं कारयेदन्ते चान्यत्सर्वं समानकम्॥

एवं यः कारयेन्मर्त्यस्स पुण्यां गतिमाप्नुयात्॥

इति उत्तरकामिकाख्ये महातन्त्रे संप्रोक्षणविधिः चतुस्त्रिंशत्तमः पटलः॥

—o—

## पीठप्रतिष्ठाविधिः॥

पीठसंस्थापनं वक्ष्ये तल्लक्षणपुरस्सरम्।
लिङ्गायामविशालं तु पीठं सर्वार्थसाधकम्॥

विष्कंभसमतुङ्गं च छायादोषविवर्जितम्।
पूजांशस्योदयप्रान्तपीठनिर्गमनान्वितम्॥

ईदृशं पीठमापाद्य को न सिद्ध्येत मानवः।
लिङ्गायामसमं वापि लिङ्गायामार्धमेव वा॥

सप्तविंशतिमानानि षड्विंशत्यंशमानकम्।
लिङ्गस्य तारत्रिगुणं भवेत्पञ्चगुणं तु वा॥

तदन्तरे तथा भक्ते सप्तविंशतिमानकम्।
लिङ्गमानवशात्पीठविस्तारं परिकीर्तितम्॥

त्रियङ्गुलं समारभ्य व्योमाङ्गुलविवृद्धितः।
षोडशाङ्गुलसंयुक्तविंशकाङ्गुलकावधि॥

हस्तादि नवहस्तान्तं लिङ्गानां पीठविस्तृतिः।
लिङ्गायामाधिकः पीठविस्तारो नेष्यते द्विजाः॥

अग्रं मूलसमं वास्य हीनमूलं तु नेष्यते।
षडंशात् षोडशांशान्तं कृत्वा मूलविशालकम्॥

एकांशेनाग्रविस्तारं पीठं वा परिकीर्तितम्।
विष्कंभोत्सेधतुङ्गस्य पीठस्य ब्रह्मभागके॥

चतुर्भागे त्रिभागांशाधिकं वा पीठतुङ्गकम्।
तयोर्मध्येऽष्टधा भक्ते नवमानमुदीरितम्॥

नन्द्यावर्तशिला चाल्पे वर्जनीया द्विजोत्तमाः।
मानुषे पीठमाने स्यात्स्वयंभूतादिकेऽपि च॥

चललिङ्गेऽपि सामान्यं विधानं किंचिदुच्यते।
लिङ्गमानसमं वार्धद्विगुणं पीठमिष्यते॥

विस्तारमध्यसप्तांशे मानं सप्तदशैव हि ।
मूलं प्रोक्तप्रमाणं च संग्राह्यं द्विजसत्तमाः ॥

विस्तारार्धसमं तुङ्गं समं चार्धाधिकं तु वा ।
प्रत्येकं सप्तधा भक्ते मानं सप्तदश द्विजाः ॥

स्वायम्भुवादिलिङ्गेषु लिङ्गायामादिविस्तरः ।
पीठस्य तु न दोषस्स्यात्ज्ञात्वैवं पीठमाचरेत् ॥ 15

वेदाश्रं वर्तुलं वाथ संमतं पीठरूपकम् ।
लोहजे रत्नलिङ्गे वा बाणलिङ्गेऽपि वा मतम् ॥

बेरायामत्रिपादं वा तच्चतुर्थांशमेव वा ।
कल्पयेत्पीठविस्तारं मध्यमे षोडशांशकम् ॥

मानं सप्तदशाख्यातं समाश्रं वायतं तु वा ।
द्विगुणावधि तन्मध्ये कृते प्राग्वत्तथा मतम् ॥

पीठायामं समाख्यातं तस्योत्सेधश्च कथ्यते ।
विस्तारसमुत्सेधस्तदर्धो वा तदन्तरे ॥

विकारांशं भवेत्सप्तदशमानं द्विजोत्तमाः ।
पादाधिकं तयोत्सेधं विस्तारात् परिकल्पयेत् ॥ 20

वसुधा भाजिते मध्ये नवमानमिति स्मृतम् ।
बिम्बोत्सेधचतुर्भागं पद्मोत्तुङ्गं परं मतम् ॥

बेरायामाष्टभागैकमपरं परिकीर्तितम् ।
अष्टधा मध्यमं भक्त्वा नवमानं प्रकल्पयेत् ॥

स्थानके वा तलायामादेकैकाङ्गुलवृद्धितः ।
द्वादशाङ्गुलपर्यन्तं पङ्कजस्याग्रविस्तरः ॥

आसने पद्मविस्तारस्तयोर्विंशतिमात्रतः ।
अर्धाङ्गुलार्धं षट्त्रिंशत्करजावधि मानकम् ॥

त्रिभागैकाधिको मूलविस्तारः श्रेष्ठ उच्यते ।
द्वादशांशविहीनेऽथ मध्ये षोडशधा कृते ॥ 25

विस्तारस्सप्तसंयुक्तो दशधा परिकीर्तितः ।
विस्तारसदृशस्त्वायो द्विगुणो वाथ मध्यमे ॥

वसुधा भाजिते दैर्ध्यं नवधा परिकीर्तितम् ।
त्रिभागाद्रुद्रभागान्तं तदुत्सेधे विभाजिते ॥

एकद्वित्रिचतुष्पञ्चभागैरूर्ध्वस्थपङ्कजम् ।
शेषांशैस्स्यादधःपद्मं हीनं चोर्ध्वदलैस्तु वा ॥

चतुरष्टदलोपेतं विकारार्कदलं तु वा ।
विपुलं तुङ्गमायुक्तं स्थानके पीठमुच्यते ॥

अधिकोत्तुङ्गसंयुक्तमासनोपरि कल्पयेत् ।
त्रिभागाद्रुद्रभागान्तं दैर्घ्यविस्तारमेव वा ॥ 30

विभज्य पार्श्वयोरेकद्वित्रिभागमथापि वा ।
संस्थाप्य शेषभागैस्तु मध्ये भद्रं प्रकल्पयेत् ॥

सभद्रं वा विभद्रं वा पीठं सर्वत्र कारयेत् ।
एकपीठमनेकेषां यदि शोभावशान्नयेत् ॥

वृत्तावायतवृत्तापि अर्धचन्द्राकृतिस्तु वा ।
पद्माकृतिः प्रकर्तव्या तत्रासीनेऽर्धचन्द्रकम् ॥

अलङ्कारमतो वक्ष्ये लिङ्गानां पीठतुङ्गके ।
षोडशांशे तु मानेन पादुकं परिकीर्तितम् ॥

वेदांशा जगती प्रोक्ता गुणांशः कुमुदो भवेत् ।
वस्त्रश्चपद्ममेकेन वह्न्यंशः कर्ण उच्यते ॥ 35

अंशेन पट्टिका ज्ञेया महापट्टी द्विभागतः ।
घृतवार्यंशमानेन भद्रपीठमिदं मतम् ॥

षोडशांशे तदुत्सेधे द्विभागं पादुकं भवेत् ।
शरांशं पद्ममानं स्याद्द्विभागं वृत्तमुच्यते ॥

वेदांशमूर्ध्वपद्मं स्यादग्न्यंशेन पट्टिका ।
घृतवार्यंशमानं स्यात् पद्मपीठमिदं मतम् ॥

एकविंशतिभागेऽग्निभागैः पादुकमूर्ध्वतः ।
पञ्चभिः पङ्कजं कम्पस्त्वेकेनोर्ध्वे त्रिभागतः ॥

कर्णस्त्वेकेन कम्पःस्याद्भूतांशैरूर्ध्वपङ्कजम् ।
द्वाभ्यां पङ्क्ती भवेदूर्ध्वे घृतवार्येकभागतः ॥ 40



षोडशांशे तदुत्सेधे पादुकं सार्धभागभाक् ।
जगती बन्धभागेन गुणार्धं पद्मतुङ्गकम् ॥

व्योमांशमूर्ध्वकम्पं तु द्वाभ्यां कुमुद उच्यते ।
वृत्ताकारस्तदूर्ध्वे तु पट्टिका भागमानतः ॥

द्वाभ्यां कर्णस्तु पद्मं स्यादर्धेनांशेन पट्टिका ।
शेषेण घृतवारी तु श्रीकरं पीठमीरितम् ॥

पञ्चविंशतिभागे तु व्योमांशं पादुकं भवेत् ।
पद्ममेकेन तस्योर्ध्वे वाजनं व्योमभागतः ॥

जगती चतुरंशं स्यात्पद्मतुण्डं त्रिभागतः ।
गलमर्धं त्रिभागेन पद्मं त्र्यंशेन वृत्तकम् ॥ 45

कुमुदं पद्ममेकेन वाजनं व्योमभागतः ।
भागाभ्यां कर्ण इत्युक्तस्स्यादेकेनैव वाजनम् ॥

कञ्जमेकेन भागाभ्यां महावाजनमीरितम् ।
एकेन कम्पमर्धेन घृतवार्यभिधीयते ॥

पीठं शाम्भवमाख्यातमन्यथान्यद्विधीयते ।
एकविंशतिभागं तु पीठोत्तुङ्गं विभज्य च ॥

भागेन पादुकं वेदभागेन जगती मता ।
एकेन कर्णस्त्वेकेन पद्मं स्याद्गुणभागतः ॥

कुमुदं पद्ममंशेन वाजनं त्वेकभागतः ।
कर्णो द्विभागो भागेन वाजनं पद्ममंशतः ॥ 50

द्विभागा तु महापट्टी पद्ममंशेन भागतः ।
कम्पस्स्याद्घृतवार्यूर्ध्वे विजयाख्यमिदं मतम् ॥

अष्टादशविभागे तु व्योमांशं पादुकं भवेत् ।
अध्यर्धं पद्ममित्युक्तं कम्पमेकांशतो भवेत् ॥

जगती वेदभागेन गुणांशः कुमुदो भवेत् ।
कम्पमेकेन कर्णस्स्याद्द्विभागः कम्पमेकतः ॥

महापट्टी द्विभागेन वाजनं चैकभागतः ।
अर्धेन घृतवार्युक्तमुमापीठमिदं मतम् ॥

विकारांशे तदुत्सेधे पादुकं भागमानकम् ।
पद्ममंशमितं बन्धभागेन जगती भवेत् ॥ 55

भागाभ्यां पङ्कजाद्ग्रीवा चार्धार्धेनोर्ध्वपङ्कजम् ।
कुमुदं स्याद्द्विभागेन पद्ममर्धेन चार्धतः ॥

कम्पं कर्णस्तु चार्धेनार्धेन कम्पं च वारिजम् ।
भागार्धेन महापट्टी सार्धेनांशेन मूर्धनि ॥

घृतवारि समाख्यातं सम्पत्करमिहोदितम् ।
रुद्रभागे तु तत्तुङ्गे व्योमांशं पादुकं भवेत् ॥

गुणांशं जगती कम्पमेकं कर्णो द्विभागतः ।
एकांशो वाजनः प्रोक्तो महापट्टी द्विभागतः ॥

घृतवार्येकभागेन नन्दिकावृत्तमीरितम् ।
तिर्यंशं विभजेत्तुङ्गमध्यर्धं पादुकं भवेत् ॥ 60

अर्धेन कम्पं पद्मं स्याद्गुणांशं गलमर्धतः ।
पद्ममंशेन भागाभ्यां कुमुदं पद्ममंशतः ॥

अर्धं गलं त्रिभागेन पद्मं सार्धेन पट्टिका ।
अर्धांशं घृतवार्युक्तं स्वस्तिकं चेदमीरितम् ॥

तुङ्गाष्टादशभागे तु द्विभागं पादुकं भवेत् ।
पङ्कजं तु त्रिभागेन पट्टिकैकांशनिर्मिता ॥

षड्भागैः कर्ण इत्युक्तो वाजनं चैकभागतः ।
अब्जं द्विभागतः प्रोक्तं द्वाभ्यां वाजनमिष्यते ॥

घृतवार्येकभागेन पूर्णचन्द्रमिदं भवेत् ।
कल्यंशं विभजेत्तुङ्गं व्योमभागेन पादुकम् ॥ 65

द्वाभ्यां पद्ममथैकेन कम्पष्षड्भागतो गलम् ।
भागेन कम्पं पद्मं स्याद्द्विभागेन द्विभागतः ॥

महापट्टयंशमानेन घृतवार्यूर्ध्वतो भवेत् ।
स्थण्डिलं पीठमेवं स्यात् पुनरन्यदिहोच्यते ॥

त्रिषडंशे तदुत्सेधे द्विभागं पादुकं भवेत् ।
व्योमांशं कम्पमित्युक्तं द्विभागं पद्ममुच्यते ॥

भागेन कम्पमित्युक्तं शेषं पूर्ववदेव हि ।
एकोनविंशत्यंशे तु द्विभागं पादुकं भवेत् ॥

कम्पमंशेन भागेन पुनः कम्पं द्विभागतः ।
पद्ममंशेन कम्पस्याच्छेयं पूर्ववदीरितम् ॥ 70

स्वायम्भुवमिदं प्रोक्तमधिष्ठानानि यानि च ।
रूपपीठानि तान्यत्र योज्यानीहाग्रजोत्तमाः ॥

घृतवारि तदूर्ध्वे स्यादेकभागेन सार्धतः ।
द्विभागेनाथ कर्तव्यं भक्तयाभीष्टांशतुङ्गके ॥

महापट्टी विनिष्क्रामसमनिष्क्रमसंयुता ।
घृतवारि विधेयं वा वृत्तं वा चतुरश्रकम् ॥

अधिष्ठानकम्पोपेतमथवा परिकल्पयेत् ।
कर्णमानं च संगृह्य कम्पादौ विनियोजयेत् ॥

तन्मानमथ कर्णे तु यावदेकयवेन च ।
वृद्धयाष्टमात्रपर्यन्तं वृद्धिहानि प्रयोजयेत् ॥ 75

सर्वेष्वङ्गेषु पीठानां सकले निष्कलेऽपि च ।
चले वाप्यचले लौहे रत्नजे बाणलिङ्गके ॥

शैले दारुमये वापि मृण्मयेऽन्यमयेऽपि वा ।
निष्कले तु प्रमाणं स्यात् तन्मानमधुनोच्यते ॥

पीठतारत्रिभागं स्यात् प्रणालो मूलविस्तरः ।
तद्दैर्घ्येणाग्रविस्तारस्सर्वलिङ्गेषु योग्यकः ॥

पीठार्धमानः पादो वा मध्यमे षोडशांशके ।
मानं सप्तदशाख्यातं नालायामं द्विजोत्तमाः ॥

तत्समं वा सपादं वा त्रिपादं वाथ मध्यमे ।
तथा विभक्ते संग्राह्य मानं सप्तदशैव च ॥ 80

प्रणालमूलदेशे तु तदग्रं तेन मानतः ।
त्रिपादमर्धपादोनं पञ्चत्रिंत्र्यंशमेव वा ॥

सप्तांशे भूतवेदाग्निभागं वाग्रे प्रकल्पयेत् ।
वारिवाहस्तथा प्रोक्तो गाम्भीर्याद्विस्तरेण वा ॥

मूलकम्पं तदूर्ध्वे तु पद्मं पार्श्वद्वयोरपि ।
तदूर्ध्वे कम्पमेकद्विव्योमभागैस्तथा क्रमात् ॥

प्रणालघनमाने तु तन्मानमधुनोच्यते ।
कर्णोर्ध्वमानं तन्मानं पीठोत्सेधं विभज्य च ॥

त्रिसप्तमानं वेदांशादेकभागविवृद्धितः ।
दशभागावसानं तु पीठनालघनं तु वा ॥ 85

समानयोनिजं श्रेष्ठं तदभावेन भिन्नजम् ।
अभिन्नपिण्डिकं लिङ्गं नेष्टं मुक्त्यर्थिनामिह ॥

तदन्यमिष्टं श्रेष्ठं स्याद्रत्नजं स्फटिकादिकम् ।
अखण्डशैलमिष्टं स्यात् तदभावे सखण्डकम् ॥

खण्डं त्वङ्गावसानं स्यादूर्ध्वखण्डमखण्डजम् ।
प्रणालयुक्तमिष्टं स्यात् तदधःखण्डनेऽपि च ॥

दोषाढ्यादिवस्त्वन्ताः खण्डाः पीठाः प्रकीर्तिताः ।
सकलानामनालं स्यात् सनालमथ पीठकम् ॥

घृतवारिविहीनं वा सहितं वा प्रकल्पयेत् ।
बाणलिङ्गादिलिङ्गानां चतुरश्रायताश्रकम् ॥ 90

पीठं कृत्वा तदूर्ध्वे तु पीठं वा परिकल्पयेत् ।
पीठलग्नां प्रभां कुर्याद्भिन्नां वाभिन्नयोगिकाम् ॥

नानावाजनसंयुक्तां मुक्तादामावलिक्रियाम् ।
नानापुष्पावलीप्रोतां नानावह्निशिखान्विताम् ॥

सर्वालङ्कारसंयुक्तामिष्टास्यघनसंयुताम् ।
सतोरणं वा वृत्तं वा सायतं वा प्रमाणतः ॥

बेरलिङ्गवशात् कल्प्यामिष्टमानसमन्विताम् ।
एवं लक्षणमाख्यातं स्थापनं चाधुनोच्यते ॥

पिण्डिकायामुमादेवी लिङ्गे स्याच्च सदाशिवः ।
तयोर्यः क्रियते योगस्सा प्रतिष्ठेति गद्यते ॥ 95

योगश्च द्विविधो ज्ञेयस्त्वाद्यः पश्चाद्भवस्त्विति ।
आद्यः प्रागेव कथितो लिङ्गस्थापनकर्मणि ॥



द्वितीयः कथ्यते विप्राः पूर्वं तस्या यदाकृतिः ।
तथैव च पुनः कुर्यादन्यथा दोषकारकम् ॥

मानवे पीठसंकल्पविधानं परिकीर्तितम् ।
चतुरश्रेऽथ वृत्ते वा रूपान्तरयुतेऽपि वा ॥

दैविके चार्षके बाणे लिङ्गे स्वायम्भुवे तथा ।
वृत्तं सर्वत्र कर्तव्यं पूर्वाकृतियुतं तु वा ॥

पूर्वद्रव्येण कर्तव्यमुत्कृष्टेनाथवा नयेत् ।
लिङ्गसंस्थापनस्योक्तवर्त्मना सकलां क्रियाम् ॥ 100

कारयेत् कथ्यते विप्रास्शेषस्तद्यथार्थताम् ।
अङ्कुरार्पणकार्यं तु प्रागुक्तविधिना नयेत् ॥

हर्म्याग्रे सौम्यदेशेऽग्नौ चैशान्यां यागमण्डपम् ।
प्रागुक्तविधिना मानं मण्टपे परिकीर्तितम् ॥

तन्मध्ये वेदिकां कुर्याल्लिङ्गस्थापनवर्त्मना ।
कुण्डानि परितः कुर्यान्नवाग्न्येकसंख्यया ॥

योन्याकाराणि कुण्डानि त्रिमेखलयुतानि च ।
तत्पूर्वे सौम्यदेशे वा स्नानार्थं स्नानमण्टपम् ॥

एवं निष्पाद्य सर्वं तु पश्चात् कर्म समारभेत् ।
विशेषयजनं कृत्वा स्तुत्वा नत्वा मुहुर्मुहुः ॥ 105

शिवं विज्ञाप्य लब्धाज्ञः क्रियामेनां समारभेत् ।
लिङ्गाग्रे स्थण्डिलं कृत्वा शिवकुम्भं च वर्धनीम् ॥

मध्यमे स्थापयित्वा तु परितोऽष्टौ घटांस्तु च ।
ससूत्रान् सापिधानांश्च सकूर्चाम्बरपल्लवान् ॥

गन्धस्रग्दामधूपाद्यैरर्चयेत्तदनन्तरम् ।
पुण्याहं वाचयित्वा तु सासनं मूर्तिसंयुतम् ॥

आवाह्य लिङ्गं लिङ्गस्य शिवकुम्भगतं न्यसेत् ।
पीठदेवीं समावाह्य वर्धन्यां मध्यमे न्यसेत् ॥

विद्येशान् परितो न्यस्त्वा गन्धाद्यैरर्चयेत्तु तान् ।
नैवेद्यान्तैश्च तत्पूर्वे स्थण्डिले होममाचरेत् ॥ 110

सहस्रसंख्यं मूलेन समिदाज्यान्नलाजकैः ।
तिलेनापि समायुक्तं प्रत्येकं तु शतं तु वा ॥

प्रायश्चित्तमघोरेण शतसंख्येन होमयेत् ।
अन्यत्र स्थण्डिलं कृत्वा ततस्संस्थापयेदमून् ॥

नित्यपूजा प्रकर्तव्या लिङ्गे कुम्भे च नित्यशः ।
टङ्केन हेमजातेन पीठं छित्वास्त्रमुच्चरन् ॥

अगाधेऽम्भसि निक्षिप्य तदुद्भूतसुधादिकम् ।
शान्तिहोमः प्रकर्तव्यः प्रत्यहं तु शतं तु वा ॥

ततस्संस्थापनं कुर्यात् तद्विधानमिहोच्यते ।
शाणाभिघर्षणं कृत्वा पञ्चमृत्पञ्चगव्यतः ॥ 115

कषायोदकगोमूत्रगोशकृद्भिर्जलान्तरे ।
प्रणवेनास्त्रमन्त्रेण स्नापयेत्परमेश्वरम् ॥

वस्त्रचन्दनपुष्पाद्यैरिष्ट्वा मण्टपमध्यमे ।
स्थण्डिलं कल्पयित्वास्मिन् स्थापयेत्पिण्डिकां ततः ॥

गन्धाद्यैरर्चयित्वा तु भगाङ्कं लक्ष्म लक्षयेत् ।
मध्वाज्याभ्यां तु संतर्प्य मृत्युजिन्मन्त्रमुच्चरन् ॥

ताम्रजे कांस्यजे पात्रे मध्वाज्याभ्यां समन्विते ।
सहैमं दर्शयेद्विद्वान् नेत्रमन्त्रमनुस्मरन् ॥

धान्यराशिं सवत्सां गां कन्यां हृदयमन्त्रतः ।
प्रच्छन्नपटमाकर्ष्य दर्शयेद्देशिकोत्तमः ॥ 120

प्राग्वत्संस्नाप्य देवीं तु वस्त्रगन्धादिनार्चयेत् ।
प्रदक्षिणं नयेद्ग्रामे जलतीरे निवेश्य च ॥

स्थण्डिलं तत्र निक्षिप्य स्थापयेत्तत्र पिण्डिकाम् ।
कलशान्स्थापयेदष्टौ लोकपालाधिपान् क्रमात् ॥

देवीं च कलशानिष्ट्वा लम्बकूर्चसमन्विताम् ।
नववस्त्रपरिच्छन्नां फलकोर्ध्वे जलान्तरे ॥

स्थापयेदभितोऽष्टौ तु कलशान् सूत्रसंयुतान् ।
पिधानाम्बरहैमांस्तान् सकूर्चान्द्राक्षयधिष्ठितान् ॥

पश्चान्मण्टपमासाद्य चतुस्तोरणसंयुतम् ।
सवितानध्वजं दर्भमुक्तापुष्पजमालया ॥ 125

सर्वत्र ज्वलितं दीपैर्ज्वलद्भिः परिवारितम् ।
सर्वलक्षणसंपन्नं सुविसर्जिततक्षकम् ॥

ब्राह्मणान् भोजयित्वा तु गोमयेनोपलेपयेत् ।
पुण्याहं वाचयित्वा तु वास्तुहोमं च कारयेत् ॥

द्वाराण्यक्षेण संप्रोक्ष्य द्वाराणि द्वारपान्यजेत् ।
प्रविश्य सव्यद्वारेण सौम्यास्योर्ध्वस्थितस्थितिः ॥

मन्त्रकायः शिवं चान्तरिष्ट्वा हुत्वाभिविन्दुषु ।
गृहीतखड्गहस्तस्सन् पूजितात्मसमन्वितः ॥

कृतपञ्चाङ्गभूषस्तु कुम्भाख्याशाधिपार्चनः ।
कृतकुण्डाग्निसंस्कारो जलवासान्महेश्वरीम् ॥ 130

आनीय स्नपनाख्योक्तमण्टपे स्नपनं नयेत् ।
मृत्कषायोदगव्याद्यैः पुष्पपत्रफलोदकैः ॥

कुशगन्धजलैः पञ्चामृतैस्संस्नापयेच्छिवाम् ।
आच्छाद्य वस्त्रयुग्मेन गन्धाद्यैरर्चयेत्तु ताम् ॥

कृत्वा कौतुकबन्धं तु तन्नाले तद्गलेऽपि वा ।
शालिभिः स्थण्डिलं कृत्वा वसुद्रोणसमन्वितैः ॥

तदर्धैस्तण्डुलैर्युक्तं तदर्धतिललाजकम् ।
दर्भैः पुष्पैः परिस्तीर्य चर्मजाद्यैरनुक्रमात् ॥

ततश्शय्यां च संकल्प्य तदलाभेऽम्बरैर्नयेत् ।
आसनं तत्र संकल्प्य पिण्डिकां विन्यसेद्बुधा ॥ 135

आच्छाद्य वस्त्रयुग्मेन तद्देशे करकं न्यसेत् ।
सूत्रवस्त्रपरिच्छन्नं नवरत्नसमन्वितम् ॥

सहेमपङ्कजं कूर्चफलपल्लववस्त्रकम् ।
तन्मध्ये सासनां देवीमर्चयेद्गन्धसंमुखैः ॥

वर्धनीरष्टसंख्याताः कूर्चवस्त्रससूत्रकाः ।
सहेमाः पल्लवोपेतास्सापिधानाः फलोद्भवाः ॥

वामाद्यधिष्ठिता बाह्ये परितो विनिवेशयेत् ।
गन्धाद्यैरर्चयित्वा तु पिण्डिकां वर्धनीमपि ॥

तत्त्वतत्त्वेशसंयुक्तां मूर्तिमूर्तीश्वरीं न्यसेत् ।
कर्णस्याधो गले कर्णादूर्ध्वे तत्त्वत्रयं न्यसेत् ॥ 140

क्रिया ज्ञानं तथेच्छेति त्रितत्त्वेशाः प्रकीर्तिताः ।
धारिका दीप्तिमत्युग्रा ज्योत्स्ना चेता बलोत्कटा ॥

धात्री विभ्वीति मूर्तिभ्यः परिभाव्याः क्रमेण तु ।
पञ्चपक्षेऽथवा प्राग्वत्त्वत्रानुक्तं तु यद्भवेत् ॥

लिङ्गसंस्थापनप्रोक्तविधिनाखिलमाचरेत् ।
चन्दनाद्यैस्समभ्यर्च्य होमकर्म समारभेत् ॥

समिदाज्यान्नलाजैश्च तिलैस्सर्षपकैर्यवैः ।
पलाशोदुम्बराश्वत्थन्यग्रोधाः पूर्वतो दिशि ॥

शमीखदिरमायूरश्रीवृक्षा वह्निकोणतः ।
पलाशं तु प्रधानं स्यात्पलाशो ह्यखिलो मतः ॥ 145

सहस्रं वा तदर्धं वा शतमष्टाधिकं तु वा ।
देव्या मूलेन होतव्यं तदङ्गैस्तद्दशांशतः ॥

शान्त्यम्भःप्रोक्षणं दर्भस्पर्शनं च समारभेत् ।
तत्त्वतत्त्वेश्वराद्यैश्च होमयेत्प्रतिकुण्डकम् ॥

प्रायश्चित्तमघोरेण शतोच्चारेण होमयेत् ।
भूतिदर्भदलै रक्षां कृत्वा तत्त्वाबलिं तदा ॥

अन्तर्बलिं च क्षेत्रेशबलिं च प्रक्षिपेद्गुरुः ।
ततः प्रभाते विमले मूर्तिमद्भिर्गुरुश्शुचिः ॥

कृतनित्यविधानस्तु सामान्यार्घ्यकरो गुरुः ।
द्वाराणि तत्पतीनिष्ट्वा समुत्थाप्य महेश्वरीम् ॥ 150

गन्धैः पुष्पैश्च धूपैश्च दीपैर्नैवेद्यकैस्तदा ।
ताम्बूलान्तैश्च संपूज्य पिण्डिकां वर्धनीमपि ॥

अग्निं होमैश्च संतर्प्य प्रायश्चित्तं विधाय च ।
दत्त्वा मूलेन पूर्णां तु सर्वदोषनिकृन्तनीम् ॥



सर्वातोद्यसमायुक्तं नृत्तगानसमन्वितम् ।
धामप्रदक्षिणं नीत्वा गर्भगेहे निवेशयेत् ॥

लिङ्गसंस्थापनप्रोक्तविधिना तन्निवेशयेत् ।
पिण्डिकास्थापनं बाणलिङ्गस्य यदि वर्तते ॥

तदग्रे मण्टपादौ तु तल्लिङ्गं स्थण्डिले न्यसेत् ।
नववस्त्रपरिच्छन्नं शुभाशास्तु शिरो यथा ॥ 155

पीठे सुधादिकं त्यक्त्वा तस्मिन्नेव प्रदेशके ।
पीठं संस्थापयित्वा तु तत्र लिङ्गं निवेशयेत् ॥

रत्नानि सर्वं पीठस्य गर्ते संस्थाप्य सद्गुरुः ।
सुवर्णं वाथ निक्षिप्य प्राग्वत्सर्वं समाचरेत् ॥

अष्टबन्धं त्रिबन्धं वा योजयेत्तदनन्तरम् ।
पुण्याहप्रोक्षणं शान्तिकुम्भतोयाभिषेचनम् ॥

प्रागुक्तविधिना कृत्वा आसनाद्युं ततो न्यसेत् ।
पीठे क्रियाख्यं विन्यस्य गुरुः प्रागुक्तकर्मणा ॥

लिङ्गाग्रनिहितं चापि शिवकुम्भं च वर्धनीम् ।
वामादिवर्धनीयुक्तां वेदिकान्तरसंस्थिताम् ॥ 160

देवाग्रे स्थापयित्वा तु जीवन्यासेन विन्यसेत् ।
संस्थाप्य वर्धनीं वापि वर्धन्यष्टकसंयुताम् ॥

वेदिकामध्यमे न्यस्त्वा जीवन्यासार्थमारभेत् ।
जीवन्यासविधिस्तु स्थानेष्वथ कार्योऽथवासने ॥

लिङ्गादौ स्थापिते कुम्भे न्यासकाले विशेषतः ।
स्नपनं कारयेदन्ते पञ्चामृतविधिस्तु वा ॥

केवलेनाम्भसा वाथ गन्धाद्यैस्सम्यगर्चयेत् ।
यावच्चन्द्रश्च सूर्यश्च यावत्तिष्ठति मेदिनी ॥

तावदत्र त्वया देवि सान्निध्यं कुरु सर्वदा ।
लिङ्गसंस्थापनप्रोक्तं दक्षिणार्थं च दापयेत् ॥ 165

चतुर्दिनं त्र्यं वापि द्वयमेकं च नित्यशः ।
विशेषपूजा कर्तव्या होमेन च समन्विता ॥

पूर्वोक्तैरण्डभिक्षाद्यैः पायसैर्होममाचरेत् ।
चतुर्थे प्रथमे वाथ चण्डकल्पो विधीयताम् ॥

बाणादौ स च नेष्टस्यादथवा परिभाव्यताम् ।
पीठसंस्थापनस्यापि फलं लिङ्गप्रतिष्ठया ॥
समानं कथितं यस्मात् प्रतिष्ठैकोभयत्र च ॥

इति उत्तरकामिकाख्ये महातन्त्रे पीठप्रतिष्ठाविधिः पञ्चत्रिंशत्तमः पटलः ॥

—o—

## बाणलिङ्गप्रतिष्ठाविधिः ॥

बाणलिङ्गप्रतिष्ठां तु वक्ष्ये संक्षेपतः क्रमात् ।
बाणो नामासुरः प्रोक्तस्स च सिद्ध्यर्थमादरात् ॥

प्रार्थयामास पूजार्थं लिङ्गानि विविधानि च ।
दत्तवाँल्लिङ्गकोटीनां चतुर्दश महेश्वरः ॥

तानि संपूज्य कालान्तेस्थानेष्वेतेषु न्यक्षिपत् ।
लिङ्गाद्रौ कालिकागर्ते श्रीनगे कन्यकाश्रमे ॥

कन्यातीर्थे च नेपाले महेन्द्रे चामरेश्वरे ।
अन्यत्र च नदीमध्ये पर्वते च विशेषतः ॥

माषमात्रादिहस्तान्तं तेषां मानमुदाहृतम् ।
पादाङ्गुलविवृद्ध्या तु गृह्णीयाद्वा यथेच्छया ॥

विस्तारनाहमानं तु बाणलिङ्गस्य नेष्यते ।
रेखाबिन्दुकलङ्कादिरहितं युक्तमेव वा ॥

सर्वेषामपि लिङ्गानां बाणलिङ्गं विशिष्यते ।
स्नपने यजने धूपे गन्धपुष्पनिवेदने ॥

अन्यकर्मणि विप्रेन्द्राः स्वायम्भूतादिके तथा ।
प्रासादपीठिकादीनां नियमो न च नेष्यते ॥

ग्रामादिसर्ववास्तूनां बाह्ये बाह्यान्तरेऽपि वा ।
विमानं बाणलिङ्गस्य कल्पयेत कल्पवित्तमः ॥

शिलामृल्लोहसद्वृक्षरत्नाद्यैः पीठिका भवेत् ।
एकवर्णं भवेत्पीठं सर्वकर्मार्थसिद्धये ॥

लिङ्गोत्सेधत्रिभागैकं पञ्चद्व्यंशमथापि वा ।
विधेयं खातमानं तु लिङ्गार्धमथवा द्विजाः ॥

यथाभिमतमानं वा खातमानमुदाहृतम् ।
सरित्प्रवाहसंस्थं च बाणलिङ्गसमाकृति ॥

यदन्यदपि बोद्धव्यं लिङ्गं सर्वसुखावहम् ।
पर्वतादिसमुद्भूतं तद्वदेव समीरितम् ॥

उन्नतं तु मुखं ज्ञेयं स्थूलभागे कृशेऽपि वा ।
स्थूलं वाथ कृशं वाथ कान्तिमद्रूपमूर्ध्वगम् ॥

रत्नजं चैवमाख्यातं लोहजं च तथा मतम् ।
सहजं वाथ भिन्नं वा लिङ्गं श्रेष्ठं सयोनिजम् ॥

रत्नजे लोहजेऽप्येवं पार्थिवेऽपि तथा मतम् ।
सर्वेषामपि चैतेषां प्रतिष्ठार्थं निगद्यते ॥

शैललिङ्गप्रतिष्ठायां श्रेष्ठकाल उदाहृतः ।
चललिङ्गप्रतिष्ठायां प्रतिमादौ च मध्यमः ॥

कालोऽधमस्त्याद्बाणादौ मुमुक्षोस्सर्व एव हि ।
मासायनर्क्षवारादिविधिस्तेषु च नेष्यते ॥

तथैव बाणलिङ्गस्य किं तु कालोऽधमोऽथवा ।
विधाय वस्त्रबन्धाद्यं ततः स्थापनमारभेत् ॥

अङ्कुरार्पणकार्यं तु प्रागुक्तविधिना नयेत् ।
रत्नन्यासं ततः कुर्यान्नवपञ्चैकरत्नकम् ॥

पिण्डिकावटमध्ये तु हैमं वाथ विनिक्षिपेत् ।
लक्षणोद्धारणं नेष्टं स्वाकारो लक्षणं भवेत् ॥

विधाय लिङ्गशुद्धिं तु शिवेनास्त्रेण मृज्जलैः ।
जलाधिवासनं कुर्यान्नवपञ्चैककुम्भकम् ॥

कुर्याल्लिङ्गाधिवासार्थं वेदिकासहितं यथा ।
वेदिकारहितं चैतद्गृहादौ स्थण्डिलं मतम् ॥

शिल्प्युद्वासनपुण्याहविप्रभुक्त्युपलेपनम् ।
भूपरीक्षा विधेया तु वास्तुपूजाग्नितर्पणम् ॥

स्थण्डिले शयनं तस्य पूजनं प्राग्वदाचरेत् ।
जलमध्यादथानीय शुद्धिं गन्धादिभिर्नयेत् ॥

अभ्यर्च्याविष्टय वस्त्रेण कृतप्रतिसरं शिवम् ।
शय्यामध्ये निवेश्याथ शिवकुम्भं च वर्धनीम् ॥

विद्येशकुम्भसंयुक्तं ससूत्रं सापिधानकम् ।
सहिरण्यं सवस्त्रं च गन्धोदपरिपूरितम् ॥

संस्थाप्य संयजेत्सर्वांस्तत्त्वतत्त्वेशसंयुतान् ।
मूर्तिमूर्तीश्वरान्यष्ट्वा संपाद्यैवं शिवानलम् ॥

समिदाज्याचलाजैश्च तिलेन च समन्वितम् ।
जुहुयान्मूलमन्त्रेण शतमष्टोत्तरं यथा ॥

मनोन्मन्यार्धमन्त्रैस्तु दशांशं द्विजसत्तमाः ।
तत्त्वतत्त्वेश्वरादीनां पूर्ववद्धोममाचरेत् ॥

वस्त्रेणाच्छाद्य लिङ्गं तु नैवेद्यं च निवेदयेत् ।
प्रातःस्नात्वार्चयित्वा तु मण्टपाधिपदेवताः ॥

लिङ्गमग्निमघोरेण जुहुयाच्छतसंख्यया ।
संप्राप्तदक्षिणस्तुष्टः प्राप्तपञ्चाङ्गभूषणः ॥



मुहूर्ते समनुप्राप्ते मन्त्रन्यासं समाचरेत् ।
एकाद्या नवनिष्कान्ता भवेद्देशिकदक्षिणा ॥

संकल्प्य सासनं मूर्तिं मूलमन्त्रं शिवे न्यसेत् ।
तज्जलैःस्नापयेद्देवं देवीं पीठस्वरूपिणीम् ॥

स्नपनं कारयेदन्ते दद्यान्नैवेद्यमादरात् ।
यदनुक्तं भवेदत्र लिङ्गस्थापनवन्नयेत् ॥

चतुर्थहोमं चण्डेशयजनं चास्य नेष्यते ।
प्रत्यहं पूजयेद्देवमर्चनोक्तविधानतः ॥

शिष्टलिङ्गे गतिर्नास्ति सामान्यस्य गतिःक्षणात् ।
जीर्णादिदोषदुष्टं च विधिनापि न चालयेत् ॥

सुदृढं स्वर्णपट्टाद्यैः कृत्वा शान्तिं समाचरेत् ।
कुम्भे वा स्थण्डिले वापि मण्डले पीठकादिके ॥

पूर्वदिक्कल्पिते देशे दिक्क्लृप्ते मण्टपादिके ।
संपूज्य देवदेवेशमुदग्देशे मनोन्मनीम् ॥

अष्टविद्येश्वरोपेतं गन्धाद्यैरुपचारकैः ।
पञ्चाङ्गभूषणोपेतो यावत् कृत्यं समाप्यते ॥

अन्ते विसर्जनं कुर्याच्छान्तिहोमं समाचरेत् ।
आदावन्ते च वा होमं प्रत्यहं होममेव वा ॥

तत्र संप्रोक्षणं नेष्टं तदर्धं होममेव वा ।
लिङ्गाग्रे स्थण्डिलं तत्र कुम्भसंस्थापनं न हि ॥

कुम्भे त्वावाहनं तस्मात् कुम्भमन्त्रान्निवेशयेत् ।
नेष्यते स्नपनं हित्वा जीर्णोद्धारविधौ द्विजाः ॥

तत्कुम्भोदैरपि स्नानं केवलं प्रोक्षणं तु वा ।
क्रियान्ते स्नपनं कुर्याद्विशेषेणार्चयेच्छिवम् ॥

एष एव विधिः प्रोक्तो बन्धविश्लेषकर्मणि ।
स्थलकर्मणि विश्लेषे सुधाकर्मविहीनके ॥

क्षणमात्रे च निर्वर्त्ये कर्मण्यत्र न पूजनम् ।
होमाद्यमपि नेष्टं स्यात् कर्तुं लिङ्गं समर्चयेत् ॥

गन्धाद्यैरुपचारैश्च शान्तिहोमं तु वा नयेत् ।
मूर्तिहोमं दिशाहोमं तत्कर्मगुरुलाघवात् ॥

पीठस्थलोपक्लृप्तौ चेत् स्नपनं देवपीठयोः ।
तयोरभ्यन्तरस्यापि दार्ढ्यशैथिल्यकारणात् ॥

शुद्धिं वस्त्रादिना कृत्वा यथा निर्माल्यशोधनम् ।
अस्त्राम्बुप्रोक्षणं तत्र स्नपनार्थं द्विजोत्तमाः ॥

बहुदैवसिके स्नानभङ्गश्चेत् स्नपनं महत् ।
महाहविस्तथा प्रोक्तं राज्ञो राष्ट्रस्य शान्तये ॥

ग्रामस्थानां जनानां च तथा तत्स्थानवासिनाम् ।
कर्तुः कारयितुश्चापि देशिकस्य विशेषतः ॥

प्रासादे पतिते भिन्ने त्वेतदेवं समीरितम् ।
स्वायम्भुवादिलिङ्गानामेतत्सामान्यमीरितम् ॥

शिल्प्यपेक्षमिदं कर्म कुर्यात्संप्रोक्षणान्वितम् ।
अन्यत्सर्वं समानं स्यात् कर्म सामान्यलिङ्गके ॥

स्वायम्भुवादिलिङ्गानां नेष्यतां मनुसंकरः ।
अनेनैव प्रकारेण स्थापनं रत्नजे मतम् ॥

स्वर्णादिलोहजे वापि तत्सम्भूतेति कीर्तिते ।
चले वाप्यचले वापि स्थापनं चैतदीरितम् ॥

चलं च द्विविधं प्रोक्तमङ्गं प्राधानिकं त्विति ।
चित्रादिप्रतिमादीनां पूजार्थं तत्तदङ्गके ॥

पूजितं त्वङ्गमित्युक्तमन्यत्प्राधानिकं मतम् ।
अङ्गिनश्च यथा पूजा यत्काले शास्त्रचोदिता ॥

नित्योत्सवादिसंयुक्ता तथा तस्य क्रिया भवेत् ।
अन्यत्र शुद्धनृत्तं च तद्वन्नित्योत्सवादिकम् ॥

लक्षवान्यत् प्राग्वदुद्दिष्टमामार्त्यैतद्विशिष्यते ॥

इति उत्तरकामिकाख्ये महातन्त्रे बाणलिङ्गप्रतिष्ठाविधिः षट्त्रिंशत्तितमः पटलः ॥

---

## काम्यलिङ्गप्रतिष्ठाविधिः ॥

काम्यलिङ्गप्रतिष्ठां तु वक्ष्ये लक्षणपूर्वकम् ।
काम्यानि सिद्धयो ज्ञेयाः सिद्धयो बहुधा स्मृताः ॥

कन्यसं मध्यमं ज्येष्ठं श्रेष्ठं चेति चतुर्विधम् ।
प्रत्येकं त्रिविधं प्रोक्तमुत्तमादिविभेदतः ॥

फलं दृष्टमदृष्टं च द्विविधं तत्परापरम् ।
कन्यसं भूपतीशत्वं मध्यमं बलसिद्धयः ॥

उत्तमं खेचरत्वं च श्रेष्ठं देवसमानता ।
भिद्यते बहुधैकैकं विद्येशत्वादिभेदतः ॥

विद्येशत्वं च रुद्रत्वं ब्रह्मत्वं वैष्णवं पदम् ।
इत्येवमादिदैवत्यं श्रेष्ठमित्युच्यते बुधैः ॥ 5

सिद्धयश्चाणिमाद्याश्च चक्रवर्तित्वमेव च ।
इत्येवमादिकं श्रेष्ठं सिद्धीनां मुनिपुंगवाः ॥

गुलिकाञ्जनपातालखड्गघण्टादि मध्यमम् ।
अपमृत्युजयोच्चाटवश्याद्यमधमं मतम् ॥

दृष्टत्वे तदनेनैव यद्देहेनोपभुज्यते ।
देहान्तरेण वा दृष्टं मायाकार्ये परत्र च ॥

मायाकार्येऽमरेशादिरुद्रस्थाने तु यत्सुखम् ।
अपरं तत्परं विद्यादनन्तादिपदस्थितिः ॥

न सिद्धिर्न च मुक्तिश्च लिंगाश्रयणमन्तरा ।
शिवलिङ्गमनादृत्य सिद्धिमुक्त्यभिलाषिणः ॥ 10

एते मूढधियस्तीर्णाः किं भीमं भवसागरम् ।
भवाभीष्टफलं प्राप्ताः सिद्धिसिद्धाः सुरा मताः ॥

रत्नलिङ्गजपा मूढाः का मुक्तिर्भ्रान्तचेतसः ।
तस्माल्लिङ्गाश्रयात्सिद्धिर्मुक्तिलिङ्गं समाश्रयेत् ॥

विष्ण्वाद्या वसवो रुद्रा मुनयश्च महौजसः ।
विविधल्लिङ्गमाराध्य फलमिष्टतमं गताः ॥

स्वायम्भुवं स्थापितं वा मुनिभिर्विबुधैर्गणैः ।
सिद्धैर्विद्याधराद्यैश्च न मानुषैः कदाचन ॥

स्वयं वा स्थापयित्वा तु सर्वलक्षणसंयुतम् ।
यथाशास्त्रं यथाकालं यथादेशं परीक्ष्य च ॥ 15

तत्र संसाधयेत् सिद्धिमाचार्यस्साधकोऽपि वा ।
स्वयं कर्तुमशक्तानां नृपतीनां हिताय च ॥

देशिकस्साधयेत् सिद्धिं चतुर्णां वा हिताय च ।
स्वस्य वान्यस्य वा कर्तुर्हितकृद्देशिकोत्तमः ॥

लिङ्गार्थमाकरं यायात् स्वस्य कृत्यानुसारतः ।
शिलादिद्रव्यमादाय नयेत् कर्मानुरूपतः ॥



तानि द्रव्याणि बहुधा शिलामृल्लोहदारुभिः ।
रत्नक्षणिकवस्तूनि कथ्यन्ते तान्यशेषतः ॥

श्वेता रक्ता च पीता च कृष्णा चेति चतुर्विधा ।
चतुर्णामपि वर्णानां शिला धात्री च संमता ॥ 20

एताश्चतस्रो विप्रस्य तिस्रो राज्ञामुभे विशः ।
एका शूद्रस्य नियमाच्छिला भूम्यश्च कीर्तिताः ॥

तद्वद्भूजनिता एव मृदो लिङ्गार्थमीरिताः ।
फलं लिङ्गानुरूपेण शिलानां समुदाहृतम् ॥

पृथ्वीशत्वं फलं ज्ञेयं चतसृणां मृदामपि ।
श्रीकामस्य सुवर्णोत्थं राज्यकामस्य राजतम् ॥

आयसं मारणे लिङ्गमुन्मादे कांस्यजं भवेत् ।
उत्सादे रीतिजं ज्ञेयं त्रपुजं पुत्रवृद्धये ॥

वृद्धिकामस्य ताम्रोत्थं सीसजं व्याधिनाशनम् ।
लोहलिङ्गं समाख्यातं रत्नलिङ्गमथोच्यते ॥ 25

वज्रलिङ्गं क्षितीशत्वे मौक्तमारोग्यदं भवेत् ।
इन्द्रनीलमयाल्लिङ्गात् सर्वान् कामान् समश्नुते ॥

महानीलमयाल्लिङ्गाद्वैष्णवं पदमाप्नुयात् ।
वैडूर्याद्व्याधिनाशःस्यात् सौभाग्यं पुष्परागजात् ॥

आरोग्यदं मरतकं प्रवालं च वशीकरम् ।
राजावर्तमयाल्लिङ्गान्महाभोगं समश्नुते ॥

नैलं नागेन्द्रभोगाय शङ्खं सौभाग्यदं भवेत् ।
शूलाक्षमणिजं शत्रुक्षयाय पुलकं तथा ॥

सस्यकं सस्यनिष्पत्त्यै सौरार्थं सूर्यकान्तजम् ।
चन्द्रकान्तं मृत्युजिते भूतिदं पद्मरागजम् ॥ 30

स्फाटिकं सर्वसिद्ध्यर्थं भौमजं दिव्यसिद्धये ।
वैक्रान्तकं महावृत्तरकायस्कान्तजं हितम् ॥

क्षुद्रसिद्धियुतं मन्त्रजातिसंस्कारसंस्कृतम् ।
गुणादृष्टफलं प्रोक्तं परासु मणिजातिषु ॥

इत्थं रत्नजमाख्यातं दारुजं कथ्यतेऽधुना ।
सारवद्वृक्षजं भूत्यै क्षीरद्रुमजमायुषे ॥

माधुर्यगन्धगुणवज्ज्ञानसौभाग्यकीर्तिदम् ।
रक्ताह्वचन्दनाशोकं शिंशुपाशोकबिल्वजम् ॥

सर्वदुःखादिराहित्ये पिशाचजमरिच्छिदे ।
यद्वा साधकनक्षत्रवशाल्लिङ्गं तु दारुजम् ॥ 35

कारस्करं चामलकं तथोदुम्बरजम्बुकौ ।
खदिरःकृष्णककुभौ शिरीषाश्वत्थकौ ततः ॥

पुन्नागश्चैव न्यग्रोधः पलाशः प्लक्षकस्तथा ।
अम्बष्ठबिल्वार्जुनकाश्शाल्मली वकुलस्तथा ॥

पिण्डी सर्जस्तथा वृक्षो वञ्जुलः पनसस्तथा ।
आम्रार्कौ च कदम्बश्च वह्निनिम्बौ तथैव च ॥

मधुकश्चाश्विनीपूर्वनक्षत्राणां तु पादपाः ।
एभिर्वृक्षैरभिरुद्रैस्तरुभिश्शान्तिकादिकम् ॥

विधाय लिङ्गं कर्तव्यं साध्यर्क्षे मारणादिकम् ।
श्वेतार्कमूलजं लिङ्गं जयार्थं विजयार्थिनाम् ॥ 40

चन्दनं सर्वदं स्याच्छ्रीकरं रक्तचन्दनम् ।
सरलं सर्वकाम्यार्थं खादिरं रोगनाशनम् ॥

सप्तपर्णं च सालोत्थं राजादनसमुद्भवम् ।
विशेषात् सर्ववर्णानां सर्वकामार्थसाधनम् ॥

उदुम्बरमयं पुष्ट्यै शान्त्यै न्यग्रोधसंभवम् ।
वश्यायाश्वत्थजं लिङ्गमारोग्ये खादिरं भवेत् ॥

लिङ्गं बैभीतकं शत्रूच्चाटनार्थं द्विजोत्तमाः ।
दारुजं लिङ्गमाख्यातं क्षणिकं लिङ्गमुच्यते ॥

सैकतं मोक्षभूत्यर्थं गोमयं रोगनाशनम् ।
अन्नमन्नाद्यकामस्य पैष्टं पुष्टिप्रदायकम् ॥ 45

गौडं प्रीतिकरं प्रोक्तं फलमिष्टार्थसिद्धये ।
घृतेन कल्पितं लिङ्गं ह्लादकृद्दुःखिनामपि ॥

ह्रादक्षलनवनीतं च गुणाढ्यं मृण्मयं भवेत् ।
विशेषाद्गन्धजं लिङ्गं सर्वव्याधिनिवारणम् ॥

स्वस्ववर्णानुरूपेण पौष्पं पुष्टिप्रदायकम् ।
बिल्वादिपत्रजं लिङ्गं यशःपुत्रविवर्धनम् ॥

तद्बीजजनितं लिङ्गं विशेषात् तृप्तिकारणम् ।
धान्यतण्डुलजं लिङ्गं तत्तद्द्रव्यफलप्रदम् ॥

कन्दमूलमयं लिङ्गं प्रहातरवस्य कारणम् ।
रोगहृत् साकवं लिङ्गं तथा लाजविनिर्मितम् ॥ 50

जलेन रचितं लिङ्गं प्राणिनां शान्तिपुष्टिदम् ।
लिङ्गं यच्चित्रितं सद्यो विचित्रफलदायकम् ॥

कर्पूरचन्दनाद्यैस्तु लिङ्गं यत्तज्जरापहृत् ।
द्रव्याणि कथितान्येवं लक्षणं च विधीयते ॥

प्रासादगर्भमानेन लिङ्गं ज्येष्ठादिभेदतः ।
मुख्यतस्सिद्धये प्रोक्तं मुक्त्यर्थमनुषङ्गतः ॥

हस्तादिलिङ्गमानानि यानि तानि विमुक्तये ।
मुक्तये चानुषङ्गेण भवन्ति विधियोगतः ॥

गर्भार्धिमध्यमं ज्ञेयं पञ्चत्र्यंशं वरं भवेत् ।
तदन्तरेऽष्टभागे तु नव लिङ्गानि सन्ति हि ॥ 55

तस्मात्तस्मादधस्तात्तु त्रीणि त्रीणि भवन्ति हि ।
षट्त्रिंशन्मानमुद्दिष्टं गर्भमानं द्विजोत्तमाः ॥

प्रासादे वा ततो वह्निवेदग्रहविभाजिते ।
द्वारि चांशं परित्यज्य सपीठाश्च विशेषतः ॥

पूर्ववच्च प्रमाणानि लिङ्गानां विहितानि तु ।
एकाङ्गुलं समारभ्य चाङ्गुलाङ्गुलवृद्धितः ॥

अष्टोत्तरशतान्तं तु त्रिविधाङ्गुलमानतः ।
एकहस्तं समारभ्य षडङ्गुलविवृद्धितः ॥

नवहस्तप्रमाणान्तं हस्तमानवशान्नयेत् ।
हस्तादधः स्थितं शैलं प्रासादेषु न शस्यते ॥ 60

पादोनं दारुजं लोहमस्यार्धेनैव संमतम् ।
अङ्गुलादिवितस्त्यन्तं रत्नलिङ्गं द्विजोत्तमाः ॥

आयादिशुभसंयुक्तं नयेत् कर्मानुरूपतः ।
हस्तादधः स्थितं शैलं योग्यमुच्चाटनादिषु ॥

लिङ्गायामैकभागे तु वेदभागेन विस्तरः ।
खण्डत्रयं समं कुर्यात् सिद्धिलिङ्गेषु सर्वशः ॥

चतुरश्रं तथाष्टाश्रं कूर्चावृत्तशिरोयुतम् ।
अर्धचन्द्रशिरोयुक्तं स्थापयेदैन्द्रपीठके ॥

पूर्वदिक्स्वेष्टसिद्ध्यर्थं लिङ्गं वज्रशिरो यथा ।
वज्रकायं समायोज्य स्तम्भादि परिकीर्तितम् ॥ 65

लिङ्गोर्ध्वे रुद्रभागे तु शरांशैश्चतुरश्रकम् ।
षडश्रं पूर्ववद्वृत्तं सप्ताश्रं स्वां दिशं विना ॥

आग्नेयपीठे तल्लिङ्गं वह्निदिक्स्वाम्यसिद्धये ।
लिङ्गं शक्तिशिरोपेतं स्थाप्यं शक्तपङ्गपिण्डिके ॥

शान्त्युग्रं तु तथा तेजो रिपुनाशो द्विषादयः ।
तापदाहं रिपोः कुर्याल्लिङ्गमाग्नेयकं द्विजाः ॥

नवांशे पञ्चभिः पूर्वापरे पार्श्वद्वये त्रिभिः ।
प्रधानभुजयोर्मध्यं वृत्तमग्निच्युतिः क्रमात् ॥

याम्यदिक्स्वाम्यसिद्ध्यर्थं स्थापयेद्याम्यपीठके ।
लिङ्गं दण्डशिरोयुक्तं स्थापयेद्विधिना मतम् ॥ 70

गुरुदण्डं तु याम्यायामायुर्वृद्धिं च पौरुषम् ।
रिपोर्देशे स्थितं नाशं नगराद्दक्षिणे ततः ॥

मारीं च भेदनं रोगं विधत्ते नात्र संशयः ।
दैर्घ्यद्वाविंशदंशे तु शरांशैश्चतुरश्रकम् ॥

अष्टाश्रं पूर्ववद्वृत्तं दशाश्रसहितं द्विजाः ।
स्थापयेद्राक्षसे पीठे स्वदिक्साधनसिद्धये ॥

खड्गाङ्गं पिण्डिकायां तु स्थापयेदसिमस्तकम् ।
अरातिक्षयविद्वेषं कीलभेदेन मोहनम् ॥



तत्सैन्यध्वंसमुन्मादं रक्षोमारीप्रवर्तनम् ।
कुरुते नात्र सन्देहो विधिवन्मन्त्रसंयुतम् ॥ 75

उत्सेधे मनुभागे तु वेदाश्रं ब्रह्मभागकम् ।
चतुरश्रं तथाष्टाश्रं वृत्तं बालेन्दुमस्तकम् ॥

वारुण्यां स्थापयित्वा तु तद्दिगीशत्वमाप्नुयात् ।
पाशमस्तकयुक्तं तत् पाशकायविधानतः ॥

प्रतिष्ठाप्य परां शान्तिं पुष्टिश्रीवृद्धिसौख्यम् ।
व्याधिहानिं च सौभाग्यमाप्नुयान्नात्र संशयः ॥

गायत्र्यंशे भवेद्दैर्घ्यं रुद्रभागं तु विस्तरे ।
नवभक्ते त्रिभिर्भक्ते मध्ये षड्रसवृद्धये ॥

तदूर्ध्वे तु भवेद्वृत्तं रुद्रांशे त्रपुषं शिरः ।
वायव्यां तु प्रतिष्ठाप्य वायुदिक्स्वाम्यमाप्नुयात् ॥ 80

लिङ्गं ध्वजशिरोयुक्तं ध्वजाङ्कायां न्यसेद्गुरुः ।
तेन लिङ्गेन मन्त्रज्ञः प्रोच्चाटोद्वेगविभ्रमान् ॥

भृशं शोषवियोगौ च शत्रोः कुर्यादसंशयः ।
पूर्वोक्तं वारुणं लिङ्गं याक्षं चोर्ध्वशिरोऽन्वितम् ॥

यक्षाख्यायां प्रतिष्ठाप्य यक्षदिक्स्वाम्यमाप्नुयात् ।
गदामस्तकलिङ्गं तु गदाङ्के स्थाप्य देशिकः ॥

जाम्बूनदसुखप्राप्तिमतीव श्लक्ष्णं मतम् ।
जयं धैर्यं तथा राज्यप्राप्तिं च प्रभुतामपि ॥

लभते नात्र सन्देहो मन्त्रैस्सान्निध्यमागतम् ।
दैर्घ्यार्धे रौद्रवत् कृत्वा रसाङ्गैः पद्मसंभवम् ॥ 85

एकादशांशो विष्ण्वंशः पार्श्वे रामैस्तु वर्धनात् ।
अष्टाश्रं वृत्तकं रौद्रं पार्श्वमध्ये त्रिरश्रतम् ॥

कुक्कुटाण्डशिरोयुक्तं लिङ्गमैशाख्यपीठके ।
स्थापयित्वा स्वदिक्साम्यं लिङ्गं शूलशिरोयुतम् ॥

शूलाख्यायां तु संस्थाप्य पृथिवीशत्वमाप्नुयात् ।
ज्ञानविज्ञानमोक्षार्थं योगीशत्वप्रदायकम् ॥

शिवप्रदायकं सौख्यं तद्वत् साम्राज्यसिद्धिदम् ।
उत्सेधे ग्रहभक्ते तु वेदांशे तु शरांशकम् ॥

षडश्रं पूर्ववद्वृत्तं लिङ्गं छत्रशिरोयुतम् ।
ब्राह्मयां संस्थापयित्वा तु स्वदिगीशत्वमाप्नुयात् ॥ 90

तदेवाब्जशिरः पाद्मं पद्माङ्कायां प्रतिष्ठितम् ।
खेचरीशत्वमाप्नोति साम्राज्यफलसाधनम् ॥

गायत्र्यंशे तु लिङ्गोच्चे शरांशैश्चतुरश्रकम् ।
पूर्ववन्मध्यवृत्ते तु मस्तकं त्रपुषोपमम् ॥

संस्थाप्य गारुडे पीठे तद्दिक्स्वाम्यफलं भवेत् ।
चक्रमस्तकसंयुक्तं चक्राङ्कायां तु देशिकः ॥

न्यस्त्वा पातालसिद्धिं च रसायनमवाप्नुयात् ।
लिङ्गायामे नवांशे तु ब्रह्मांशो गुणभागतः ॥

तथा विष्णुर्हरश्चापि विस्ताराच्च तथैव ते ।
सिद्धिलिङ्गमिदं श्रेष्ठं विष्ण्वायादोषपिण्डिकम् ॥ 95

आप्यादिदेवलिङ्गेषु लोकपालार्चितेषु वा ।
सहस्रलिङ्गं कर्तव्यं तच्च प्रागुक्तवन्नयेत् ॥

सर्वान् कामान्ददात्येतद्वागीशीहृल्लक्षणम् ।
अर्धांशे वेदभागे तु नाहे नक्षत्रभाजिते ॥

अष्टोत्तरशतं लिङ्गं सूत्रैर्विन्यस्य योजितैः ।
अ.ढ्यादिलिङ्गान्युत्सेधैस्समखण्डानि कल्पयेत् ॥

छत्रकुक्कुटखण्डेन्दुत्रपुषाभशिरांसि हि ।
धारालिङ्गं तथैकाश्रं द्विव्यंशाश्रादिकं द्विजाः ॥

साध्यसिद्धिस्सुताप्तिः पुराप्तिः काम्यलाभता ।
मृत्युरुच्चाटनं द्वेषशान्ती पुष्टिर्वशीकृतिः ॥ 100

आकर्षारोग्यरोगाश्च शोषणं च धनं सुखम् ।
मोहस्तंभाभिघाताश्च रक्षा पैशाचराक्षसैः ॥

आसुरं पौरुषं चैव सादेशीशानभैरवम् ।
देवत्वं देवराजत्वं सर्वकामफलं च यत् ॥

रुद्रत्वं च फलान्येषु लिङ्गेष्वेकाश्रकादिषु।
एवमेव हि पीठानि कल्यान्यश्रविभेदतः॥

लिङ्गानां लक्षणं ख्यातं शिविष्यन्ते शिरांसि च।
अष्टांशे तु चतुर्भक्ते भागभागविवर्धनात्॥

भवन्ति पुण्डरीकादिशिरांसि फलभेदतः।
पुण्डरीकाद्यशोदीप्तिर्विशाले विपुलां श्रियम्॥ 105

प्राप्नोति सर्वं श्रीवत्साद्विजयं शत्रुमर्दनात्।
कुक्कुटाण्डशिरस्तस्य चतुर्थांशविवर्धनात्॥

प्रजावृद्धिकरं यस्मात् प्रजां लेभे प्रजापतिः।
तत्त्रिभागैकभागेन वर्तनादिपुमस्तकम्॥

सप्तलोकपतित्वं च सौभाग्यायुष्यसिद्धिदम्।
षड्भागवर्धनाद्भूतिनिमित्तं त्रपुषाकृतिः॥

साध्याश्च ऋषयो देवा यस्माद्भूतिं परां गताः।
साधारणविधावेतान्यर्चयित्वा नरोत्तमाः॥

प्रासाःस्वं स्वमभिप्रेतं तदन्ते पदमव्ययम्।
छत्रादिशीर्षमालोकं वज्रादीनां निगद्यते॥ 110

अर्चनांशे वेदभागे वज्रभागे तु वर्तितम्।
त्रिभागवर्तनाच्छक्तिरर्चांशे रुद्रभाजिते॥

दिग्विभक्ते त्रिभिर्दण्डं सार्धांशेन स्वरांशकम्।
खड्गमस्तकमाख्यातमष्टांशे सार्धवर्धनात्॥

पाशध्वजं शरांशे तु सपादांशाद्गदाशिरः।
प्रहांशे सार्धभागेन शूलमूर्ध्नि त्रिरुन्नतम्॥

वसुनन्दांशके भागवर्तनाच्चक्रपङ्कजे।
शिरोलक्षणमाख्यातं लक्षणोद्धार उच्यते॥

अर्चांशे नवधा भक्ते गुणांशे लक्ष्म लक्षयेत्।
लक्ष्मार्धात् पक्षरेखे द्वे तस्याग्रे गजचक्षुषी॥ 115

कुर्याद्दिक्साम्यसिद्ध्यर्थं वज्राद्यं लक्ष्म मूर्धनि।
वज्रं शक्तिं च दण्डं च खड्गं पाशं ध्वजं तथा॥

गदा त्रिशूलं चक्रं च पद्मं चेति दशायुधम्।
ब्रह्मविष्ण्वादिदेवानां पदमिच्छन् द्विजोत्तमाः॥

तदस्त्राङ्कितपीठं च तदस्त्राङ्कितलक्ष्मतः।
लिङ्गांशे नवधा भक्ते नवांशकृतलक्ष्मकम्॥

स्थापितं शत्रुदेशे तु नाशनं स्वस्य तस्य च।
द्वितीयाच्चक्षुषोर्वेधादक्षिरोगादिकं स्मृतिः॥

तृतीयादास्यसूत्राच्च पङ्गुत्वं मरणं ध्रुवम्।
ग्रीवासूत्राच्चतुर्थाच्च शत्रुबन्धुविनाशनम्॥ 120

पञ्चमाद्भूतवेधाच्च भवेच्छत्रोः पराजयः।
षष्ठांशात्तु तथा वेधात् पुत्रपत्नीविनाशनम्॥

हृद्देशे हृद्व्यथा शूला कुक्ष्यार्तिः कुक्षिवेधनात्।
नाभिदेशे तु शत्रूणां भवेत्सर्वात्मकं भयम्॥

अर्चाया नवमांशे तु लक्ष्मसूत्रफलं क्रमात्।
कथितं हि तथापीह त्रिभागे रसभागके॥

यवस्य तु तुरीयांशं ह्रासयेद्वर्धयेत क्रमात्।
वेधदोषनिवृत्त्यर्थमेवं लक्ष्म प्रकल्पयेत्॥

गायत्र्यंशे तु लिङ्गोच्चे लक्ष्मविस्तृतिरंशतः।
शिरसो वर्तनं यद्वल्लक्षणशिखा भवेत्॥ 125

तदैन्द्रे वज्रसंस्थानं तीक्ष्णाग्रं कृशमध्यकम्।
शक्त्याख्यमर्धविष्कम्भयुतमुन्नतमस्तकम्॥

याम्यदण्डाग्रसंस्थानं पाशाग्राद्दक्षपूजितम्।
नैशाचरे सजिह्वाग्रं कौबेरे तु गदाग्रकम्॥

शूलाग्रमैश्वरं लिङ्गं वायव्यां ध्वजमस्तकम्।
सामान्येषु निजाकारं लक्षणं स्वार्थसाधनम्॥

लक्ष्ममध्येऽथवा कुर्याद्ब्रह्माद्यायुधकल्पनम्।
स्तम्भनादौ तु कर्तव्यं लोकपालार्चितं द्विजाः॥

अर्चायामे नवांशे तु सप्तमे वाक्कल्पनम्।
मणिमुक्ताप्रवालानां न कार्यमपलार्चिषाम्॥ 130



स्वतेजोलक्षणं लोहे बाणलिङ्गे तथैव च।
लक्षणैर्हीनमप्येतद्विस्तारायामनाहजैः॥

शुभलक्षणलक्ष्मं चेल्लिङ्गं सर्वार्थसिद्धिदम्।
पीठपिण्डिकयोर्वक्ष्ये लक्षणं विप्रसत्तमाः॥

लिङ्गायामसमं पीठं विष्ण्वंशोत्सेधसंयुतम्।
ऐन्द्रमाग्नेयकं याम्यं राक्षसं वारुणं ततः॥

वायव्यं याक्षमैशान्यं ब्राह्मं गारुडमेव च।
प्रोक्तानि पीठनामानि त्रिपादाः पिण्डिका मताः॥

ऐन्द्र्यादिसंज्ञिकास्तासु वक्ष्ये पीठाकृतिं ततः।
वेदाश्रं योनिखण्डेन्दुत्र्यश्रं वृत्तषडश्रकम्॥ 135

पद्ममष्टाश्रकं वृत्तं कुण्डलक्षणतो नयेत्।
वेदाश्रेऽष्टादशांशे तु भागत्यागात्समन्ततः॥

निर्गमं द्विगुणं दिक्षु क्षेत्रार्धेन प्रविस्तरम्।
समद्रं गारुडं पीठं वक्ष्ये तेषां तु भूषणम्॥

ऐन्द्रं केवलवेदाश्रं पादकण्ठादिवर्जितम्।
योनिश्चेद्रसभागे तु भवेदेकैकशः क्रमात्॥

पाज्जगती कर्णिका कण्ठनिर्गमात् पट्टिकाद्वयम्।
पीठमाग्नेयकं प्रोक्तं पिण्डिका षोडशांशतः॥

तदुत्सेधे ग्रहांशे तु चन्द्रनेत्रैकवह्निभिः।
पाज्जगतीकर्णिकाकण्ठं तदूर्ध्वे पट्टिकाद्वयम्॥ 140

याम्यमेवं समाख्यातं तदूर्ध्वे याम्यपिण्डिका।
राक्षसे चाष्टधा भक्ते एकद्वित्र्यंशकैः क्रमात्॥

पाज्जगती कर्णिका कण्ठं राक्षसे पट्टिकाद्वयम्।
तदूर्ध्वे राक्षसी पिण्डी वारुणे रुद्रभाजिते॥

चन्द्रयुग्मैकरूपैश्च त्रिभिः पाज्जगतीघटम्।
कर्णिका कण्ठ एव स्यान्निर्गमात्पट्टिकाद्वयम्॥

तदूर्ध्वे वारुणी पिण्डी वायव्ये विश्वभाजिते।
इन्दुतेजोऽद्भिरूपाक्षिरूपयुग्मेन्दुभागकैः॥

पाज्जगतीकुम्भनेत्राःस्युः कण्ठश्चैकैकवेशतः।
निर्गमात् पट्टिकास्तिस्रस्तदूर्ध्वे वायवी स्मृता॥ 145

आप्यालङ्कारवद्याक्षं जङ्घाकर्णिकयोः क्रमात्।
षोडशद्वादशदलात् कण्ठादूर्ध्वे विपर्ययात्॥

तद्दलाष्टसमोपेतां तदूर्ध्वे पिण्डिकां नयेत्।
ऐशं रुद्रांशकं कृत्वा रूपरामैकरामकैः॥

चन्द्रनेत्रांशकैश्चैव पाज्जगती कर्णिका गलम्।
तदूर्ध्वे पट्टिके द्वे तु पिण्डी चैशी तदूर्ध्वतः॥

संस्थानवर्तनाकारैर्ब्राह्मं वा राक्षसं मतम्।
तदूर्ध्वे पिण्डिका ब्राह्मी गारुडं वा तथैव च॥

पङ्क्त्यंशे रूपनेत्रैकगुणैः पाकुम्भकर्णिकाः।
कण्ठं चैकेन भागाभ्यां निर्गमात्पट्टिके ततः॥ 150

तदूर्ध्वे वैष्णवी वक्ष्ये पिण्डिकालक्षणं द्विजाः।
आग्नेयी वैष्णवी चैन्द्री पिण्डिका या द्विमेखला॥

याम्या च राक्षसी याक्षी चैशी ब्राह्मी त्रिमेखला।
षण्मेखला च वायव्या वारुणी पञ्चमेखला॥

विष्ण्वंशषोडशोत्सेधः पिण्डिकापीठविस्तरः।
शेषः पीठोच्चमानं स्यात् खातबाह्ये तु मेखला॥

वज्रं वज्राङ्कपीठं स्याद्वज्री वज्राङ्कपीठिका।
पीठं सहस्रलिङ्गस्य सालङ्कारयुगाश्रयुक्॥

आश्मेऽश्मसम्भवा पिण्डी पार्थिवे पार्थिवी तथा।
दारुजे दारुजा पिण्डी धातुजे धातुसंभवा॥ 155

रत्नजे रत्नजा श्रेष्ठा श्रेष्ठैर्लोहैश्च वा भवेत्।
उच्छ्रयं चललिङ्गानां पूजांशाद्द्विगुणं भवेत्॥

लिङ्गायामे भवेत्पिण्डी लिङ्गं च परितो यथा।
कृशेषु वर्धयेद्वृद्धं स्थूललिङ्गेषु ह्रासयेत्॥

ह्रासयेद्वर्धयेदंशमच्युतस्य हि न च्युतिः।
पिण्डिकायाः समानार्थं ह्रासयेद्वर्धयेद्द्विजाः॥

चलत्लिङ्गेषु कर्तव्यं रत्नजानां तु तद्भवेत्।
मुद्गमात्रा पर्वमात्रा पिण्डिका शोभना यथा॥

पिण्डिकासहितोत्सेधं लिङ्गनाहसमं भवेत्।
सौक्ष्म्ये बैको गुणो येन बलीयान् सर्वदोषजित्॥ 160

समस्तमणिजातीनां दीप्तिस्सान्निध्यकारणम्।
मानोन्मानप्रमाणं च तेषु ग्राह्यं न वा बुधैः॥

साधयेद्दारुजं रत्नं पार्थिवं लोहजं तथा।
गन्धादिनिर्मितं वाथ न च सिद्धौ मनश्शिलम्॥

मुक्तौ हितं च तल्लिङ्गं बाणं सर्वार्थसिद्धिदम्।
अन्यदापि भवेल्लिङ्गं नदीप्रस्रवणोद्भवम्॥

लिङ्गाकारं यथामन्त्रैः स्थापितं वरदं भवेत्।
हस्तादधस्तु रौद्रेषु द्वाभ्यां पिण्डीति भाजिते॥

रौद्रं रौद्रेषु कृत्येषु यथांशः पिण्डिकाधिकः।
पिण्डिका हीनमाना या शत्रुहानौ ततोऽधिका॥ 165

उच्चाटादौ विधेया तु व्यङ्गा व्याधिप्रकोपने।
स्त्रीनाशे लक्षणाद्धीना कार्या कर्मानुरूपतः॥

अव्यक्तमेवमाख्यातं व्यक्ताव्यक्तमथोच्यते।
समलिङ्गे तु कर्तव्यं चतुरष्टाश्रवृत्तकम्॥

कुर्यात्पूर्वोक्तवक्त्रे तु एकद्वित्रिचतुर्मुखम्।
पञ्चमं चैव वक्त्राणि चतुर्दिक्षु च मध्यमे॥

पूर्वोक्तविधिना कुर्यादेकत्रिचतुराननम्।
द्विवक्त्रं पूर्ववत्पूर्वे पश्चिमे कल्पयेत्ततः॥

चतुर्णां चैव वक्त्राणामूर्ध्वे कुर्यात्तु पञ्चमम्।
प्रतिवक्त्रं जटाचूडं चन्द्रार्धकृतशेखरम्॥ 170

प्रतिवक्त्रं त्रिणयनं भुजस्कन्धद्विकं तु वा।
भुक्तिमुक्तिप्रसिद्ध्यर्थं यथाशोभं द्विजोत्तमाः॥

भद्रपीठं द्विधा कृत्वा लोहं च सुदढं नयेत्।
व्यक्ताव्यक्तमिदं ख्यातं व्यक्तलिङ्गमथोच्यते॥

बद्धपद्मासनासीनं शुद्धस्फटिकसन्निभम्।
पञ्चास्यं दशदोर्युक्तं प्रतिवक्त्रं त्रिलोचनम्॥

वक्त्रं प्रति जटाचूडं चन्द्रार्धकृतशेखरम्।
देहपञ्चकसंयुक्तं चरणद्वयसंयुतम्॥

तस्य पूर्वमुखं सुभ्रु सुकपोलं स्मिताधरम्।
जाम्बूनदप्रतीकाशं कल्पयेत्तु भुजद्वयम्॥ 175

दक्षहस्तेऽक्षसूत्रं तु वामे वै बीजपूरकम्।
दक्षमञ्जनसङ्काशं भीषणं विकृतास्यकम्॥

व्यालबद्धजटाचूडं कपालदलमण्डितम्।
तुङ्गाग्रश्मश्रुसंयुक्तं शूलघण्टाकरद्वयम्॥
उत्तरं वामवक्त्रं तु दाडिमीकुसुमप्रभम्।
भूषणप्रचुरं वक्त्रं योषाच्छविसमायुतम्॥

दक्षिणोत्पलहस्ताढ्यं पश्चिमं रजतप्रभम्।
बालवेषसमायुक्तं पुण्डरीकनिभेक्षणम्॥

वराभयकरोपेतं ध्यानासक्तमिव स्थितम्।
पञ्चमं स्फटिकप्रख्यं प्रशान्तं सस्मिताननम्॥ 180

ईशानमूर्ध्ववक्त्रं स्यात् करौ कटकभूषितौ।
इत्थं वक्त्रसमायुक्तं वक्त्रवर्णानुलेपनम्॥

कलावत्सरदेशीयं दिव्याभरणभूषितम्।
सर्वकामप्रदं शान्तं द्वात्रिंशल्लक्षणान्वितम्॥

ईशानदेहकरणं कल्पयेद्द्वारसंमुखम्।
भुक्तिमुक्तिप्रसिद्ध्यर्थमथ कर्मानुरूपतः॥

संस्थानवर्णदिव्याब्जद्वारादीनि प्रकल्पयेत्।
कुर्यादीशानदेहं तु दशतालोत्तमेन तु॥

पुरुषप्रमुखान्देहानीशदेहार्धमानतः।
कुर्यात्तदूर्ध्वकायानि नाधःकायानि देशिकः॥ 185

पूर्वोक्तलक्षणैर्मानैर्देहैः पञ्चभिरन्वितम्।
कुर्यात्सदाशिवं देवं यथायुक्तं यथाशुभम्॥



ध्यायेद्देवमेवं वापि ज्ञानरूपं सदाशिवम्।
कुर्यादूर्ध्वसुसौम्यास्यं दशबाहुं त्रिलोचनम्॥

जटामकुटसंयुक्तं चन्द्रार्धकृतशेखरम्।
व्यालयज्ञोपवीतं च शार्दूलवसनान्वितम्॥

नृत्यन्तं सुस्मितं देव सर्वाभीष्टप्रदायकम्।
श्रीकण्ठमेवमाख्यातमन्यथापि च कथ्यते॥

त्र्यक्षं षोडशहस्ताढ्यं पादद्वयसमायुतम्।
जटामकुटसंयुक्तं मूर्ध्निधुत्तूरपुष्पकम्॥ 190

नानावर्णाम्बरैर्युक्तं वेणिकाभिरलंकृतम्।
ऊर्ध्वस्थदक्षपादाढ्यं दिव्यायुधसमन्वितम्॥

किञ्चित्सभङ्गवक्त्राढ्यवामपादसमन्वितम्।
वृषं ध्वजं च खेटं च मुण्डं चाग्निं च झर्झरीम्॥

पिञ्छं च गजहस्तं च वामे त्वष्ट भुजाः स्मृताः।
त्रिशूलं नागहस्तं च परशुः पाश एव च॥

गदा च दीपं डमरुहस्तं त्वभयकृत्ततः॥
नागैराभरणैर्युक्तं कुण्डलाभ्यामलंकृतम्॥

सर्वलक्षणसंयुक्तं पादनूपुरसंयुतम्।
गौरीं स्कन्दं गृहीत्वा तु वामे पार्श्वे तु संस्थिताम्॥ 195

एवमूर्ध्वाङ्घ्रिनृत्यन्तं त्वन्यथापि निगद्यते।
नानायुधसमोपेतविंशद्धस्तयुतोऽपि वा॥

नानाविधायुधोपेतनवद्वयकरोऽथवा।
दक्षिणं वामजङ्घान्तमुद्धृतं वामपादकम्॥

कुञ्चितं वामहस्तो वा दक्षिणो वा प्रसारितः।
इतरोऽभयहस्तः स्यात्परौ टङ्कानलान्वितौ॥

टङ्कं विहाय शूलं वा डमरुं वापरे करे।
अग्निं हित्वा मृगो वाथ रुद्रोऽयं कालसंज्ञितः॥

त्र्यक्षश्चतुर्भुजः क्रूरस्सखट्वाङ्गकपालकः।
वराभयकरोपेतो रुद्रोऽयं वामसंज्ञकः॥ 200

एष एव हि खट्वाङ्गरहितश्शूलसंयुतः।
अघोररुद्रनामायं भीमो भयविनाशनः॥

त्र्यक्षश्चतुर्भुजो दंष्ट्रायुतवक्त्रान्वितश्शुचिः।
अन्योऽपि नक्रसंयुक्तो जटामकुटसंयुतः॥

धनुर्बाणसमोपेतो मृगटङ्कसमायुतः।
भूतोत्तमाङ्गविन्यस्तवामपादतलान्वितः॥

अथवा पादुके पद्मे भक्तानां शेखरेषु वा।
वामे गौरीसमायुक्तश्चन्द्रार्धकृतशेखरः॥

एष रुद्रो भुजङ्गेशस्सर्वाभीष्टफलप्रदः।
त्रियक्षो द्विभुजश्शान्तो जटाखण्डेन्दुमण्डितः॥ 205

वरदाभयसंयुक्तो वामतः पार्वतीयुतः।
आसीनो वा स्थितो वापि वरदानोद्यतः स्वयम्॥

देवी वामोरुसंस्था वा वामबाहूर्ध्वविग्रही।
तस्यास्तु दक्षिणो बाहुरीशस्कन्धस्थितोऽथवा॥

तस्याः कटयाश्रितो वापि देवोऽयं सर्वकामदः।
गौरी गौरीश्वरश्चैव चतुर्भुजसमन्वितौ॥

कपालशूलसंयुक्तौ वरदाभयसंयुतौ।
त्रिणेत्रौ वा द्विनेत्रौ वा प्रलम्बितपदान्वितौ॥

प्रणमच्छविकत्र्यक्षौ पादमूलस्थभैरवौ।
एकास्याश्चतुरास्या वा पञ्चास्या वाथ भैरवाः॥ 210

भैरवैरपि हीनो वा पङ्कजोपरि संस्थितौ।
कालान्तकादिसंयुक्तो भक्तानामथवोपरि॥
एष रुद्रस्समाख्यातस्त्रिशूलःसर्वसिद्धिदः।
देहार्धान्वितकान्तोऽयं श्रीमान्वृषभवाहनः॥
द्विहस्तौ च चतुर्हस्तौ वरदाभयसंयुतौ।
मृगटङ्कयुतो वाथ ललाटेऽपि सुलोचनः॥
त्रिलोचनो वा दक्षाङ्गस्थितोमादेह एव वा।
अर्धनारीश्वरो नाम्ना वृषभो हरिणा यदि॥

चतुर्भुजश्चतुर्वक्त्रस्त्रिणेत्रश्चन्द्रशेखरः ।
शूलपङ्कजयुक्तो वा वरदाभयसंयुतः ॥ 215

कपालशूलसंयुक्तो बद्धपद्मासने स्थितः ।
नीलरुद्रस्समाख्यातो नाम्ना न्यग्रोधदक्षिकः ॥

चतुर्भुजस्त्रिणेत्रश्च वरदाभयसंयुतः ।
पिञ्छचामरसंयुक्तो भीमरुद्रस्समीरितः ॥

मृगाक्षमालयोपेतः फलाभयकरोऽपि वा ।
वरदाभयहस्तो वा शान्तरूपःस्मितानन: ॥

जटामकुटसंयुक्तः स्थानकादिसमन्वितः ।
रुद्रोऽयं सर्वशर्वस्स्यादभीष्टफलदायकः ॥

शर्वरुद्रस्त्रिणेत्रस्तु वरदाभयसंयुतः ।
कपालशूलसंयुक्तो बद्धपद्मासनस्थितः ॥ 220

मृगशूलसमायुक्तश्चतुर्भुजसमन्वितः ।
पाशमुण्डधरो वापि टङ्कपाशधरोऽपि वा ॥

वरादभयसंयुक्तः स्थितः पद्मासनोपरि ।
भवरुद्रस्समाख्यातस्सर्वेषां भवनाशनः ॥

कपालशूलहस्ताश्च रुद्रा एकादश स्मृताः ।
वराभयकरोपेतास्सदंष्ट्रा उग्रदृष्टयः ॥

अथवा मृगटङ्काभ्यां वराभयकरान्विताः ।
उक्तस्थाःत्रिदशाःपद्मस्थिता वा गौरमूर्तयः ॥

कपालीशादयो रुद्रास्तत्तद्दिक्पालविग्रहाः ।
उग्रा·नानायुधोपेतास्तत्तद्दिक्पालपालकाः ॥ 225

तत्तद्दिक्पालपालदया यद्वा रुद्रोक्तविग्रहाः ।
किमत्र बहुनोक्तेन ये देवा रुद्रविग्रहाः ।

ते रुद्राश्शान्तभावाढ्यास्तत्र प्रोक्ता महेश्वराः ।
एवं लक्षणमाख्यातं तेषां स्थापनमुच्यते ॥

एतन्नामादिवर्णेन विन्दुनादयुतेन तु ।
त्रयोदशान्तयुक्तेन चतुर्थ्यन्ताख्यया युजा ॥

उद्धरेन्मूलमन्त्रं तु ब्रह्माङ्गानुसारतः ।
रुद्राणां रुद्रमूर्तीनां शान्तानामीश्वरो मनुः ॥

अथवा तैः पुरैवोक्तविधिनात्रापि कीर्तिताः ।
कालोऽङ्कुरार्पणं रत्नविन्यासो नेत्रमोक्षणम् ॥ 230

शुद्धिः प्रदक्षिणं तोयाधिवासो मण्टपक्रिया ।
तत्रैव कुण्डसंकल्पस्तिनिवशक्तिकसंख्यया ॥

तक्षकोद्वासनं विप्रभोजनं वास्तुहोमकम् ।
पुण्याहं वास्तुहोमं च बेरशुद्धिरनन्तरम् ॥

कौतुकं स्थण्डिलं शय्या शयनस्थापनं तथा ।
कुम्भादीनां सपर्या च नैवेद्यादिनिवेदनम् ॥

तत्त्वमूर्त्यादिविन्यासस्तदीशैश्च समन्वितः ।
होमं पलाशसद्बिल्ववटोदुम्बरपिप्पलैः ॥

अपामार्गसदश्वत्थखदिरैः प्राग्दिगादितः ।
प्रधाने तु पलाशेन घृतेन चरुणा तिलैः ॥ 235

द्वितीयेऽह्नि ततः पूर्णा दक्षिणादानमेव च ।
मन्त्रन्यासश्च विधिवत् स्नपनं पुष्कलोदनम् ॥

उत्सवो योग्यदेवानां सामान्यस्थापनोक्तवत् ।
कर्तव्यस्सर्वकर्मापि लिङ्गसंस्थापनं यदि ॥

मुखलिङ्गस्य वा विप्रास्तदध्यायोक्तमार्गतः ।
कर्तव्यं सर्वकर्मापि विशेषस्तत्र कथ्यते ॥

एकान्तो यो मनुस्स्वेष्टफलस्स्यात्स्वन्तमेव वा ।
लिङ्गे विन्यस्य नक्षत्रे स्वेष्टकर्म समारभेत् ॥

स्वायंभुवादिकं लिङ्गं समाश्रित्य कदाचन ।
कार्यं कर्माभिचारार्थं न स्थापेत् स्वस्य तद्भवेत् ॥

सर्वदा शान्तिकं कार्यं पौष्टिकादिकमेव च ॥

इति उत्तरकामिकाख्ये महातन्त्रे काम्यलिङ्गप्रतिष्ठाविधिः सप्तत्रिंशत्तमः पटलः ॥

—



## आर्षलिङ्गप्रासादविधिः ॥

लिङ्गानामार्षकाणां तु प्रासादविधिरुच्यते ।
आर्षकमृषिभिस्सर्वैः कौशिकाद्यैः प्रतिष्ठितम् ॥

स्थूलमूलं शिरःस्थूलं मध्यस्थूलं कृशं तु वा ।
त्रिकांशं वृत्तांशं ? यत्फलाकारं मानसूत्रविवर्जितम् ॥

मानुषेऽरमित्युक्तमार्षं स्यादधुनोच्यते ।
पूजांशाद्द्विगुणं पीठं त्रिगुणं गर्भगेहकम् ॥

तदर्धं भित्तिमानं स्यात् तत्समं त्र्यंशमेव वा ।
विस्ताराद्द्विगुणं तच्च त्रिपादाधिकमेव वा ॥

अर्धाधिकं तु वा सप्तभागाधिकमथापि वा ।
लिङ्गविस्तारमानेन त्रिगुणं पीठमुच्यते ॥ 5

गर्भगेहं ततस्तस्य त्रिभागद्वयभित्तियुक् ।
प्राग्वदुत्सेध उद्दिष्ट अन्यथापि निगद्यते ॥

लिङ्गविस्तारकर्णेन द्विगुणान्तार्धसंयुतम् ।
पीठविस्तारमानेन सार्धानर्धविवर्धनात् ॥

सार्धद्विगुणपर्यन्तं पीठविस्तार उच्यते ।
द्विगुणं त्रिगुणं तेन चतुर्गुणमथापि वा ॥

नालीगृहविशालस्स्याद्द्विभागं स्यात् त्रिपादकम् ।
सार्धद्व्यांशकैकांशसमं वा भित्तिविस्तरः ॥

उदयं प्राग्वदेव स्यादन्यथा च निगद्यते ।
लिङ्गनाहस्य कर्णेन पीठविस्तार उच्यते ॥ 10

त्रिगुणं गर्भगेहं स्यात् पञ्चांशे त्र्यंशमेव वा ।
द्व्यंशे चैकांशकं वापि भित्तिविस्तारमारभेत् ॥

पूजांशोच्चद्विभागस्स्यात् कर्णपीठविशालकम् ।
तस्माच्चतुर्गुणं नालीगेहं तत्त्रिषडंशकैः ॥

एकांशकस्य विस्तारमन्यथा च प्रकथ्यते ।
लिङ्गद्विगुणविस्तारं कर्णपीठविशालकम् ॥

नालीगेहं त्रिभागं तु त्रिचतुष्पञ्चभागके ।
एकांशं तद्द्विविस्तारमन्यथा पुनरुच्यते ॥

परिणाहे त्रिकारांशे तच्चतुर्दशकर्णकम् ।
पिण्डिकाविपुलं नाली तच्चतुर्गुणमुच्यते ॥ 15

तत्पादत्र्यंशमानं वा अष्टांशं भित्तिविस्तरः ।
विस्तारद्विगुणे कर्णदशांशोऽशविहीनकम् ॥

पीठतारं ततः पञ्चगुणं नालीगृहं भवेत् ।
तत्पञ्चसप्तभागैकं भित्तितारार्धमारभेत् ॥

हीनाहीनान्तरेऽष्टांशपीठे नालीगृहे तथा ।
भवन्ति बहुमानानि तेष्विष्टं गृह्यतां वरैः ॥

लिङ्गे स्वायम्भुवे चैतत् प्रोक्तं तदपि गृह्यताम् ।
एवमेकतले प्रोक्तं द्वितलादिषु धामसु ॥

साधारे वा निराधारे त्वलिन्दं भित्तिरेव च ।
प्रागुक्तविधिना धामनक्षत्राद्द्वितलं नयेत् ॥ 20

इति उत्तरकामिकाख्ये महातन्त्रे आर्षलिङ्गप्रासादविधिः अष्टत्रिंशत्तमः पटलः ॥

—०—

## पौरुषलिङ्गप्रासादविधिः ॥

अथ पौरुषलिङ्गस्य प्रासादविधिरुच्यते।
पौरुषं भक्तियुक्तैस्तु मनुजैःस्थापितं भवेत् ॥

पूर्वस्मिन्स्थापिते तस्मिन्नज्ञाते पूर्वमन्दिरे।
लिङ्गमानवशेनात्र प्रासादं परिकल्पयेत् ॥

लिङ्गविष्कम्भमानेन त्रिगुणं पीठविस्तरः।
त्रिभागं नालिगेहस्य त्रिचतुर्भागभागतः ॥

भित्तिविस्तार उद्दिष्ट उत्सेधं पूर्ववद्भवेत्।
लिङ्गविष्कम्भकर्णस्य अध्यर्धादर्धवृद्धितः ॥

सार्धद्विगुणकं यावत् पीठविस्तारमाहरेत्।
तस्माच्चतुर्गुणं पञ्चगुणं त्रिगुणमेव वा ।

नालीगृहविशालं स्यात् पीठविस्तारमानतः।
समं वा द्विगुणं वापि अध्यर्धं पीठविस्तृतम् ॥

उदयं प्राग्वदेव स्यादन्यथापि च कथ्यते।
पूजांशद्विगुणं पीठमुदयं तु विशालतः ॥

चतुष्पञ्चगुणं नालीगेहमत्र विधीयते।
ततोऽवशिष्टं तत्सर्वं पूर्ववत् परिकल्पयेत् ॥

लिङ्गात् पीठं ततो गर्भं गर्भाद्भित्तिविनिश्चये।
एकादशयवान्तं तु मात्रादेकविवृद्धितः ॥

त्रिमात्रान्तं तदा वृद्धिं ह्रासं च परिकल्पयेत्।
पीठं गर्भं भवेदेवं भवेत् प्रासादविस्तरे ॥

तदर्धं वा त्रिपादं वा कुड्यतारमुदाहृतम्।
अन्तरेऽष्टांशमानं वा तत्पादं वा समाहरेत् ॥

उदयं प्राग्वदुद्दिष्टं यच्च स्वायम्भुवादिषु।
तथा तदपि तद्ग्राममानं पौराणपौरुषे ॥

पट्टिकाङ्कमधिष्ठानमार्षके धाम्नि कीर्तितम्।
उपानं जगतीकण्ठपट्टिकाकुमुदादिषु ॥

स्थलान्तं कल्पयेदेवं पुराणे धाम्नि पौरुषे।
मानुषे पट्टिकान्तं च वृत्यन्तं जलनिस्रवम् ॥

पीठव्यासेन हर्म्यस्य नालिके भव्य युग्मयुक्।
यदि तद्बाह्यभागं च युग्ममेव विधीयते ॥

युग्मं चेद्युग्ममेव स्यात् संमिश्रं तेषु नेष्यते।
त्रिवर्णपूजितं लिङ्गं पौरुषं वा विधीयते ॥

इति उत्तरकामिकाख्ये महातन्त्रे पौरुषलिङ्गप्रासादविधिः एकोनचत्वारिंशत्तमः पटलः ॥

—o—



## लिङ्गवशात् प्रासादविधिः ॥

अथेदानीं विशेषेण लिङ्गात् प्रासाद उच्यते।
स्वायम्भुवं बाणलिङ्गं दैविकं चार्षकं त्विति ॥

सिद्धविद्याधराद्यैश्च स्थापितं यन्महात्मभिः।
तेषां लिङ्गवशाद्विद्वान् प्रासादं परिकल्पयेत् ॥

पूजांशमानतो नाहाद्विस्ताराद्दुच्छ्रयादपि।
एतेषां कर्णमानैश्च प्रासादं परिकल्पयेत् ॥

तत्समं द्विगुणं वापि त्रिगुणं वा चतुर्गुणम्।
पञ्चषड्गुणितं वापि द्विगुणाद्यं प्रगृह्यताम् ॥

अष्टौ वा देवमानानि नवमानानि सुव्रताः।
तत्तदर्धं तदर्धं स्याद्द्वात्रिंशत् कथितानि तु ॥

प्रत्येकं चैवमाख्यातं पीठमानं द्विजोत्तमाः।
पीठद्विगुणमानो वा त्रिगुणो वा चतुर्गुणः ॥

पञ्चषड्गुणितो वापि गर्भगेहस्य विस्तरः।
अवान्तरप्रमाणानि पूर्ववत्परिकल्पयेत् ॥

गर्भगेहविशाले तु द्विभागादेकभागतः।
षड्गुणान्तरपर्यन्तान् भागान् कुर्वेकभागतः ॥

एकभागविवृद्ध्या तु द्विगुणान्ता विशालता।
भित्तेरन्तरमानं तु पूर्ववत्परिकल्पयेत् ॥

लिङ्गाद् पीठं ततो गर्भो गर्भाद्भित्तिविनिश्चये।
एकादशयवान्तं तु मात्रादेकविवृद्धितः ॥

पीठगर्भे भवेदेवं भवेत् प्रासादविस्तरे।
अङ्गुलीहस्तपूर्णार्थं सप्तमात्रान्तमाचरेत् ॥

इति उत्तरकामिकाख्ये महातन्त्रे लिङ्गवशात् प्रासादविधिः चत्वारिंशत्तमः पटलः ॥

—o—

## सार्वदेशिकलिङ्गप्रासादविधिः ॥

सार्वदेशिकलिङ्गादेस्स्थापनं सम्यगुच्यते।
प्रासादस्याथ लिङ्गस्य पीठस्याश्मन एव वा ॥

सार्वदेशिकसंज्ञस्य विधिस्सर्वत्र संमतः।
सात्त्विके राजसे देशे तामसे वा प्रकल्पयेत् ॥

विशेषाद्राजसे देशे राज्ञां विजयकारणम्।
धर्मकामार्थसिद्ध्यर्थं सार्वकामिकमुच्यते ॥

अन्ये मोक्षप्रदास्सर्वे कर्तुः कारयितुस्सदा।
नागरं स्यात्कृते काले त्रेते द्राविडमिष्यते ॥

द्वापरे वेसरं कार्यं सार्वदेश्यं कलौ युगे।
वराटं चैव कालिङ्गं सर्वत्रापि च संमतम् ॥

नागराद्द्राविडाच्चापि कालिङ्गाद्वेसरादपि।
वराटाख्यं विशिष्टं स्यात्सार्वदेश्यं मुनीश्वराः ॥

सार्वदेशिकमित्युक्तं फलं तस्य विशिष्यते ।
स्वायम्भुवं च बाणं च दैविकं चार्षकं तथा ॥

यथाविशिष्टं विप्रेन्द्रास्तद्वदेतदुदाहृतम् ।
मानुषे त्वेव लिङ्गादौ फलवैशिष्ट्यमिष्यते ॥

तस्माच्छ्रेयोऽर्थिभिः कार्यं सार्वदेशिकसंज्ञितम् ।
तन्त्रसंकरदोषोऽपि मन्त्रसंकर एव वा ॥

आचार्यसंकरो वापि देशसंकर एव वा ।
कालसंकरदोषश्च युगसंकर एव वा ॥ 10

अन्येषां संकरो वापि यतो नातो विशिष्यते ।
सार्वदेशिकधाम्नस्तु मानोन्मानं विधीयते ॥

त्रिचतुर्हस्तमारभ्य द्विद्विहस्तविवर्धनात् ।
पञ्चाशद्धस्तपर्यन्तं मानं स्यात् सार्वदेशिकम् ॥

सार्वदेशिकधामादौ शान्तिकाद्युच्छ्र्याश्च ये ।
तारद्विभागे त्र्यंशाद्याः सप्तान्ताः शान्तिकादयः ॥

अध्यर्धत्रिगुणान्ताश्च संप्राप्ता देशिकोत्तमैः ।
एकद्वित्रिकरैर्युक्तमानाद्धीनं तु वाधिकम् ॥

आयाद्यं सकले नेति नियमान्नेष्यते द्विजाः ।
विस्तारादुच्छ्र्याद्वाथ विस्तारस्योच्छ्र्येण वा ॥ 15

विस्तारायामतो वाथ नाहेनाथ परीक्षयेत् ।
प्रसङ्गेन च कथ्यन्ते लेशादायादयोऽपि ये ॥

गुणयेदिष्टमानं तु नवनागरसैः क्रमात् ।
रुद्रभानुशरैर्हन्याच्छेषमायं विनिर्दिशेत् ॥

गुणाष्टरन्ध्रदशभिर्मनुषड्वसुसप्तभिः ।
गुणयेद् क्षपयेद्वापि तच्छेषं व्ययमादिशेत् ॥

भानुनाडिरसैर्वृद्धनक्षत्रैः क्षपयेद्दिनम् ।
नृपकर्तृदिनाद्यास्तुलिङ्गाद्युक्तदिनान्तकम् ॥

गुणयेल्लब्धनक्षत्रे जन्माद्यानि यथाक्रमम् ।
तुष्टिस्सम्पद्विपत्क्षेमप्रत्वरं साधको वधः ॥ 20

मैत्रं परममैत्रं स्यात् व.ल्ह्ः प्रथमक्रमे ।
द्वितीये सम्पदाद्यास्तु पूर्ववत्समुदाहृतम् ॥

शुभं तृतीयजन्मर्क्षं मृतमष्टमराशिकम् ।
वैनाशिकं च त्यक्त्वा तु तृतीये वा विपर्यये ॥

शेषं शुभमिति ज्ञेयमेवं ज्ञात्वा प्रयोजयेत् ।
वियोगाद्यशुभं योगं गणं चासुरमानुषम् ॥

वर्जयेत्सिद्धिकामस्तु मुक्तिकामो यथेच्छया ।
रूसर्तुभूतवेदाग्निवसुभिः क्षपितं तु यत् ॥

तस्कराद्यंशकं ज्ञेयं नाम्ना तेषां फलं भवेत् ।
रुद्ररन्ध्रगुणैर्वृद्धिं योनिभिः क्षपयेद्गुरुः ॥ 25

ध्वजाद्या योनयश्चाष्टौ षड्जाद्यास्सप्त योनयः ।
पृथ्व्याद्याः पञ्चसंख्या वा दक्षिणाद्यास्त्रयोऽग्नयः ॥

चतुष्प्रकाराद्विज्ञेया ध्वजाद्याः पूर्ववन्मताः ।
षड्जो वृषभगान्धारौ पञ्चमो मध्यमस्तथा ॥

निषादो धैवतस्सप्त योनयस्तासु शस्यते ।
षड्जश्च वृषभो मध्ये भूतेषु पृथिवी जलम् ॥

गार्हपत्यस्तथैवाहवनीयोऽग्निषु शस्यते ।
पृथ्व्याद्याः प्रथिताः पञ्च दक्षिणाद्यास्त्रयोऽग्नयः ॥

वृद्धं नवाष्टकरसैर्हरेद्वारं तु सप्तभिः ।
निन्दिता रविसौरारास्त्वशुभयोगे शुभप्रदाः ॥ 30

प्रासादे मण्टपे चैव प्राकारे गोपुरे तथा ।
लिङ्गबेरादिके चैवमायाद्यं कल्पयेद्द्विजाः ॥

किं तु लिङ्गे च बेरे च तुङ्गेनैव निरीक्षयेत् ।
धाम्नस्त्र्यंशं चतुस्त्र्यंशं पञ्चत्र्यंशद्विभागिकम् ॥

षडंशे चतुरंशं वा सप्तभागे तु पञ्चभिः ।
चतुर्भिर्वा त्रिभागैर्वा गर्भगेहं प्रकल्पयेत् ॥

अष्टांशे त्रिचतुष्पञ्चषड्भागैर्गर्भ इष्यते ।
नवांशे त्रिचतुष्पञ्चषट्सप्तांशैस्तु नालिकाम् ॥



मिश्रं वा योजयेद्भित्ति युग्मायुग्मकरेषु च ।
त्र्यंशैकं तद्द्वयांशं वा पञ्चांशे त्र्यंशमेव वा ॥ 35

षडंशे चतुरंशं वा सप्तांशे त्र्यंशमेव वा ।
चतुरंशं तु वा मध्ये षडंशं पञ्चभागिकम् ॥

अष्टांशे तु कृते व्यासे नवांशे पञ्चभागिकम् ।
चतुरंशेन वा भद्रं मध्यमे परिकल्पयेत् ॥

पादं वार्धत्रिपादं वा कुर्याद्द्व्यंशं तु निर्गमः ।
भद्रस्य युग्मपार्श्वस्थरुद्ररूपादिरेव वा ॥

तले तले तु चैवं वा कल्पयेद्देशिकोत्तमः ।
सार्वदेशिकलिङ्गानि कथ्यन्ते गर्भमानतः ॥

प्रासादगर्भमाने तु पञ्चांशे त्रिभिरुत्तमम् ।
नवांशे पञ्चभिर्मध्यं भवत्यर्धेन कन्यसम् ॥ 40

तदवान्तरभेदेन भवन्त्यन्यानि षट् पुनः ।
तत्तदन्तरमानेन त्रयस्त्रिंशत्प्रमाणकम् ॥

विंशत्यंशे कृते गर्भे दशांशमधमं भवेत् ।
एकादशांशैर्मध्यं स्याद्भागैर्द्वादशभिर्वरम् ॥

मध्यमेऽष्टविभागे तु नव लिङ्गादयस्तु वा ।
गर्भं तु नवधा कृत्वा नवलिङ्गोच्छ्र्यस्तु वा ॥

अधमं गर्भपादं वा त्रिपादं चोत्तमं भवेत् ।
मध्यमेऽष्टविभागे तु तत्तदन्तरभेदतः ॥

त्रयस्त्रिंशत्प्रमाणानि लिङ्गानां कथितानि च ।
अथवा गर्भगेहस्य त्र्यंशैकमधमं भवेत् ॥ 45

गर्भार्धं मध्यमं ज्ञेयं पञ्चत्र्यंशं वरं मतम् ।
पूर्ववन्मध्यमं कृत्वा त्रयस्त्रिंशत्प्रमाणकम् ॥

लिङ्गायामे विकारांशे चतुर्भूतरसैर्हितम् ।
एकहस्तं समारभ्य चैकैकाङ्गुलवर्धनात् ॥

नवहस्तप्रमाणान्तं मानं स्याल्लिङ्गदैर्घ्यके ।
एकविंशतिभागेन गर्भगेहे विभाजिते ॥

त्रयोदशांशकं श्रेष्ठं दशांशमधमं भवेत् ।
पूर्ववन्मध्यमं कृत्वा त्रयस्त्रिंशत्प्रमाणकम् ॥

लिङ्गायामे विकारांशे चतुर्भूतरसैर्हितम् ।
सत्रिभागैश्शरैर्लिङ्गविस्तारः परिकीर्तितः ॥ 50

गायत्र्यंशे तु लिङ्गोच्चे पञ्चभिर्वाथ विस्तरः ।
अथवाष्टदशांशे च लिङ्गोच्चे पञ्चभागिके ॥

चतुर्भागोऽथवा लिङ्गविस्तारः परिकीर्तितः ।
दैर्घ्यं त्रिसप्तधा कृत्वा रसभूताब्धिभागतः ॥

विस्तारः कथितश्शास्त्रे लिङ्गानां मुनिपुङ्गवाः ।
द्वारस्तम्भादिभिश्चैव मानं लिङ्गे समुह्यताम् ॥

भागेन वाथ लिङ्गानि विभजेत्तानि चाङ्गुलैः ।
आयादिशुभसिद्ध्यर्थमंशैर्वा विभजेद्यथा ॥

षोडशांशं समारभ्य चतुर्विंशतिसंयुतम् ।
शतांशं विभजेत्तत्र त्वेकांशं योजयेद्गुरुः ॥ 55

तैर्वा निरीक्षयेल्लिङ्गबेराद्यायादिकं गुरुः ।
समखण्डं वर्धमानं शैवाधिक्यं त्रिराशिकम् ॥

स्वस्तिकं च सहस्राख्यं धारालिङ्गमिति द्विजाः ।
इयत्तया समुद्देशक्रमेणैष विधीयते ॥

त्रिधा विभज्य लिङ्गोच्चं कुर्याद्भागत्रयं क्रमात् ।
तद्भागसदृशस्तारस्समखण्डोऽयमीरितः ॥

पूर्वोक्तताद्युक्तो वा समखण्डो मुनीश्वराः ।
पक्षस्त्र्येकविंशांशगायत्र्यंशे शिवायते ॥

चतुष्पञ्चर्तुसप्तांशा ब्रह्मभागे समीरिताः ।
भागभागविवृद्ध्या स्यात् तस्मात्तस्माद्धरीशयोः ॥ 60

वर्धमानानि चत्वारि ब्राह्मणादिष्वनुक्रमात् ।
अथवान्यप्रकारेण वर्धमानं विधीयते ॥

एकहस्तेऽङ्गुलं ह्येकं द्वित्रिहस्ते त्रिमात्रकम् ।
चतुष्पञ्चकरे पञ्च षट्सप्तसु च सप्तकम् ॥

नवाङ्गुलं तु विज्ञेयं लिङ्गयोर्वंशुरन्ध्रयोः।
एकद्वित्रिक्रमाद्यावदधिके ऋतुवत्कृते ॥

ब्रह्मविष्णुहरांशे तु हास्तिकोपि ह्यतो विधिः।
सप्तसप्ताष्टभागं तु पञ्चपञ्चषडंशकम् ॥

चतुश्चतुश्शरांशं तु वह्निवह्नियुगांशकम्।
एवं शिवाधिकं लिङ्गं ब्रह्माद्यादिष्वनुक्रमात् ॥ 65

लिङ्गोच्चं नवधा कृत्वा ब्रह्माद्यास्त्रिस्त्रिभागतः।
षट्सप्ताष्टविभागैस्तु नाहो रुद्रादिषु क्रमात् ॥

त्रैराशिकमिदं लिङ्गं शूद्राणां तत् प्रशस्यते।
नवधा लिङ्गमानेन त्रिचतुर्भिरजादयः॥

स्वस्तिकं लिङ्गमाख्यातमन्यथा च निगद्यते।
त्रिंशद्भागे शिवायामे नवदिग्रुद्रभागतः ॥

ब्रह्माद्यास्त्वथवा तेभ्यो भागभागाद्यनुक्रमात्।
त्रयस्त्रिंशत्कृते लिङ्गे स्वस्तिकं रुद्रदेशकम् ॥

सहस्राख्यं च धाराख्यं पूर्वोक्तयात्रापि गृह्यताम्।
मुखालिङ्गं च पूर्वोक्तविधिनात्रापि भाष्यते ॥ 70

शिरोवर्तनमेतेषां पूर्वोक्तविधिना नयेत्।
लिङ्गानामधिकं दद्याच्छिरसो वर्तनांशकम्॥

समस्तमथवा त्र्यंशमधिकं वर्तनांशतः।
शिवलिङ्गप्रतिष्ठोक्तविधिना लक्षणं नयेत् ॥

यावल्लिङ्गस्य विस्तारस्तावत् पीठस्य विस्तृतिः।
लिङ्गविष्कम्भमानेन त्रिगुणा वाथ विस्तृतिः॥

चतुष्पञ्चगुणा वापि द्विगुणा वाथ विस्तृतिः।
पूजांशद्विगुणा वाथ त्रिगुणा वा चतुर्गुणा॥

तत्तत्कर्णप्रमाणा वा नाहेन सदृशापि वा।
नाहद्विगुणमाना वा पीठविस्तृतिरुच्यते ॥ 75

तत्तदन्तरमानानि पीठानां कथितानि च।
गर्भगेहत्रिभागैकश्चतुर्भागिक एव वा ॥

गर्भार्धो वा विशालस्स्यात् पीठस्य मुनिपुङ्गवाः।
विष्णुभागसमोत्तुङ्गपादार्धसहितोऽथवा ॥

ब्रह्मांशमष्टधा कृत्वा व्योमभागविवर्धनात्।
पञ्चांशोच्चं तदुच्चं वा विष्ण्वंशोत्तुङ्गतोऽधिकः ॥

पीठस्थापनरीत्यैव तस्यालङ्कारमाचरेत्।
लिङ्गविष्कम्भमानेन द्विगुणं त्रिगुणं तु वा ॥

चतुष्पञ्चगुणं वापि कूर्मशैलं प्रकल्पयेत्।
तत्तदन्तरमानानि नवधा परिकल्पयेत् ॥ 80

लिङ्गायामसमं वापि लिङ्गनाहसमं तु वा।
पीठविस्तारसदृशं ब्रह्मशैलं प्रकल्पयेत् ॥

तद्विशालसमं वाथ त्रिपादं स्वर्धमेव वा।
तत्पादं वा समुत्सेधं ब्रह्मशैलस्य कल्पयेत् ॥

तन्मध्यं चतुर्भक्त्वा युग्याद्वा कशिलोच्छ्रयम्।
लिङ्गविष्कम्भमानं तु विकारांशसमं भवेत् ॥

भागादेकविवृद्ध्या तु चतुर्भागावसानकम्।
ब्रह्मशैलावटं कुर्यादुत्सेधाद्विस्तरात् पुरः ॥

एकैकयववृद्ध्या तु द्व्यङ्गुलान्तं प्रकल्पयेत्।
कश्चिदस्ति विशेषोऽस्मिन् यावत्पूजांशदैर्घ्यकम् ॥ 85

तावन्निर्गमसंयुक्त पीठिका यदि कल्पिता।
छायादोषो यथा न स्याल्लिङ्गपीठिकयोर्द्विजाः ॥

देशस्य देशनाथस्य कर्तुः कारयितुस्तथा।
आवहेदुत्तमां सिद्धिं सर्वलिङ्गेष्वयं विधिः ॥

तथैव पूजाभागार्धादधश्चेल्लक्षणं कृतम्।
अर्चांशादधिकं पीठं पार्श्वतो न्यूनमेव वा ॥

कल्पितं पीठमेवं वा पीठाल्लिङ्गं तु मुक्तिदम्।
सिद्ध्यै विगर्हितं तत्स्यात् समं चेत् सिद्धिदं द्वयम् ॥

शान्तिकाद्युच्छ्रयाद्यं च प्रोक्तं प्रासादकल्पने।
गण्यं तदनुरोधेन नात्यन्तमिह कथ्यते ॥ 90



तत्संग्रहेऽपि नात्यन्तदोषस्स्यात् सार्वदेशिके।
स्वयम्भुर्दैविके बाणे गाणे मौने विशेषतः ॥

लक्षणं नेष्यते तेषां विस्तारेणोच्छ्रयेण वा।
तथा ब्रह्मादिभिर्भागैश्शिरोलक्षणभेदतः ॥

ब्रह्मनन्दिशिल्पिभिश्च स्वाकारो लक्षणं यतः।
त्रिभिर्ब्रह्मादिभिर्भागैर्द्वाभ्यामेकेन वा युतम् ॥

यदाकारविशिष्टं तद्रूपं तस्य तदेव हि।
प्रासादपीठिके तेषां गर्भमानादिकं च यत् ॥

सार्वदेशिकमेवेष्टं यतस्ते सार्वदेशिकाः।
प्रासादपीठिकादीनां जीर्णादौ समुपस्थिते ॥ 95

जीर्णोद्धारविधानेन पीठप्रासादमाचरेत्।
परित्यक्तशिलायोगे शिलायोगश्च कथ्यते ॥

स्वायम्भुवादिलिङ्गानां दृश्यभागादधः स्थितम्।
दर्शयेत् खननाद्यैश्चेद्घोरदुःखावहं नृणाम् ॥

दृश्यभागमिति ज्ञेयं ब्रह्मविष्णुहरांशकम्।
तस्मादधः स्थितं लिङ्गं मूलेनैव परीक्षयेत् ॥

अज्ञानाच्छोधने कर्तुर्मृत्युरेव न संशयः।
सार्वदेशिकलिङ्गानामित्थं लक्षणमीरितम् ॥

प्रतिष्ठाया विधानं यत् पूर्वोक्तविधिनोच्यते।

इति उत्तरकामिकाख्ये महातन्त्रे सार्वदेशिकलिङ्गप्रासादविधिः एकचत्वारिंशत्तमः पटलः ॥

---

## अङ्गलिङ्गप्रतिष्ठाविधिः ॥

अङ्गलिङ्गप्रतिष्ठां तु प्रवक्ष्यामि समासतः।
प्रधानमङ्गमित्येवं द्विविधं लिङ्गमुच्यते ॥

मण्टपाः परिवारा वा प्राकारा गोपुरादयः।
यस्य लिङ्गस्य विद्यन्ते तत् प्रधानमिति स्मृतम् ॥

यत् प्रधानाविरोधेन पञ्चप्राकारमध्यमे।
तदङ्गमिति विख्यातं परिवारैर्विना कृतम् ॥

शुभाशासंस्थितं भुक्त्यै मुक्त्यै सर्वासु दिक्षु च।
पश्चिमोत्तरपूर्वाशाश्शुभाशास्संप्रकीर्तिताः ॥

कुर्यात्तेषां विमानाद्यं मूलधामोनमानकम्।
तत्र संस्थापयेल्लिङ्गं प्रतिमां वोभयात्मिकाम् ॥ 5

प्राकारत्रयबाह्ये तु यदि देवाः प्रकीर्तिताः।
परिवारादिकं तत्र कुर्याद्वा लेशमार्गतः ॥

नित्योत्सवादिकं तत्र विरोधाय न कल्पते।
अङ्गलिङ्गाद्यकं शुद्धशैवमार्गेण कारयेत्॥

नैव पाशुपतेनापि न महाव्रतिना क्वचित्।
न बौद्धार्हतकापाल्यपाञ्चरात्रादिकैर्न च ॥

अन्यैरपि न कर्तव्यं दर्शनान्तरसंस्थितैः।
प्रमादाद्यैः कृते तच्च शैवं संपादयेत् क्षणात् ॥

एकहस्तात्त्रिहस्तान्तमङ्गलिङ्गप्रमाणकम्।
अत ऊर्ध्वं न कर्तव्यं कृतं चेत् सर्वदोषकृत् ॥ 10

पञ्चादशकरादूर्ध्वं प्रासादं नैव कारयेत्।
स्वधामगर्भमानाद्वा कुर्यादङ्गुलमानतः ॥

सार्वदेशिकमेवेष्टं प्रासादं लिङ्गमेव च।
कर्षणादिकमेतेषां कर्तव्यं वा न वा पृथक् ॥

आद्येष्टकादिकं कर्म तावदत्र समाचरेत्।
एवं लिङ्गं विमानाद्यं कृत्वा संस्थापयेत्सुधीः॥

प्रागेव विहितं यस्मात् प्रतिष्ठा तेन चोच्यते।
मूर्ध्नेष्टकादिकं कर्म जीर्णोद्धारादिकं च यत्॥

पूर्वोक्तविधिना सर्वं कर्तव्यं चोदितं यथा।
क्रियमाणेऽपि मूलस्य पवित्रारोहणादिके॥ 15

तस्मिन्कालेऽङ्गलिङ्गादेः पवित्रारोहणं न वा।
पृथग्वा करणीयं तद्यथाशक्ति द्विजोत्तमाः॥

एवं यः कारयेदङ्गलिङ्गादेः स्थापनं नरः।
आयुःश्रीकीर्तिसौभाग्यारोग्यमोक्षबहुप्रजाः॥

संलब्धकामो देहान्ते शिवेन सह मोदते।
एकाद्येकैकवृद्ध्या तु रुद्रसंख्यावसानकम्॥

अष्टोत्तरशतं वाथ तदर्धं वा तदर्धकम्।
शतं वार्धं तदर्धं वा शतोर्ध्वमपि पुष्कलम्॥

एवं यः कारयेत् कर्ता स एवाहं न संशयः॥

इति उत्तरकामिकाख्ये महातन्त्रे अङ्गलिङ्गप्रतिष्ठाविधिः द्विचत्वारिंशत्तमः पटलः॥

---

## सदाशिवस्थापनविधिः॥

सदेशस्थापनं वक्ष्ये तल्लक्षणपुरस्सरम्।
द्रव्यैश्शिलादिभिः कुर्यात् पूर्वोक्तं विशेषतः॥

बद्धपद्मासनं श्वेतं स्थितं पद्माद्यसंयुतम्।
पिङ्गलाभं जटाचूडं दशदोर्दण्डमण्डितम्॥

अभयं च प्रसादं च तथा शक्तिं त्रिशूलकम्।
खट्वाङ्गं दक्षभागस्थैर्वहन्तं करपल्लवैः॥

भुजङ्गं चाक्षमालां च डमरुं नीलपङ्कजम्।
बीजापूरं च वामस्थैर्वहन्तं सुप्रसन्नकम्॥

अर्चनाध्यायसंसिद्धध्यानान्तरयुतं तु वा।
इच्छाज्ञानक्रियाशक्तित्रयसंकल्पलोचनम्॥ 5

ज्ञानचन्द्रकलायुक्तं कलावर्णोपलक्षितम्।
ब्रह्मसूत्रादिकं कार्यं सुखेशप्रतिमोदितम्॥

एवं सदाशिवःकार्यो मनोन्मन्या समन्वितः।
इत्थं लक्षणमाख्यातं प्रतिष्ठाविधिरुच्यते॥

वाराद्यं पूर्ववद्ब्राह्मणाङ्कुराणां समर्पणम्।
तदन्ते रत्नविन्यासं दृष्ट्युन्मीलनमेव च॥

बेरशुद्धिं पुरादीनां प्रदक्षिणमथाचरेत्।
जलाधिवासनं पश्चान्मण्टपं पूर्ववन्नयेत्॥

मण्टपे कुण्डक्लृप्तिं च ग्रहभूतैकसंख्यया।
तानि कुण्डानि वृत्तानि तदिगस्राणि वा भवेत्॥ 10



पश्चाच्छिल्पिविमोक्षं च द्विजानां भोजनं तथा।
पुण्याहं वास्तुहोमं च भूपरिग्रहमेव च॥

वेद्यूर्ध्वे स्थण्डिलं शय्याक्लृप्तिं पूर्ववदाचरेत्।
प्रतिमाशोधनं कृत्वा कौतुकं बन्धयेत्ततः॥

शय्यायां शाययेद्देवं प्राक्शिरश्चोर्ध्ववक्त्रकम्।
शिरःप्रदेशे देवस्य सदाशिवघटं न्यसेत्॥

सर्वलक्षणसंपन्नं यजेत् कुम्भे सदाशिवम्।
वर्धनीमुत्तरे न्यस्य यजेत्तस्यां मनोन्मनीम्॥

परितोऽष्टौ घटान्न्यस्य विद्येशांस्तेषु पूजयेत्।
तत्त्वमूर्त्यादिविन्यासं कृत्वा होमं समाचरेत्॥ 15

संकल्प्य कुण्डं वह्निं च समिदाज्यचरूंस्तिलान्।
यवांल्लाजांश्च हुत्वान्ते सिद्धार्थं च पयांस्तथा॥

अश्वत्थोदुम्बरप्लक्षवटाः पूर्वादिदिक्षु च।
शमीखदिरमायूरबिल्वास्त्वुर्वीशकोणतः॥

प्रधानस्य पलाशस्स्यात् स च सर्वत्र वा मतः।
प्रत्येकं पूर्ववद्धुत्वा द्वितीये देशिकश्शुचिः॥

तदुद्धृत्य प्रतिमामिष्ट्वा कुम्भानग्निं च पूर्ववत्।
देशिकादींश्च संपूज्य दक्षिणां दापयेत्ततः॥

ततो मुहूर्ते संप्राप्ते कुम्भाद्बीजं पुरो न्यसेत्।
कुम्भाद्बीजं समादाय सदेशहृदि विन्यसेत्॥ 20

वर्धन्या बीजमादाय तस्य पीठे तु विन्यसेत्।
सहजा यदि सा देवी तस्यास्तु हृदि विन्यसेत्॥

अन्येभ्यो बीजमादाय पीठस्य परितो न्यसेत्।
तत्तद्घटोदकैस्तत्र तत्तद्देशेऽभिषेचयेत्॥

स्नपनं भूरि नैवेद्यं पूजामुत्सवमाचरेत्।
देव्याश्च स्नपनं कृत्वा कल्याणं कारयेत्ततः॥

अनुक्तमत्र यत्कुर्यात् सामान्यस्थापनोक्तवत्।
नित्यार्चनादिकं सर्वं प्राग्वदेव समाचरेत्॥

सदाशिवप्रतिष्ठां तु कुर्यादित्थं हि यो नरः।
इहैव भोगान् भुक्त्वेष्टान् सोऽन्ते यायाच्छिवं परम्॥ 25

इति उत्तरकामिकाख्ये महातन्त्रे सदाशिवस्थापनविधिस्त्रिचत्वारिंशत्तमः पटलः॥

—o—

## देवीस्थापनविधिः॥

देव्यास्संस्थापनं वक्ष्ये तल्लक्षणपुरस्सरम्।
शिलादिद्रव्यमादाय तैः कुर्यात् प्रतिमां ततः॥

प्रासादे शिवहर्म्ये तु अष्टदिक्ष्वन्तरालके।
गौरीप्रतिष्ठा कर्तव्या इष्टदेशे मनोरमे॥

त्रिहस्ताद्येकपञ्चाशद्धस्तविस्तारसंयुतम्।
तस्या धाम विधातव्यमुत्सेधाद्यं तु पूर्ववत्॥

वल्म्याकारमिष्टं स्यादनुरूपयुतं तु वा।
वल्म्याकारमिष्टं चेच्चतुर्धा विभजेत्ततिम्॥

दैर्घ्यं त्वेकांशवृद्ध्या तु षड्भिर्गर्भो भवेत्पदैः ।
एकेन भित्तिरुद्दिष्टा त्रिधा वा विभजेत्ततिम् ॥ 5

द्वाभ्यां गर्भो भवेद्भित्तिस्समन्तादेकभागतः ।
चतुर्धा भाजिते तारे षड्भिर्दैर्घ्यमथापि वा ॥

गर्भस्त्वष्टपदैः स्यात्तत्त्वन्यथा च निगद्यते ।
पञ्चधा भाजिते तारे दैर्घ्यं षड्भिरथापि वा ॥

सप्तभिस्त्वष्टभिर्वाथ नवभिर्दशभिस्तथा ।
समन्तादेकभागेन भित्तिर्गर्भस्तु शेषतः ॥

षड्भागे त्वेकभागादिवृद्ध्या द्विगुणमानतः ।
आयामं गर्भभित्योश्च पूर्ववत्परिकल्पयेत् ॥

एवं विंशतिभागान्तं विस्तारे परिकल्पिते ।
तत्तद्द्विगुणमानान्तमायामं परिकल्पयेत् ॥ 10

द्वितलादितलेऽलिन्दान् भित्तिं च बहुसंख्यया ।
पादेन चार्धभागेन त्रिपादेन समन्ततः ॥

सार्धेन सत्रिपादेन द्विभागेनाथ कल्पयेत् ।
द्वित्वालिन्दं बहिर्भागाद्धनं वा सर्वमिष्यते ॥

अधिष्ठानादिषड्वर्गं पूर्ववत् परिकल्पयेत् ।
शालाकारं सभाकारं प्रासादाकारमेव च ॥

मस्तकस्थूपिसंख्या स्यादेकादेकादशान्तिका ।
दिग्देवतास्तु देव्यास्तु रूपभेदाः प्रकीर्तिताः ॥

शिवायतनदेवा वा गणपः षण्मुखोऽपि वा ।
सिंहो वा वृषभो वापि वाहनं परिकीर्तितम् ॥ 15

शुका वा कोणदेशे स्युरन्यत् प्रागुक्तवत्नयेत् ।
पूर्वास्यं पश्चिमास्यं वा दक्षिणास्यं समीरितम् ॥

उत्तरास्यं तु वा कुर्यात्सर्वं तत्सम्पदां पदम् ।
कृता चेद्गर्भमानेन तद्विस्तारो विशिष्यते ॥

आयामो वाथ संग्राह्यः प्रतिमालक्षणोक्तितः ।
धाम्नि दिग्देवताः स्थाप्यास्तद्देवीरूपविग्रहाः ॥

रुद्रस्कन्दगणेशा वा द्वादशान्ततलान्विते ।
हर्म्यकोणेषु वृषभं सिंहं वा परिकल्पयेत् ॥

प्रासादभित्तिदेवानामशेषाणामपि प्रभोः ।
प्रासादस्य प्रतिष्ठायां प्रतिष्ठा परिकीर्तिता ॥ 20

रुद्रावतारक्रीडासु प्रतिष्ठा नैव कीर्तिता ।
प्राकारपरिवारांश्च मण्टपादींश्च कल्पयेत् ॥

वामाद्याश्शक्तयो वापि परिवारे व्यवस्थिताः ।
श्रीर्दुर्गा क्षमा शशिन्या च गायत्री चाप्युषा तथा ॥

सन्ध्या सरस्वतीत्येताः स्थाप्या वा मुनिपुङ्गवाः ।
प्रज्ञा मेधा श्रुतिश्चैव स्मृतिः स्वाहा वषट् च वै ॥

धृतिर्मतिश्च पूर्वादिक्रमाद्देव्यः प्रकीर्तिताः ।
अथवा ज्येष्ठयोपेतास्सप्त मातर ईरिताः ॥

देहली पेषणी चुल्ली खण्डनोद्खली तथा ।
मुसली मुद्गरी देवी वर्धमानी च वा मताः ॥ 25

चतुर्द्विहस्ता इष्टाश्चाः पञ्चहस्तास्तु वा मताः ।
वृषो गणाधिपः स्कन्दो महाशास्ता धनेश्वरः ॥

वीरश्च क्षेत्रपालश्च भास्करः पूर्वतो दिशि ।
नैर्ऋते वाग्निदेशे वा विघ्नेशं संप्रकल्पयेत् ॥

इन्द्रादीन्वा तदस्त्राणि कल्पयेत् पूर्वतो दिशि ।
निर्माल्यधारिणीं देवीमशानीमीशगोचरे ॥

पूर्वोक्तपरिवारान्वा कल्पयेद्देशिकोत्तमाः ।
महापीठे विशेषेण सर्वाश्चाप्सरसः स्थिताः ॥

देव्या मानं त्रिधा प्रोक्तं शिवलिङ्गानुरूपतः ।
पूजांशसदृशं वाथ द्विगुणं त्रिगुणं तु वा ॥ 30



चतुष्पञ्चगुणं वापि पूजांशोच्चत्रिपादकम् ।
अर्धं तदन्तरेऽष्टांशे नवमानं च वा भवेत् ॥

पूजांशोच्चं चतुर्विंशच्छतं वाथ विभज्य च ।
भ्रूदृग्घ्राणास्यकर्णान्तं बाहुकक्षस्तनान्तकम् ॥

लिङ्गमानवशाद्देवीमानं निष्कलसंज्ञके ।
प्रतिमामानतस्तस्या मानमेवं समीरितम् ॥

स्वयंप्रधाना देवी चेत् स्वधामादिप्रमाणजा ।
तत्र पूर्ववदेव स्यादथ मानाङ्गुलेन वा ॥

मात्राङ्गुले गृहार्चायां यवैर्वा परिकल्पयेत् ।
ततश्चैवं प्रकर्तव्या देवी प्रोक्तप्रमाणतः ॥ 35

चतुर्भुजा त्रिणेत्रा च सुप्रसन्नैकवक्त्रका ।
दुकूलवसना देवी करण्डमकुटान्विता ॥

वरदाभयसंयुक्ता पाशाङ्कुशकरान्विता ।
द्विभुजा वा द्विनेत्रा वा प्रलम्बितकरान्विता ॥

पद्महस्तातिशान्ता च सा देवी कनकप्रभा ।
शुकोत्पलकरा वापि शूलपाशकरापि वै ॥

यथेष्टाश्चापि वा शङ्खचक्रहस्ता तु षड्भुजा ।
दंष्ट्राकरालवदना पञ्चास्या दशदोर्युता ॥

देवोत्कास्त्रासना वापि देवालिङ्गनतत्परा ।
देवोरुसंस्थिता वापि स्थानकासनसंयुता ॥ 40

प्रलम्बवामपादा वा लम्बितापरपादिका ।
देवेन सहिता वापि केवला वा प्रकीर्तिता ॥

श्यामा श्वेताथवा रक्ता साधकेच्छानुरूपतः ।
श्रव्याकारयुता वापि द्विभङ्गसहिताथवा ॥

नासामालम्बयेत्सूत्रं दक्षिणस्थितपात्तले ।
गुल्फमध्ये स्थितं सूत्रं शिवसूत्रमिति स्मृतम् ॥

तत्सूत्राद्वामभागस्थस्तनमध्यं गुणाङ्गुलम् ।
तत्सूत्रं नाभिमध्यं यदेकाङ्गुलमिति स्मृतम् ॥

सूत्रयोरन्तरं वेदमात्रमित्यभिधीयते ।
जानुसूत्रान्तरं प्रोक्तं गुणाङ्गुलमिति द्विजाः ॥ 45

द्वयोरङ्गुष्ठयोर्मध्यं सार्धविश्वाङ्गुलं मतम् ।
तत्त्रिभागैकभागं तु पार्ष्ण्योरन्तरकं स्मृतम् ॥

कटकाग्रस्य चोत्सेधःस्तनाक्षस्य समो भवेत् ।
नाभेस्तु मणिबन्धः स्यात् सार्धविश्वाङ्गुलो द्विजाः ॥

पार्श्वमध्यमबाह्वोश्च मध्यमं पर्वताङ्गुलम् ।
प्रलम्बितकरस्याप्रादूर्ध्वं तु द्विमात्रकम् ॥

जानोस्तु मणिबन्धाच्च मध्यमं चतुरङ्गुलम् ।
पार्श्वमध्यमबाह्वोश्च मध्यमं तु षडङ्गुलम् ॥

दृष्टान्तमात्रमेतत्स्यात् सूत्रे तु नियमो न हि ।
स्वतन्त्रे द्विविधं देव्या मानं शास्त्रे प्रचोदितम् ॥ 50

मूलदेव्याः प्रमाणं तु पूर्वमुक्तं द्विजोत्तमाः ।
उत्सवाद्यङ्गदेवीनां मानं यन्मूलबेरजम् ॥

लिङ्गमानवशात् प्रोक्तं मूलदेवीवशात्तथा ।
अङ्गेषु मानं संग्राह्यं जानूरुसममेव वा ॥

एवं देवी प्रकर्तव्या तस्याः संज्ञा द्विधा मता ।
मनोन्मनीति गौरीति लक्ष्मभेदस्तु नानयोः ॥

मूर्तिस्सादाशिवी यत्र कल्प्यते तत्र कल्प्यताम् ।
तदा मनोन्मनीसंज्ञां लभते विप्रसत्तमाः ॥

नृत्तमूर्त्यादिभेदेषु गौर्याद्याख्यां समश्नुते ।
कृत्वा सलक्षणां देवीं मन्त्रैस्संस्थापयेत्ततः ॥ 55

सान्तरेफमहामायाबिन्दुनादसमन्विता ।
मनोन्मन्या मनुश्चायं ह्रस्वाने खान्तयुग्यदि ॥

गौरीमन्त्र इति प्रोक्तः सविसर्गो तु वा मतौ।
वान्तरेफमहामायाविष्वंशाभ्यां युतो मनुः॥

अष्टवर्गतृतीयं तु चतुर्थस्वरसंयुतम्।
बिन्दुनादशिखामात्रं देवीबीजमिदं तु वा॥

ऐकारः क्लींसमायुक्तः सौकारो बिन्दुनादयुक्।
मन्त्रोऽयं हंससंयुक्तः श्रीबीजं वा मनुर्भवेत्॥

एवं चतुर्मनुर्देव्यास्सनातन इति स्मृतः।
एवं मूलमनुः प्रोक्तस्तस्मिन् ब्रह्माङ्गकल्पना॥ 60

हृत्पुटौ जातिमूलौ तु मूर्तिविद्याम्नू स्मृतौ।
आदिशक्तिमनुर्वापि मूलमन्त्र इति स्मृतः॥

एवं मन्त्रस्समादिष्टः प्रतिष्ठा तत उच्यते।
कालश्च पूर्ववद्ग्राह्यस्त्वङ्कुरार्पणमेव च॥

मण्टपे स्थण्डिले पूर्वमुखां संस्थाप्य विन्यसेत्।
तत्पीठे मध्यमे हैमं पूर्वतश्चेन्द्रनीलकम्॥

वैडूर्यं च प्रवालं च मुक्तावज्रं तथैव च।
पुष्परागं च गोमेदं तथा मरतकं द्विजाः॥

हृदा वामादिमन्त्रैश्च हैमं सर्वत्र वा मतम्।
अक्षिमोक्षं तु सौवर्णनखविन्यासमाचरेत्॥ 65

तर्पणं मधुपूर्वैस्तु प्रच्छन्नपटवेशनम्।
गोद्विजालोकनं धान्यमल्लानां चैव पूर्ववत्॥

आचार्यशिल्पिपूजा च मृदाद्यैर्वेरशोधनम्।
ग्रामप्रदक्षिणं कृत्वा जले चैवाधिवासयेत्॥

परितः कलशांस्तस्य न्यसेद्वामाद्यधिष्ठितान्।
प्रासादस्य चतुर्दिक्षु ब्रह्मांशेऽथ मण्टपाः॥

योन्याभनवपञ्चैः श्रक्संख्याकुण्डकल्पनम्।
तत्सौम्ये कल्पयेत् सम्यक् स्नानवेदीं च पूर्ववत्॥

तक्षकोद्वासनं विप्रभुक्तिर्गोमयलेपनम्।
पुण्योदसेचनं वास्तुदेवतानां च पूजनम्॥ 70

होमं च स्थण्डिले वेद्यां पूर्ववच्छयने नयेत्।
जलादानीय तां देवीं स्नपनं पूर्ववन्नयेत्॥

गन्धपुष्पादिनाभ्यर्च्य कौतुकं बन्धयेद्बुधः।
शयने शाययेद्देवीं प्राङ्मस्तकसमन्विताम्॥

रक्तवस्त्रेण संवेष्ट्य गन्धपुष्पादिना यजेत्।
देव्याः शिरःप्रदेशे तु घटं प्राधानिकं न्यसेत्॥

लक्षणोदितरूपं तद्ध्यात्वा गन्धादिनार्चयेत्।
परितोऽष्टौ घटान्न्यस्त्वा वामादिभिरधिष्ठितान्॥

वस्त्रहेमादिसंयुक्तान् घटान् सर्वांश्च संगतान्।
आत्मविद्याशिवाख्यं च जानुकण्ठशिरोऽवधि॥ 75

मायां सदेशशक्त्यन्तव्यापनीं विन्यसेद्गुरुः।
क्रिया ज्ञानं तथेच्छा च त्रितयाधीश्वरी मता॥

धारिका दीप्तिरत्युग्रा ज्योत्स्ना चेता बलोत्कटा।
धात्री विभ्वीति मूर्तीशीयुक्ता मूर्तीस्ततो न्यसेत्॥

पञ्चमूर्त्यात्मके न्यासे वामाद्या मूर्तिपा मताः।
गन्धपुष्पादिभिः पश्चान्नैवेद्यान्तैः क्रमाद्यजेत्॥

मूर्तिमन्त्रं च ब्रह्माङ्गं मूलदेवीमनुं न्यसेत्।
गुरुर्मूर्तिधरैस्सार्धं होमकर्म समारभेत्॥

पूर्वोक्तलक्षणोपेतस्त्वादिशैवकुलोद्भवः।
वेदपाठश्चतुर्दिक्षु कोणे मन्त्रजपो भवेत्॥ 80

संस्कृत्य कुण्डं वह्निं च तर्पयेत्समिदादिभिः।
समिद्घृतान्नलाजैश्च तिलैस्सर्षपकैर्यवैः॥

पलाशोदुम्बरप्लक्षवटाः पूर्वादिदिक्षु च।
शमीखदिरमायूरश्रीवृक्षा वह्निकोणतः॥



पलाशस्तु प्रधानेऽपि स च सर्वत्र वा मतः।
सहस्रं वा तदर्धं वा शतमष्टोत्तरं तु वा॥

गुरुर्मूलेन जुहुयात् तत्समं वा तदर्धकम्।
मूर्तिपाहुतिरुद्दिष्टा ब्रह्माङ्गैस्तद्दिक्षु च॥

मूर्तिमूर्तीश्वरीश्चैव तत्तत्कुण्डेषु तर्पयेत्।
सर्वैर्द्रव्यैस्समोपेतं प्रधाने तर्पयेद्गुरुः॥ 85

शान्त्यम्भःप्रोक्षणं स्वस्वमन्त्राणां जपमाचरेत्।
दर्भैस्संस्पर्शनं चैव प्रतिभागं समाचरेत्॥

ततः प्रभाते शुद्धस्तु मूर्तिपैस्सह देशिकः।
उत्थाप्य देवीं कुम्भांश्च प्राग्वद्वह्निं च तर्पयेत्॥

दत्वा पूर्णाहुतिं पश्चात् प्रविशेद्भवनं ततः।
मानुषे दैविके वापि प्राग्वत् संस्कृत्य विन्यसेत्॥

कशिलां पूर्वमन्त्रेण रत्नहेमादिगर्भिताम्।
प्राग्वद्धाम्नीश्वरीं नीत्वा मूलमुच्चार्य विन्यसेत्॥

समुहूर्ते सुलग्ने तु मन्त्रन्यासं च कारयेत्।
चला चेत् स्नानवेद्यां तु मन्त्रन्यासं समाचरेत्॥ 90

देव्यग्रे तु घटान्न्यस्य कुम्भाद्बीजं तु तद्धृदि।
विन्यसेदनुकुम्भेभ्यः पीठस्य परितो मनून्॥

तत्त्वमूर्त्यादिविन्यासं पूर्ववत् कारयेत्ततः।
तत्तत्कुम्भोदकैश्चैव तत्तद्देशेऽभिषेचयेत्॥

स्नपनं कारयेदन्ते नैवेद्यं चोत्सवं गुरुः।
स्तुत्वानेकविधैःस्तोत्रैरमुं श्लोकं पठेत्ततः॥

यावच्चन्द्रश्च सूर्यश्च यावत्तिष्ठति मेदिनी।
तावदत्र त्वया देवि स्थातव्यमिह मन्दिरे॥

संपूज्य देशिकादींश्च दक्षिणां दापयेत्ततः।
उत्तमादिविभिन्नां तु लिङ्गस्थापनचोदिताम्॥ 95

ततः कल्याणकर्मास्याश्चतुर्थे कर्मवित्ततः।
देव्याःस्वयं प्रधानायास्सहजायाश्च वर्जयेत्॥

कर्म वैवाहिकं विप्राः प्रतिष्ठैवं समीरिता।
इत्थं यः कुरुते मर्त्यस्स पुण्यां गतिमाप्नुयात्॥

एवं यः कारयेन्मर्त्यः प्रतिष्ठां भावनायुतः।
भुक्त्वेह भोगान् स्वस्येष्टान् सोऽन्ते यायाच्छिवं पदम्॥

पित्रोर्दिवि च संस्थाप्य कुलानामेकविंशतिम्।
शृणुध्वमथ विप्रेन्द्रा देव्या नित्यार्चनादिकम्॥

शौचमाचमनं स्नानं सन्ध्योपासनतर्पणे।
प्रागुक्तविधिना कृत्वा प्रविशेदालयं प्रति॥ 100

प्रक्षालिताङ्घ्रिहस्तस्तु समाचम्य विधानतः।
सकलीकृतदेहस्तु सामान्यार्घ्यं प्रकल्प्य च॥

द्वारं तदम्भसा प्रोक्ष्य पूजयेद्द्वारनायिकाः।
द्वारस्य पार्श्वयोश्चैव शङ्खपद्मनिधी तथा॥

द्वारपालौ तु कर्तव्यौ खड्गखेटकहस्तकौ।
चूडामकुटसंयुक्तौ रत्नश्यामौ विभीषणौ॥

सर्वाभरणसंपन्नौ सर्वरत्नविभूषितौ।
ऊर्ध्वोदुम्बरमध्यस्थवाणीमभ्यर्च्य शाखयोः॥

गङ्गां च यमुनामिष्ट्वा देव्यक्षं देहलीगतम्।
अन्यथा वा विशालाक्षीं जटिलामूर्ध्वगां यजेत्॥ 105

समृद्धिं च धृतिं दक्षे वामशाखागतां यजेत्।
सरस्वतीं च गङ्गां च शुक्लवर्णनिभे मते॥

अन्याश्च श्यामलास्सर्वास्सर्वाभरणभूषिताः।
खड्गखेटकधारिण्यो द्विभुजा वा चतुर्भुजाः॥

देवोक्तद्वारपालान्वा विमलं च सुबाहुकम्।
कवाटयोस्समभ्यर्च्य प्रविशेद्दक्षवामयोः॥

वास्तोष्पतिं च संपूज्य स्वासनस्थ उदङ्मुखः।
शक्तिस्थं स्वं समालोक्य भूतशुद्धिं च पूर्ववत्॥

सुधासंप्लावनं चात्मावाहनं चामृतीकृतम्।
करन्यासं च तैर्मन्त्रैर्देहन्यासं च कारयेत्॥ 110

अष्टत्रिंशत्कलान्यासं प्रणवेन समन्वितम्।
पञ्चमूर्त्यास्ययुग्देव्याः पूजायां संप्रकल्पयेत् ॥

एकत्रिंशत्कलान्यासमेकास्ये परिकल्पयेत्।
शशिन्यादय एवोक्ताः केवलास्तु कला इति ॥

अथवा शिवमन्त्रैस्तु शैवमापाद्य विग्रहम्।
देवीस्कन्दगणेशादीन् सर्वान् संपूजयेत्तु वा ॥

सकलीकृतदेहस्सन्नन्तर्यागं समाचरेत्।
हृदयेऽर्चाविधानं तु नाभौ होमं प्रकल्पयेत् ॥

ललाटे चेश्वरीं ध्यायेद्वरदां सर्वतोमुखीम्।
स्थानशुद्धिं ततः कृत्वा विशेषार्घ्यं च कारयेत्॥ 115

गन्धपुष्पाक्षतोपेतं तेन द्रव्यगणं हृदा।
संशोध्यात्मानमभ्यर्च्य मन्त्रशुद्धिं समाचरेत्॥

बेरशुद्धिं ततः कुर्यात् पूजां पर्युषितामपि।
गणाम्बिकायै विद्महे महातपायै धीमहि ॥

इत्युक्त्वादौ तदन्ते तु तन्नो देवी प्रचोदयात्।
इति मन्त्रं समुच्चार्य समभ्यर्च्य निवेदयेत् ॥

देव्यै निर्माल्यधारिण्यै त्यजेद्वा पूजकोत्तमः।
देव्यस्त्रमुच्चरन्मन्त्री बेरशुद्धिं विधाय च ॥

बेरं चेल्लोहजं कुर्यात् स्नानं पर्वणि पर्वणि ।
सुधाचित्रादिकं चेत्तु कर्मार्चाशुद्धिरिष्यते ॥ 120

अथवाऽस्त्राणुनाऽल्पतालवृन्तजवायुना ।
तत्रैवाम्लानमाला स्यादनिर्वाणप्रदीपकम् ॥

प्रत्यहं त्वर्चनं नेष्टं किन्त्वेवं वत्सरे मतम्।
अथवोपलमूर्तिश्चेत् क्षालनं तत्र कीर्त्यते ॥

कल्पयेदासनं मध्ये शक्तिमाधाररूपिणीम्।
अनन्तं धर्मपूर्वांश्च दिक्ष्वनन्तादिसंहतिम् ॥

ऊर्ध्वाधश्छदने पद्मकर्णिके शक्तिमण्डलम्।
वामाद्यमण्डलानीकं क्रियेच्छाज्ञानशक्तिभिः ॥

तो देव्यासनायेति पूजयेदनुपूर्वशः।
मूर्तिं तद्ब्रह्मभिः कृत्वा तत्कलाः प्राग्वदाचरेत्॥ 125

विद्यादेहं च संपाद्य पूजाबेरस्वरूपकम्।
प्रणवात्तत्र देवेशीमाविष्कुर्यात् प्रसादतः ॥

हृदयानुगतेनैव पुष्पपूरितसत्करः।
आवाह्य मूलमन्त्रेण देव्यास्संस्थापयेद्धृदा ॥

सन्निधाननिरोधे च हृदा कृत्वावकुण्ठनम्।
हृदादि न्यासतः कृत्वा महामुद्रां प्रदर्शयेत् ॥

अर्घ्यपात्रं समुत्क्षिप्य पादे पाद्यं हृदा नयेत्।
वक्त्रेणाचमनं दद्यादर्घ्यमीशानमन्त्रतः ॥

पाद्याद्यं पूर्ववद्वापि पृथक् कृत्वा निवेदयेत्।
गन्धपुष्पसमोपेतं धूपं दद्याद्धृदाणुना ॥ 130

पञ्चामृतादियुक्तं वा वियुक्तं स्नानमाचरेत्।
उन्मृज्य वाससा पश्चाद्वाससा परिवेष्टयेत्॥

गुह्येनाचमनं दद्याद्गन्धपुष्पं सधूपकम्।
दीपं मूलाणुना दत्वा नैवेद्यं विनिवेदयेत् ॥

आमन्त्रहविषोपेतं केवलं वा द्विजोत्तमाः।
पूजयेदावृतिं पश्चाद् हृदयं वह्निगोचरे ॥

शार्वेशिरश्शिखां रक्षोदिशि वायौ तनुच्छदम्।
अस्त्रं दिक्ष्वथ संपूज्य वामाद्या वाथ पूर्वतः ॥

गणविघ्नेशलोकेशतदस्त्रान् परितो यजेत्।
एकद्वित्रिचतुर्भिर्वावरणैस्तां समर्चयेत् ॥ 35

पुनर्धूपं च दीपं च मन्त्रगानाद्यमेव च।
नैवेद्यं बलिहोमांश्च कृत्वा नित्योत्सवं नयेत् ॥

देवी तदर्थं कर्तव्या ह्येकवक्त्रा चतुर्भुजा।
वरदाभयहस्ता च शङ्खचक्रकरापरा ॥

पद्मासनस्था तस्यां तु यजेद्देवीं मनोन्मनीम्।
पुष्पान्नाक्षतलिङ्गेषु मेधां प्रज्ञामुषां यजेत् ॥



पूर्वोक्तविधिना कृत्वा प्रासादस्य प्रदक्षिणम्।
पादुकार्चनयुक्तं वा प्रविशेदालयं प्रति ॥

नित्योत्सवाय बेराणि कल्पितानि बहूनि चेत्।
तदर्थं कल्पयेत्तेषु यथेष्टं बेरमुत्तमम ॥ 140

एककालं द्विकालं वा त्रिचतुष्पञ्चकालकम्।
षट्सप्तवसुकालं वा सर्वदा त्वर्चयेच्छिवाम् ॥

नित्योत्सवस्समादिष्टस्सर्वाभीष्टफलप्रदः।
उत्सवं स्नपनं चैव दमनारोहणक्रियाम् ॥

पवित्रारोहणं सम्यक् कृत्तिकादीपमेव च।
संवत्सरादिखेलां च वसन्ताख्यं तदुत्सवम् ॥

मासोत्स तथा मासे नवनैवेद्यकं तथा।
विशेषात् पूरकर्मापि प्रायश्चित्तं द्विजोत्तमाः ॥

जीर्णानामुद्धृतिं चान्यत् पूर्ववत् परिकल्पयेत्।
किं तूत्सवे ध्वजे सिंहं वृषभं वा समालिखेत् ॥ 145

पूर्वफल्गुनीनक्षत्रे तीर्थकर्म विशेषतः।
शिवोत्सवेऽपि देव्यास्तु प्रत्यहं चोत्सवो मतः ॥

ध्वजहोमबलिं हित्वा केवलं यानमेव च।
चक्राख्यं वा त्रिशूलं वा देव्यस्त्रं परिगृह्यताम् ॥

उत्सवप्रतिमा कार्या पूर्वलक्षणलक्षिता।
कृतकौतुकदेव्यास्तु तद्ग्रामान्निर्गमो न हि ॥

यत्रैव बलिदानं स्यात् तत्रावश्यं हि यानकम्।
अन्यत्रापि च यानं वा धाम्नि सर्वं तु वा मतम् ॥

एकादिसाल्युक्तं चेद्बहिः श्रेष्ठं प्रकीर्तितम्।
सर्वदेवेषु सामान्यं विधानमिदमग्रजाः ॥ 150

धाममूर्धेष्टकास्तूपिस्थापनं पूर्ववन्नयेत्।
दिग्देवमूर्तिसंयुक्तं मध्ये कुम्भसमन्वितम् ॥

धामसंस्थापनं कुर्यात् प्रागुक्तविधिना सह।
अस्याः प्रतिष्ठा सर्वत्र बालस्थानान्विता न वा ॥

देव्यनुग्रहतस्सार्वभौमत्वं नृपतेर्भवेत्।
तस्माद्देव्यग्रतः कुर्यात् त्वभिषेकं नृपस्य तु ॥

एवं सम्यक् समाख्यातं देव्यास्संस्थापनादिकम् ॥

इति उत्तरकामिकाख्ये महातन्त्रे देवीस्थापनविधिः चतुश्चत्वारिंशत्तमः पटलः ॥

—o—

## विघ्नेशप्रतिष्ठाविधिः ॥

विघ्नेशस्थापनं वक्ष्ये लक्षणादिपुरस्सरम्।
पुरादावष्टदिक्ष्वन्ते वान्तराले तदालयः ॥

शिवधाम्न्यष्टदिक्ष्विष्टस्तदेशो मण्टपादिषु।
चैत्यवृक्षादिदेशेषु तन्मूले वाखिलालये ॥

आपणे वाथ रथ्यायां गृहे वा यत्र कुत्रचित्।
यथेष्टदिशि वक्त्रं स्याद्विघ्नेशस्य हि कीर्तितम् ॥

अथैकादित्रयस्त्रिंशद्धस्तविस्तारसंयुतः।
एकादिनवभूम्यन्तभूमिभागसमन्वितः ॥

विशेषाद्गजपृष्ठाभस्त्वन्यरूपयुतोऽथवा।
दिक्षु विघ्नेश्वरोपेतः कोणे मूषिकसंयुतः ॥ 5

गणो वा स्कन्दरूपादयस्त्वथमालय ईरितः।
पूर्ववत्कृतसद्गर्भः प्रथमेष्टकयान्वितः ॥

दिग्देवमूर्तिसंयुक्तो मध्यकुम्भयुतो न वा।
धाम्नस्संस्थापनेनापि युक्तः प्रागुक्तवर्त्मना ॥

प्राकारमण्टपोपेतो मण्टपाद्यैश्च मण्डितः।
मण्टपो वाल्यस्तस्य कूटाद्याकार एव वा ॥

परितः परिवारोक्तः प्रसंगात् स च कथ्यते।
विश्वरूपं विशालाक्षमक्षयं मदविभ्रमम् ॥

उन्मत्तं ललितं भीमं तीक्ष्णदंष्ट्रं यथाक्रमम्।
अस्याष्टमूर्तीशान्वाष्टपीठानिन्द्राद्यधिष्ठितान् ॥ 10

कल्पयेत् पूर्ववत् सम्यग् द्वाराग्रे मूषिकं च वै।
द्वारपौ कल्पयेद्द्वारि विकटं भीममेव च ॥

कुम्भोदरं तथैशान्यां न्यसेन्निर्माल्यधारिणम्।
आमोदश्च प्रमोदश्च सुमुखो दुर्मुखस्तथा ॥

अविघ्नो विघ्नराजश्च भक्ष्याशी पद्महस्तकः।
एतेऽष्टमूर्तिपाः ख्यातास्त्वन्यथा च निगद्यते ॥

हस्तिवक्त्रः प्रलम्बोष्ठो विघ्नेशश्च गणाधिपः।
विनायकैकदन्तौ च भक्ष्यप्रियोऽहिमेखलः ॥

विघ्नेश्वरनिभा एते विघ्नेशस्याष्टमूर्तिपाः।
द्वारस्थौ द्वारपौ कार्यौ भूतरूपौ द्विबाहुकौ ॥ 15

हलपद्महस्तादयौ दक्षिणे दण्डधारकौ।
उग्रदंष्ट्रान्वितौ सिंहकन्धरस्थैकपादकौ ॥

रक्तवर्णनिभौ रौद्रौ द्वारपौ विकृताननौ।
धूम्रवर्णस्तथा चाल् रक्तनेत्रस्सुदंष्ट्रवान् ॥

तीक्ष्णपुच्छश्चतुष्पादः किङ्किणीदामभूषितः।
कुम्भोदरश्चतुर्हस्तष्टङ्कशूलासिदण्डधृक् ॥

रक्तवर्णो महादीप्तो भद्रपीठोपरि स्थितः।
श्वेतवर्णा बृहत्काया उग्रास्थिराम्बरान्विताः ॥

पाशाङ्कुशोरुसंसिक्तस्वदन्तयुतबाहवः।
परिवारा इति ख्याता गणेशाभिमुखस्थिताः ॥ 20

परिवारान्तरे सर्वे क्षेत्रपाः परिकीर्तिताः।
बलिपीठं महापीठं पूर्ववत् परिकल्पयेत् ॥

पीठस्याष्टदलेषूक्ता आमोदाद्यष्टमूर्तयः।
भूतेशः कर्णिकायां च लोकपालाणि बाह्यतः ॥

लक्षणं तस्य संक्षेपाच्छृणुध्वं विप्रसत्तमाः।
द्रव्यैश्शिलादिभिः कुर्यात् पञ्चतालोत्तमेन तु ॥

पञ्चाशद्भाजिते गर्भे पञ्चांशादेकवृद्धितः।
त्रिंशद्भागावसानान्तं गर्भमानमुदाहृतम् ॥

स्तम्भद्वारोदयाद्वेयं मानमप्यत्र भाव्यताम्।
प्रतिमालक्षणप्रोक्तमानं लिङ्गादिजं तु वा ॥ 25

केशादिपादपर्यन्तं चतुष्षष्ट्यंशतो भजेत्।
उष्णीषमेकमात्रेण तत्केशं द्व्यङ्गुलेन तु ॥

अर्काङ्गुलेन वक्त्रं स्याद्द्वाभ्यां कण्ठ इहेरितः।
ततो हृदयपर्यन्तं रुद्राङ्गुलमिति स्मृतम् ॥

अर्काङ्गुलं तु नाभ्यन्तं मेढ्रान्तं कौशिकाङ्गुलम्।
तथैव तस्माज्जान्वन्तं जान्वायामं गुणाङ्गुलम् ॥

जङ्घा चोरुसमा ज्ञेया तलोत्सेधं द्विमात्रकम्।
केशान्तादक्षिसूत्रान्तं चतुरङ्गुलमुच्यते ॥



दन्तमूलात्तु जान्वन्तं गजहस्तस्य दैर्घ्यकम्।
दन्तायामाच्चतुर्मात्रं मूलनाहं तथैव च ॥ 30

दक्षिणेऽदक्षिणे वापि दन्तमेकं प्रकल्पयेत्।
मस्तके कुम्भविस्तारं प्रत्येकं तु गुणाङ्गुलम् ॥

नेत्रं तु कर्णमूलान्तं चतुरङ्गुलमुच्यते।
कर्णौ च दशमात्रौ स्यात् तत्तारं नन्दमानकम् ॥

कक्षयोरन्तरं पूर्वं प्रोक्तं पञ्चदशाङ्गुलम्।
कक्षात्तु चोर्ध्वबाह्वन्तं षडङ्गुलमिति स्मृतम् ॥

मध्यकायस्य विस्तारं मन्वङ्गुलमुदाहृतम्।
हृदयान्नाभिसीमान्तं दशाङ्गुलमिहोच्यते ॥

नाभेरधस्तान्मेढ्रान्तं वसवङ्गुलमुदाहृतम्।
अष्टाङ्गुलं द्वयोरूर्वोर्जानुनी चाङ्गुलत्रये ॥ 35

जङ्घे द्वे तलपर्यन्ते वस्वङ्गुलविनिर्मिते।
गजवक्त्रो गणाधीशो भूतरूपो महोदरः ॥

नागयज्ञोपवीतस्तु घनपिण्डोरुजानुकः।
नीलनीरुद्धाभस्तु चतुर्दोर्दण्डमण्डितः ॥

अवामवामावर्तैभहस्तः पद्मासनस्थितः।
स्वदन्तं परशुं कुर्यात् स्वदक्षिणकरद्वये ॥

लड्डुकं चाक्षमालां च वामपाणावथोत्पलम्।
रक्तवस्त्रधरं वाथ श्यामाभं कनकप्रभम् ॥

पीतकञ्चुकसंछन्नं किरीटमकुटोज्ज्वलम्।
शुक्लयज्ञोपवीतं च सर्वाभरणभूषितम् ॥ 40

स्वशृङ्गं चाङ्कुशं दक्षे वामे पाशं च लड्डुकम्।
स्थानकं चासनं वाथ गणेशं कारयेत्ततः ॥

त्रिभिर्विराजितं नेत्रैर्नेत्राभ्यामथवा द्विजाः।
पद्मस्थं वापि पीठस्थं मूषिकस्थमथापि वा ॥

इष्टासनस्थितो वापि प्रभादिपरिमण्डितः।
एवं स्यात् केवलो विघ्नराजश्शक्त्यान्वितोऽथवा ॥

गणेशो भारतीश्रीभ्यां वामेऽवामे युतोऽथवा।
शक्त्यैकया युतो देवो यदि तल्लक्ष्म कथ्यते ॥

आसीनमासने रत्नमकुटादिविभूषितम्।
श्यामवर्णां तथा शक्तिं धारयन्तं दिगम्बरम् ॥ 45

उत्सङ्गे निहितां देवीं सर्वाभरणभूषिताम्।
दिगम्बरां सुवदनां भुजद्वयसमन्विताम् ॥

विघ्नेश्वरीति विख्यातां सर्वावयवसुन्दरीम्।
पाशहस्तां तथा गुह्यं दक्षिणेन करेण तु ॥

स्पृशन्तीं देवमप्येवं चिन्तयेन्मन्त्रनायकम्।
चतुर्भुजं त्रिणेत्रं च पाशाङ्कुशधरं प्रभुम् ॥

इक्षुखण्डकरोपेतं वामेन देविगुह्यकम्।
स्पृशन्तं पुष्करेणापि खण्डमिश्रोस्तु हे द्विजाः ॥

एवं संपाद्य तन्मन्त्रैः प्रतिष्ठामारभेद्द्विजाः।
द्वितीयस्य तृतीयं यदाद्यस्वरसमन्वितम् ॥ 50

बिन्दुनादसमायुक्तं बीजं विघ्नेश्वरस्य तु।
त्रयोदशान्तसंपन्नमथवा परिकल्पयेत् ॥

कवर्गस्य तृतीयं तु वह्निमायासमन्वितम्।
हृल्लेखासंपुटोपेतं बीजं स्यात् त्र्यक्षरं द्विजाः ॥

श्रीवाग्बीजसमायुक्तमथवा परिकल्पयेत्।
पञ्चब्रह्मषडङ्गानि मूलमन्त्रवशात्कल्पयेत् ॥

वक्रतुण्डाय हुं वर्णैरुद्धरेत्तु षडक्षरम्।
नमःस्वाहावषट्कारहुंवौषड्भिर्हृदादयः ॥

फट्कारेण च संयुक्ताः प्रोक्ताः स्युर्मुनिपुङ्गवाः।
द्वितीयस्य तृतीयं तु षष्ठवर्गान्तमेव च ॥ 55

सप्तमस्य तृतीयं तु तद्वर्गस्य चतुर्थयुक्।
तस्य द्वितीयमाद्यं च सचतुर्दुरु ंकम् ॥

बिन्दुनादसमायुक्तं बीजमेतद्दशाक्षरम्।
द्वितीयस्य तृतीयं तु ब्रह्माण्यङ्गानि चोद्धरेत् ॥

विरिशब्दं त्रिरुच्चार्य ततो गणपतिं पुनः।
वरदं तु समुच्चार्य वरदद्वितयं वदेत्॥

सर्वलोकवशं पश्चादानयेति पदं ततः।
स्वाहापदं ततस्त्वियं मन्त्रः शक्त्यन्वितस्य हि॥

ओंकारादिपदैर्मन्त्रैर्हृदयादय ईरिताः।
हृल्लेखासंपुटो मन्त्रस्त्वथ कारणकार्ययुक्॥ 60

गणेशादिपदोपेतस्त्वेष प्राधानिको मनुः।
इक्षूदधिस्ततः स्वर्णद्वीपं कल्पद्रुमस्ततः॥

सिंहासनं च मन्त्राः स्युः शक्तिविघ्नेश्वरासने।
दक्षहस्तस्य मूलं तु नासाग्रे मूर्ध्नि विन्यसेत्॥

कुञ्चयेदग्रमेतस्य मुद्रैषा तु गणेश्वरी।
अपरा मूलमुद्राख्या मध्यमां तु प्रसारयेत्॥

अनामिकामथाकुञ्च्य तर्जनीमपि चानयेत्।
अङ्गुष्ठं शृङ्गवत्कृत्वा मुद्रैषा मूलसंज्ञिता॥

अनया मुद्रया सर्वं कर्म कुर्याद्गुरूत्तमः।
ततः प्रतिष्ठा कर्तव्या चाङ्कुरार्पणपूर्विका॥ 65

पूर्वोक्तकाले रत्नानि न्यसेत्पीठे च नैव वा।
पञ्च तत्संख्यहेम्नाथ हैमसूचिसमन्वितम्॥

पूर्वोदितप्रकारेण न्यसेदिन्द्रादि संस्मरन्।
कृत्वा पद्मस्य संघातं नेत्रमोक्षणमाचरेत्॥

मध्वाज्याभ्यां सहेमाभ्यां पात्रस्थाभ्यां हृदाणुना।
सुवर्णनखधान्यौघप्रच्छन्नपटकादिभिः॥

यदि देवीयुतो विघ्नः पृथक् तस्यां च कारयेत्।
वेरशुद्धिं ततः कृत्वा ग्रामादीनां प्रदक्षिणम्॥

तोयेऽधिवासयेद्देवं लम्बकूर्चयुतं हृदा।
परितोऽष्टौ न्यसेत् कुम्भानाशेशैरप्यधिष्ठितान्॥ 70

यागार्थं मण्टपं कुर्यात् [illegible]नाऽग्रे तस्य पार्श्वयोः।
यमाप्येन्दुषु वा पद्मनिभकुण्डादिमण्डितम्॥

कुण्डानि नवपञ्चैकसंख्यया कथितानि तु।
तानि वृत्तानि चाश्राणि दिगश्राणि मुनीश्वराः॥

प्रधानकुण्डं सर्वत्र वृत्तमेव प्रकीर्तितम्।
मण्टपं कल्पयित्वैवं प्रागुक्तेन च कर्मणा॥

उद्वास्य शिल्पिनं पश्चाद्द्विजान् संभोजयेत्ततः।
पुण्याहप्रोक्षणं कृत्वा वास्तुहोमं तु कारयेत्॥

भुवः परिग्रहं वापि प्रागुक्तविधिना नयेत्।
जलादानीय विघ्नेशं स्नानवेद्यां तु विन्यसेत्॥ 75

मण्टपे चोत्तरस्थे च स्नपनं प्राग्वदाचरेत्।
कौतुकं बन्धयित्वान्ते मन्त्रं सर्वात्मकं पठन्॥

संकल्प्य शयनं वेद्यां स्थण्डिलोर्ध्वेऽण्डजादिभिः।
वस्त्रैर्वा पञ्चभिश्शुद्धैस्तस्मिंस्तं शाययेद्धृदा॥

आवेष्ट्य रक्तवासोभ्यां कुम्भन्यासं समाचरेत्।
विनायकशिरोदेशे सूत्रकूर्चसमन्वितम्॥

कुम्भं सद्वस्त्रपनसचूताश्वत्थदलान्वितम्।
पञ्चरत्नोदकं वाथ हेममाषोदकं तु वा॥

बीजपूरफलाढ्यं परितोऽष्टौ घटान्न्यसेत्।
वस्त्रहेमादिसंयुक्तान् पूजयेद्गन्धपुष्पकैः॥ 80

सासनेन सदेहेन गणेशेनाप्यधिष्ठितम्।
कुम्भमिष्ट्वा तु पूर्वोक्तध्यानयुगन्धपुष्पकैः॥

परिवारघटेष्वेवं हस्तिवक्त्रादिकं न्यसेत्।
आमोदप्रमुखान्वापि नैवेद्यान्तैर्गुरूत्तमः॥

देवीद्वययुतं चेद्द्विपार्श्वयोर्वर्धनीद्वयम्।
सैका चेदुत्तरे न्यस्य तत्र तामर्चयेत् पुनः॥

शिवविद्यात्मतत्त्वानि सदेशान्तगतानि च।
न्यस्य गन्धादिभिश्चेष्ट्वा तदीशांश्च क्रमाद्यजेत्॥

गणेशात्मकतत्त्वेशं चतुर्थ्यन्तं नमोऽन्तकम्।
उक्त्वा तेनैव मार्गेण शिवविद्येश्वरान्न्यसेत्॥ 85



मूर्तिमूर्तीश्वरांश्चैव मूर्तयः पूर्ववन्मताः।
इन्द्राद्या हस्तिवक्त्राद्या आमोदाद्यास्तु वाधिपाः॥

पञ्चपक्षे तु मूर्तीशाः पञ्चाष्टस्यादितो मताः।
मूर्तिब्रह्मषडङ्गानि विद्यादेहं च मूलकम्॥

विन्यस्य गन्धपुष्पाद्यैरिष्ट्वा होमं समाचरेत्।
पूर्वोक्तभूषणोपेतश्शिवविप्रकुलोद्भवः॥

गुरुर्मूर्तिधरैस्सार्धं होमकर्म समाचरेत्।
वेदपाठश्चतुर्दिक्षु कोणे मूलजपो भवेत्॥

संस्कृत्य वह्निं कुण्डं च वह्निकार्योक्तमार्गतः।
दिक्षु तत्पुरुषादींश्च कोणेषु हृदयादणून्॥ 90

ईशं प्रधाने सर्वेश्च मूर्तिमूर्तीश्वरैर्युतम्।
आवाह्याभ्यर्च्य गन्धाद्यैर्वृन्दैरेभिश्च तर्पयेत्॥

समिद्घृतान्नलाजैश्च तिलापूपगुडैर्यवैः।
तत्त्वतत्त्वेशहोमं च मूर्तिमूर्तीश्वरैर्नयेत्॥

शान्त्यम्भःप्रोक्षणं स्वस्वमन्त्राणां च जपक्रियाम्।
दर्भसंस्पर्शनं चेत्थं प्रतिभागं समाचरेत्॥

ततः प्रभाते शुद्धस्तु मूर्तिपैस्सह देशिकः।
उद्धृत्य विघ्नराजानं कुम्भानग्निं च तर्पयेत्॥

प्रायश्चित्तनिमित्तं तु घोराहुतिशतं नयेत्।
दत्वा पूर्णाहुतिं पश्चात् प्रविशेद्भवनं गुरुः॥ 95

मानुषे दैविके वापि प्राग्वत् संस्कृत्य विन्यसेत्।
कशिलं पूर्वमन्त्रेण रत्नौषध्यादिगर्भिताम्॥

अथ ब्रह्मशिलोपेतं स्थापयेच्च गणाधिपम्।
प्राग्वन्न्यस्य गणेशानं मूलमन्त्रं समुच्चरन्॥

सुमुहूर्ते सुलग्ने तु मन्त्रन्यासं समाचरेत्।
चलं चेत् स्नपनवेद्यां मन्त्रन्यासो भवेद्द्विजाः॥

देवाग्रे तु घटान्न्यस्य कुम्भाद्बीजं तु तद्धृदि।
विन्यसेदन्यकुम्भेभ्यः पीठस्य परितो मनून्॥

तत्तत्कुम्भोदकैश्चैव तत्तद्देशेऽभिषेचयेत्।
तत्त्वमूर्त्यादिविन्यासं पूर्ववत् कारयेत्ततः॥ 100

स्नपनं कारयेदन्ते नैवेद्यं चोत्सवं नयेत्।
गणेशो भारतीश्रीभ्यां युतो यदि मुनीश्वराः॥

तदुक्तवत् तयोः कुर्यात् प्रतिष्ठां हि गुरूत्तमः।
विघ्नेश्वरीयुतश्चेद्धि तन्नाम्ना स्थापयेत्तु ताम्॥

विन्यसेत् कुम्भपार्श्वस्थकरकान्मन्त्रमुत्तमम्।
तासां हृदि विशेषेण ततः स्थापनमाचरेत्॥

विघ्नेशस्थापनं ह्येवं यः कुर्याद्बुद्धिमान् स चेत्।
आयुष्कामो लभेदायुर्धनार्थी चेद्धनानि च॥

विद्याकामोऽमलां विद्यां रतिकामो वरस्त्रियम्।
पुत्रान् सौभाग्यमारोग्यं यशो वीर्यं श्रियं शुभम्॥ 105

लभेत् परत्र मोक्षं च विघ्नेशस्थापनेन तु।
तस्यार्चनं च संक्षेपाच्छृणुध्वं मुनिपुङ्गवाः॥

उत्थाय प्रातरावश्यं शौचं स्नानं समाप्य च।
सन्ध्याया वन्दनं मन्त्रतर्पणं प्राग्वदेव तु॥

कृत्वालयं विशेत् पश्चान्निर्णिक्ताङ्घ्रिकरद्वयः।
आचान्तस्सकलीकृत्य सामान्यार्घ्यकरो गुरुः॥

द्वारं तदम्भसा प्रोक्ष्य विकटं भीममर्चयेत्।
देवोत्कान्वा सुवाहुं च विमलं तत्पयोर्यजेत्॥

प्रविश्य देहलीं देहल्यां दक्षस्यचरणेन तु।
वास्त्वीशं च समभ्यर्च्य स्वासनस्थ उदङ्मुखः॥ 110

संशोध्य शक्तयात्मानं रक्षयेद्ध्वंसितस्थितिः।
तदुद्भूतामृतेनार्द्रीकृतकायसमन्वितः॥

अस्त्रेण हस्तौ संशोध्य चन्दनेनापि चर्चितौ।
ईशाद्योरवामाजान् करजेषु तले दशम्॥

मूलं च हृच्छिरश्चूडावर्महेतीन्न्यसेत् क्रमात्।
ज्येष्ठादिषु कराग्रेषु पुनर्मूलं च भावयेत्॥

देहन्यासं च तन्मन्त्रैर्मूलब्रह्मान्वितैस्तु वा।
एकत्रिंशत्कलान्यासं देववत् परिकल्पयेत् ॥

आपाद्यैवं तनुं मन्त्री लिपिन्यासान्वितां न वा।
गणेशानवदात्मानं ध्यात्वान्तर्यजनं नयेत् ॥ 115

अथवा शिवमन्त्रैस्तु शैवीं कृत्वा निजां तनुम्।
इष्ट्वा हुत्वा गणेशानं ध्यात्वा हृन्नाभिबिन्दुषु ॥

स्थानशुद्धिं ततः कृत्वा विशेषार्घ्यं च कल्पयेत्।
गन्धपुष्पाक्षतोपेतं पूर्वद्रव्ययुतं न वा ॥

पाद्यमाचमनं तद्वदर्घ्यं केवलमेव वा।
संप्रोक्ष्यार्घ्यजलेनैव प्रत्येकं द्रव्यसंहतिम् ॥

हृदाभिमन्त्र्य स्वात्मानमिष्ट्वा सर्वात्मकं स्मरन्।
मन्त्रशुद्धिं ततः कृत्वा बेरशुद्धिं ततो नयेत् ॥

इष्ट्वा पर्युषितां पूजां वक्रतुण्डाय विद्महे।
इत्युक्त्वा हस्तिवक्त्राय धीमहीति पदं ततः ॥ 120

तन्नो दन्तिपदं पश्चात् पदमुक्त्वा प्रचोदयात्।
इत्युच्चरंस्ततोऽर्घ्येण सामान्यार्घ्येण वार्चयेत् ॥

हृदापनीय तां बाह्ये दद्यान्निर्माल्यधारिणे।
त्यजेद्वा बेरसंशुद्धिं कारयेदुक्तवर्त्मना ॥

लोहजं यदि तद्बेरं स्नानं पर्वणि पर्वणि।
चित्रादिकं चेत् कर्मार्चाशुद्धया शुद्धिर्मता द्विजाः ॥

मन्दानिलेनाम्बुलब्धतालवृन्तोत्थितेन वा।
कृत्वेत्यमात्मभूद्रव्यमन्त्रबिम्बविशोधनम् ॥

कल्पयेदासनं मध्ये प्रणवं धर्मसंमुखान्।
अधर्मादीनधश्चोर्ध्वंच्छदने पद्ममन्तरा ॥ 125

प्रणवाम्भसि संभूतं शीतकर्णिकया युतम्।
शक्त्यन्वितश्चेत्तत्प्रोक्तमार्गेणासनमाचरेत् ॥

ततो गणासनायेति पूजयेदनुपूर्वशः।
मूर्तिमावाह्य तां प्राग्वदेहं संकल्प्य मन्त्रकैः ॥

प्रणवात्तत्र विघ्नेशमाविष्कुर्यात् प्रसादतः।
हृदयानुगतेनैव पुष्पापूरितसत्करः ॥

निष्ठुरां सन्निधानाख्यां हृदा कृत्वावकुण्ठयेत्।
हृदाद्यणुभिरङ्गान्तैर्महामुद्रां प्रदर्शयेत् ॥

हृदा पाद्यं पदोर्दत्वा वक्त्रेणाचमनं नयेत्।
अर्घ्यमीशं स्मरन्दत्वा गन्धपुष्पं सधूपकम् ॥ 130

हृदा पञ्चामृताद्यं च वियुक्तं स्नापयेत्तु वा।
उन्मृज्य वाससा पश्चाद्वाससा परिधापयेत् ॥

वक्त्रेणाचमनं दत्वा चन्दनागरुकुंकुमान्।
पिष्ट्वा कर्पूरसंयुक्तान् केवलं चन्दनं तु वा ॥

दत्वा कृष्णागरूपेतं धूपं दद्यादुदृदाणुना।
लघुचन्दननिर्यासकर्पूरैर्धूपमेव वा ॥

सुरभीणि विचित्राणि सर्वर्तुप्रसवानि तु।
तत्क्षणप्रतिबुद्धानि प्राग्वत् पुष्पाणि दापयेत् ॥

तैलाज्यदीपितान्दीपान्दापयेद्धृदयाणुना।
नैवेद्यं दापयेत्पश्चान्मुद्गान्नादियुतं न वा ॥ 135

गन्धादीनां प्रमाणानि पश्चिमास्यार्चनोक्तवत्।
पूजयेदावृतिं पश्चाद्धूपदानावसानके ॥

अग्नौ च रक्षोवाय्वीशदिक्षु दिक्षु हृदाद्यणून्।
तद्बाह्ये हस्तिवक्त्रादीनामोदप्रमुखानथ ॥

इन्द्रादींश्च तदस्त्राणि तद्बाह्ये सम्यगर्चयेत्।
एकेन वा यजेद्द्वाभ्यां त्रिभिर्वावरणैर्गणम् ॥

पुनर्धूपं च दीपं च मन्त्रगानाद्यमेव च।
नैवेद्यबलिहोमांश्च कारयेत् पूर्ववर्त्मना ॥

पलाशसमिदाज्याम्ललाजान् पृथुकसंयुतान्।
मूलेन शतपञ्चाशद्दशसंख्येन वा गुरुः ॥ 140

मूलाद्दशांशसंख्यैस्तैरङ्गैर्होमं समाचरेत्।
नित्योत्सवं ततः कुर्याद्गणबेरेण वर्त्मना ॥



पूर्वोक्तमानयुक्तेन तस्मिन्नभ्यर्चयेद्गणम्।
पुष्पान्नाक्षतलिङ्गेषु गणाख्यं हेतिना यजेत् ॥

नित्योत्सवोऽयं कर्तव्यो बेरयुक्तोऽथवा न वा।
पूर्वोक्तविधिना कृत्वा प्रासादस्य प्रदक्षिणम् ॥

पादुकार्चनयुक्तं वा प्रविशेदालयं प्रति।
एककालं द्विकालं वा त्रिचतुष्पञ्चकालकम् ॥

षट्सप्तवसुकालं वा सर्वदा वार्चयेद्गणम्।
ज्ञात्वैवं पूजयेन्नित्यमर्चनाङ्गैर्गणेश्वरम् ॥ 145

नित्येज्यैवं समादिष्टा भुक्तिमुक्तिफलप्रदा।
विशेषयजनं कुर्याच्चतुर्थ्यामिष्टसिद्धये ॥

नानाभक्ष्यसमोपेतं स्नपनादिसमन्वितम्।
स्नपनं पूर्ववत् किं तु मध्यकुम्भे गणेश्वरम् ॥

आमोदाद्यादिका दिक्षु चत्वारः पञ्चकल्पने।
अष्टौ च नवसंख्ये स्युः पञ्चविंशतिसंख्यके ॥

लोकपा विश्वरूपाद्या वसुदिक्ष्वन्तरालके।
लोकपालान् वसूनाद्यानष्टकं वास्तु संस्थितौ ॥

पूर्वत्रपात्त्रयं पूज्यं स्वष्टकेषु त्रिषु क्रमात्।
एकोनपञ्चाशत्संख्यकलशे देवता मताः ॥ 160

गणसहस्रनामोक्तशताद्यास्तुशताष्टके।
अष्टाधिकसहस्रे तु सर्वदेवाः प्रकीर्तिताः ॥

अथ सर्वत्र विघ्नेशः पूज्यो वा मुनिपुङ्गवाः।
वाक्श्रीयुतो गणेशश्चेद्वर्धनीद्वितयं न्यसेत् ॥

शक्त्यैकया युतश्चेत्तु वर्धनीमुत्तरे न्यसेत्।
अनुक्तं स्नपने यत्तु प्राग्वदेव समाचरेत् ॥

उत्सवं दमनारोहं पवित्रारोहणक्रिया।
दीपावली वसन्तेज्या मासे मासोत्सवं तु वा ॥

नवनैवेद्यकर्मापि प्रायश्चित्तं विशेषतः।
जीर्णानामुद्धृतिं चान्यत् पूर्ववत् परिकल्पयेत् ॥ 155

किं तु तस्य ध्वजे मूषं वृषभं वा समालिखेत्।
शिवोत्सवेऽपि नित्यं तु विघ्नेशस्योत्सवं तु वा ॥

ध्वजहोमबलीन् हित्वा केवलं यानमेव च।
चक्राख्यं वा त्रिशूलाख्यं विघ्नेशाख्यं प्रगृह्यताम् ॥

उत्सवप्रतिमा कार्या पूर्वलक्षणलक्षिता।
उत्सवे तु बलिद्रव्यहोमद्रव्यादयोऽपि ये ॥

अत्रानुक्तास्तु ते सर्वे शिवस्योक्तवदीरिताः।
वश्योच्चाटनविद्वेषमारणानि च पौष्टिकम् ॥

शान्तिस्तम्भनपूर्वाणि मन्त्रेणानेन कारयेत्।
सर्वव्याधिसमुत्थो मन्त्रेणानेन शान्तयेत् ॥ 160

अस्य प्रतिष्ठा सर्वत्र बालस्थानान्विता न वा।
विघ्नेशं स्थापयेद्वादौ शिवधामप्रकल्पनात् ॥

इति उत्तरकामिकाख्ये महातन्त्रे विघ्नेशप्रतिष्ठाविधिः पञ्चचत्वारिंशत्तमः पटलः ॥

—o—

## नृत्तमूर्तिस्थापनविधिः ॥

नृत्तमूर्तिप्रतिष्ठां तु वक्ष्ये तल्लक्षणान्वितम् ।
चतुर्भुजस्त्रिणेत्रश्च संविकीर्णजटायुतः ॥

जटामकुटसंयुक्तो वक्रनागफणावृतः ।
पृष्ठगाः पार्श्वगास्तास्युः पञ्चाद्येकैकवृद्धितः ॥

त्रिंशत्संख्यावसानास्स्युर्जटास्तास्सान्तरालकाः ।
धुत्तूरारग्वधार्कादिपुष्पयुक्तास्सपिङ्गलाः ॥

कृताञ्जलिपुटोपेतजाह्नव्या दक्षिणस्थया ।
बालचन्द्रेण संयुक्तो वामपार्श्वस्थितेन च ॥

युक्तो वकुलमालाभिर्मुक्तादामोरगादिभिः ।
व्याघ्राजिनाम्बरो दीप्तस्सर्वाभरणभूषितः ॥ 5

वामदोर्मूलमालम्बिद्वीपिचर्माम्बरान्वितः ।
दिव्याम्बरान्वितो वापि मृगाजिनयुतोऽपि वा ॥

कल्पब्रह्मकपालेन नानापुष्पैरलंकृतः ।
धृतवाराहदन्ताग्रशार्दूलनखकच्छपैः ॥

शाङ्खिकैर्मणिभिः प्रोतमाल्या हृदि भूषितः ।
स्थितो दक्षिणपादेन वामेनोपरिवर्तिना ॥

कुञ्चितावर्तमानाङ्घ्रिःसुप्रसारिततत्करः ।
अम्बिकामुखबिम्बाब्जभ्रमरीकृतलोचनः ॥

आबद्धकिङ्किणीयुक्तस्तद्वन्नूपुरशोभितः ।
वामदक्षिणकर्णाद्यपत्रिकानक्रकुण्डलः ॥ 10

दक्षाभयकरस्थेन भुजङ्गेनोरुफणेन च ।
वामापरकरस्थेन वह्निना दक्षकेन तु ॥

डिण्डिमेन समायुक्त उपवीतेन संयुतः ।
गोक्षीरधवलप्रख्य आदित्याङ्गुलमङ्गयुक् ॥

नानासर्पसमायुक्तस्त्वपस्मारोपरि स्थितः ।
मूर्ध्नो ललाटदक्षस्थं नासादक्षपुटस्थितम् ॥

नाभेर्दक्षिणतो गुल्फे मध्ये सूत्रं प्रसारयेत् ।
ललाटमध्यसूत्रात्तु द्विमात्रमिति कीर्तितम् ॥

हिक्कासूत्रद्वयोर्मध्ये त्रिमात्रमिति कीर्तितम् ।
श्रोणीवामोरुसंस्पृष्टं तत्सूत्रमिह संमतम् ॥ 15

सूत्रगुल्फद्वयोर्मध्यमेकाङ्गुलमिति स्मृतम् ।
सूत्राद्धि नतजान्वन्तं भानुदिग्नन्दमात्रकम् ॥

तत्सूत्राद्वामपृष्ठान्तं सप्ताधिकदशाङ्गुलम् ।
तत्सूत्राद्वामजान्वेकचत्वारिंशद्दशाङ्गुलम् ॥

सूत्राद्दक्षिणतः कुक्षिरष्टाङ्गुल उदाहृतः ।
सूत्रात्तु सव्यकुक्षिस्तु र्‍यङ्गुल उदाहृतः ॥

ऊर्वोर्दक्षिणतस्सूत्रं सप्ताधिकदशाङ्गुलम् ।
सूत्रात्तद्वामभागे तु नवमात्रमुदीरितम् ॥

सूत्रात्तु वामकण्ठस्तु पञ्चाङ्गुल उदाहृतः ।
सूत्रात्तु दक्षिणःकण्ठो भाग इत्यभिधीयते ॥ 20

सूत्रात्तु वामबाह्वन्तं त्र्यङ्गुलक्षयसंयुतम् ।
अथवान्यप्रकारेण सूत्रपातोऽभिधीयते ॥

कनीनिकान्तं तन्मूर्ध्नस्तद्वन्नासापुटान्ततः ।
नाभेश्च दक्षमात्रान्तं स्थिताङ्घ्रेर्गुल्फमध्यमम् ॥

स्पृष्ट्वा यत्त पातितं सूत्रं मध्यसूत्रमुदाहृतम् ।
सूत्राद्वामे मुखं पञ्चमात्रं कण्ठं त्रिमात्रकम् ॥

बाह्वन्ते तिथिमात्रं स्यान्नवमात्रं तु कक्षगम् ।
मध्योदरेऽष्टमात्रं स्याच्छ्रोणी विश्वाङ्गुलेन च ॥



कटिस्त्र्यङ्गुलेन स्यादन्यत्र षष्ठिमात्रकम् ।
नवमात्रं तदूरुः स्यात् पार्ष्ण्यन्तं वेदतुङ्गकम् ॥ 25

सप्ताङ्गुलं मुखेऽन्यत्र कण्ठःस्याद्रसमात्रकम् ।
बाह्वन्ते तु त्रिमात्रं स्यात् कक्षान्ते विश्वमात्रकम् ॥

मन्वङ्गुलं भवेत् कुक्षौ श्रोण्यां स्याद्युगमात्रकम् ।
कट्यां च वेदमात्रं स्याज्जानुरष्टाङ्गुलं भवेत् ॥

पादाग्रे मुखमात्रं स्यादेवं बुध्वा समाचरेत् ।
स्थितजानुसमं विद्याद्वर्तिताङ्घ्रेः समुच्छ्रयः ॥

तत्पार्ष्णिजान्वोर्द्विमुखं द्व्यन्तरं परिकीर्तितम् ।
श्रोणीसमुच्छ्रयं वामजानोरुद्धरणं मतम् ॥

तदूरुमध्यान्नाभेश्च द्व्यन्तरं नवमात्रकम् ।
तज्जानोर्दण्डहस्तस्य मणिबन्धान्तरं मनुः ॥ 30

तस्मादभयहस्तस्य मणिबन्धो रसाङ्गुलः ।
तस्य चाङ्गुष्ठमूलान्तात् स्तनाक्षाद्द्व्यन्तरं मुखम् ॥

तद्दोस्समं तलोर्ध्वं स्यात्तद्बाह्वोर्मध्यमात् पुनः ।
सप्तदशाङ्गुलं विद्याद्दण्डहस्तस्य कोर्परम् ॥

भुजान्तं साग्निहस्तोर्ध्वं सोऽग्निः पञ्चाङ्गुलोच्छ्रयः ।
विस्तारः कोल्कस्तस्य शिखाभिस्तिसृभिर्युतः ॥

धृतडामरुको हस्तः कर्णाधो वाङ्गुलाधिकः ।
धातुर्डमरुकायामो भूतैस्तु मुखविस्तृतिः ॥

कोल्को मध्यविस्तारः परितस्सूत्रयन्त्रितः ।
एकजिह्वासमायुक्तो गम्भीरध्वनिसंयुतः ॥ 35

बाह्वोस्तु मणिबन्धान्तं चतुस्त्रिंशत्तथापरम् ।
अपस्मारोच्छ्रयं भानुरुद्रनन्दाष्टमात्रकम् ॥

देवस्य वक्त्रमानेन स्यादपस्मारमानकम् ।
वक्त्रद्वयं समारभ्य पञ्चवक्त्रावसानकम् ॥

वक्त्रार्धमानवृद्ध्या तु सप्तमानमुदाहृतम् ।
चतुस्तालेन कर्तव्यमपस्मारो द्विजोत्तमाः ॥

उष्णीषात् पादपर्यन्तं षडष्टांशं विभाजयेत् ।
उष्णीषात् केशपर्यन्तं कोल्कं चेति कीर्तितम् ॥

केशान्ताद्धनुपर्यन्तमष्टभागमिति स्मृतम् ।
गलमर्धाङ्गुलं प्रोक्तमध्यर्धं कर्ण उच्यते ॥ 40

षडङ्गुल इति प्रोक्तो हिक्कादिहृदयान्ततः ।
तथैव तस्मान्नाभ्यन्तं षडङ्गुलमिति स्मृतम् ॥

तस्मात्तु मेढ्रमूलान्तं कौशिकाङ्गुलमुच्यते ।
ऊर्वायामं तु सप्तांशं जानूत्सेधो द्विमात्रकः ॥

जङ्घायामस्तु सप्तांशः पादोत्सेधो द्विमात्रकः ।
द्विभुजश्च द्विनेत्रश्च ऊर्ध्वकायस्त्वधोमुखः ॥

व्यालं वै वामहस्ते तु तस्य मूर्धा तु दक्षिणे ।
आवृताळंकृताभङ्गी सव्यपार्श्वशिरोयुतः ॥

देवस्य वक्त्रमानेन जाह्नव्यायाम उच्यते ।
द्विभुजा च त्रिणेत्रा च करण्डमकुटान्विता ॥ 45

सर्वाभरणसंयुक्ता कृताञ्जलिपुटान्विता ।
ऊर्ध्वभागादधोभागं तोयाकारेण कारयेत् ॥

गङ्गादेव्यानया देवस्संयुक्तो वा विवर्जितः ।
प्रभावकाशविस्तारो दशाधिकशताङ्गुलम् ॥

सप्तत्रिंशच्छतायामतद्दण्डो भागविस्तरः ।
एकादिदशपर्यन्तमात्रैरूनाधिकापि वा ॥

द्व्यङ्गुलादङ्गुलार्धात्तु बालचन्द्रस्तु सप्तधा ।
तद्वशात् पार्श्वगां देवीं कल्पयेत्तद्विधानतः ॥

कुर्याद् भृङ्गिरिटिं वाथ भद्रकालीमथापि वा ।
भुजङ्गत्रास आख्यातो भुजङ्गललितस्ततः ॥ 50

भुजङ्गत्रासवत्सर्वं विशेषः कश्चिदस्ति हि ।
उद्धृतस्य तलं कुर्यात् स्थितजानूर्ध्वतः क्रमात् ॥

द्विमात्रं वा त्रिमात्रं वा चतुर्मात्रमथापि वा ।
भुजङ्गललितः स्यात्तद्भैरव इहोच्यते ॥

भुजङ्गत्रासवत्सर्वं विशेषस्तत्र चोच्यते ।
उद्धृतं दक्षिणं पादं वामपादं तु वा नयेत् ॥

स पादो देहमध्यस्थश्चोर्ध्वपादतलान्वितः ।
चतुर्भुजोऽष्टहस्तो वा नानादिव्यास्त्रभूषितः ॥

शिलादिद्रव्यमादाय कुर्यादेवं नटेश्वरम् ।
इत्थं लक्षणमाख्यातं प्रतिष्ठा तत उच्यते ॥ 55

कालोऽपि पूर्ववत्प्रोक्तस्तद्वदेवाङ्कुरार्पणम् ।
रत्नन्यासाक्षिमोक्षौ च पूर्ववत्सम्यगाचरेत् ॥

बेरशुद्धिं ततः कुर्यान्नगरादिप्रदक्षिणम् ।
जलाधिवासनं पश्चान्मण्टपं पूर्ववन्नयेत् ॥

कुण्डानि परितः पश्चात्पञ्चनवैकसंख्यया ।
चतुरश्राणि वृत्तानि तदिगश्राणि वा नयेत् ॥

मण्टपे भोजयेद्विप्रान् सहस्रान्तान्दशादिकान् ।
पुण्याहं वाचयेत्पश्चान्मण्टपस्य विशुद्धये ॥

समरीयपदे कुर्याद्वास्तुहोमं विधानतः ।
वास्तुहोमं विना वापि भूपरिग्रहमाचरेत् ॥ 60

पुण्याहं वाचयित्वा तु वेद्यूर्ध्वे स्थण्डिलं नयेत् ।
शयनं कल्पयेदूर्ध्वे प्रतिमां शोधयेत्ततः ॥

कृत्वा कौतुकबन्धं तु शाययेच्छयनोपरि ।
शिरःप्रदेशे देवस्य शिवाख्यं तु घटं न्यसेत् ॥

वर्धनीमुत्तरे न्यस्य तस्यां गौरीं च विन्यसेत् ।
लक्षणोदितरूपं तु ध्यात्वा गन्धादिभिर्यजेत् ॥

अभितः कलशानष्टौ विद्येशाधिष्ठितान्न्यसेत् ।
अर्चयेद्गन्धपुष्पाद्यैर्नैवेद्यान्तं गुरूत्तमः ॥

तत्वतत्वेश्वरान्मूर्तिमूर्तीशानपि विन्यसेत् ।
होमं समारभेत् काले मूर्तिपैस्सह देशिकः ॥ 65

कृत्वा कुण्डाग्निसंस्कारमग्निकार्योक्तमाचरेत् ।
समिदाज्यचरूँल्लाजान् सर्षपं च यवं तिलम् ॥

प्रियङ्गुशालिमुद्गांश्च जुहुयात् क्रमतो गुरुः ।
उदुम्बरवटाश्वत्थप्लक्षाः पूर्वादिदिक्षु च ॥

शम्यपामार्गबिल्वाश्च खदिरश्चाग्निकोणतः ।
प्रधानस्य पलाशस्तु समिधश्चैवमीरिताः ॥

ऋगाद्यध्ययनं मन्त्रजपं च विधिवन्नयेत् ।
गेयनृत्तयुतैस्तोत्रवेदघोषैर्व्यपोह्य च ॥

रात्रिशेषं ततः प्रातः स्मृत्वा शान्तं सदाशिवम् ।
समूर्तिपो गुरुः स्नातो मन्त्रसंशुद्धदेहयुक् ॥ 70

उद्धृत्य प्रतिमां पूर्वमुखां सर्वात्मना गुरुः ।
व्यपोह्य वस्त्रकूर्चादीन् पूजयेद्गन्धपुष्पकैः ॥

कुम्भांश्च कुण्डेष्वग्नींश्च तर्पयेच्च गुरूत्तमः ।
पूर्णाहुतिं ततो दद्याद्वौषडन्तशिवेन तु ॥

वस्त्रहेमाङ्गुलीयाद्यैराचार्यं पूजयेत्ततः ।
दक्षिणा पूर्ववत्प्रोक्ता ततः स्थापनमारभेत् ॥

ततो वेद्याःसमुद्धृत्य स्नानश्वभ्रे तु विन्यसेत् ।
चलं प्रासादमध्ये तु स्थापयेदचलं गुरुः ॥

ततः कुम्भान्समुद्धृत्य सर्वातोद्यसमाकुलम् ।
हर्म्यप्रदक्षिणं कृत्वा प्रतिमाग्रे नयेद्बुधः ॥ 75

कुम्भाद्बीजं समादाय महेशस्य हृदि न्यसेत् ।
वर्धन्या बीजमादाय तत्पीठाब्जे तु विन्यसेत् ॥



विद्येशान् पीठपादेषु तत्तद्देशेऽभिषेचयेत् ।
देवीयागोक्तमार्गेण देवीं च स्थापयेद्गुरुः ॥

तदन्ते कारयेद्धीमान् कल्याणमपि देशिकः ।
उत्सवं कारयेत्पश्चात् तथा वित्तानुसारतः ॥

अनुक्तमत्र सामान्यस्थापनोदितमाचरेत् ।
एवं यः कुरुते मर्त्यः प्रतिष्ठां भावनायुतः ॥

स यायात् पदमैशानं भुक्त्वा भोगानिहैव तु ॥

इति उत्तरकामिकाख्ये महातन्त्रे नृत्तमूर्तिस्थापनविधिः षट्चत्वारिंशत्तमः पटलः ॥

—o—

## सोमास्कन्दस्थापनविधिः ॥

वक्ष्यामि सोमोमास्कन्दसुखेशस्थापनं परम् ।
तल्लक्षणसमायुक्तं तच्चेदानीं प्रकथ्यते ॥

चतुर्भुजस्त्रिणेत्रश्च जटामकुटमण्डितः ।
सर्वाभरणसंयुक्तो वरदाभयहस्तकः ॥

कृष्णापरशुयुक्तोर्ध्ववामेतरकरान्वितः ।
व्यसव्यसव्यकर्णस्थपत्रिकानक्रकुण्डलः ॥

सोपवीतः प्रसन्नात्मा शयिता सम्यगास्तलः ।
साम्बदक्षाङ्गदेन वामे गौर्या च संयुतः ॥

सर्वलक्षणसंयुक्तस्सर्वाभरणभूषितः ।
ललाटनासिकानाभिमेढ्रपादगुल्फमध्यमे ॥ 5

श्रोणिस्फिक्संस्थितं सूत्रं मध्यसूत्रमिति स्मृतम् ।
मुखान्तात् पिप्पलीमूलाद्ग्रीवापार्श्वात्तथैव च ॥

चूचुकस्याथ मध्यात्तु कटिस्थं पार्श्वगं मतम् ।
उष्णीषात्तु ककुदंशकण्ठस्फिक्मध्यमाद्गतम् ॥

पृष्ठसूत्रमिति प्रोक्तं पार्श्वे स्यात् सार्धमात्रकम् ।
हित्वा पार्श्वद्वयोश्चैव ततस्स्यादूरुदैर्घ्यकम् ॥

जानुः पक्षाङ्गुलं वामे लम्बितस्य गुणाङ्गुलम् ।
सूत्रात्तु वामजान्वन्तमूर्ध्वकायार्धमानकम् ॥

ऊरुमूलात्तु षण्मात्रं नालकान्तं द्विजोत्तमाः ।
तलाग्राद्दूरमध्यास्त्र द्व्यन्तरं तु गुणाङ्गुलम् ॥ 10

सूत्राल्लम्बाङ्घ्रिपार्ष्ण्यन्तं सार्धविश्वाङ्गुलं भवेत् ।
कटकान्मणिबन्धाग्रोद्देशे कक्ष्यप्रसीमगम् ॥

नाभेस्तु मणिबन्धान्तं षोडशाङ्गुलमीरितम् ।
वरदं चेत्तु तत्पृष्ठान्नाभ्यन्तसममिष्यते ॥

वामे देव्या समायुक्तस्तदध्यायप्रसिद्धया ।
स सोमस्सोम एव स्यात् सोमास्कन्दविधिर्भवेत् ॥

देवोच्चदशभागैकभागेनाथ द्विभागतः ।
त्रिवेदभागैर्वा कुर्यात् स्कन्दं तन्मध्यमे गुरुः ॥

द्विनेत्रस्स द्विबाहुश्च करण्डमकुटान्वितः ।
कर्णयोर्नक्रपिण्डौ तु सर्वाभरणभूषितः ॥ 15

दक्षभागकरस्थाब्जः प्रसारितकरोऽपरः ।
द्विहस्तपङ्कजो वाथ नृत्तरूपयुतोऽथवा ॥

देव्यूरुसंस्थितो वापि निष्पङ्कजकरोऽथवा।
आसीनो वा स्थितो वापि स्कन्दस्त्वेवं प्रकीर्तितः॥

स्कन्दोमारहितस्त्वेष एवं स्यात्तु सुखासनः।
सोमे च सोमास्कन्दे च सुखेशे लक्षणं मतम्॥

प्रतिष्ठैषां प्रकर्तव्या सुकालेऽङ्कुरपूर्विका।
रत्नन्यासं ततः कुर्याद्देवदेव्योश्च वै गुहे॥

हेमाब्जं हेममायूरं देव्यां स्कन्देऽथवा न्यसेत्।
तत्तत्प्रतिष्ठाध्यायोक्तमन्त्रैरपि समन्वितम्॥

तत्तत्पीठाम्बुजेष्वेव सुस्निग्धान्तं गुरुर्न्यसेत्।
दृशामुन्मोक्षणं कृत्वा बेरशुद्धिं प्रदक्षिणम्॥

जलाधिवासनं प्राग्वद् भवेन्मण्टपमाचरेत्।
दिगश्राण्यथ वृत्तानि वेदाश्राणि च वा नयेत्॥

कुण्डानि नवपञ्चैकसंख्यया कुट्टिमाद्बहिः।
शिल्पिनं च विसृज्याथ विप्रान् संभोजयेत्ततः॥

पुण्याहप्रोक्षणं वास्तुहोमं स्थण्डिलकल्पनम्।
शयनं कल्पयेन्मध्ये स्नपनं कारयेत्ततः॥

कौतुकत्रितयं बध्वा त्रिषु तान्शाययेत्ततः।
वस्त्रैश्च पृथगावेष्ट्य कुम्भान् संस्थापयेत्ततः॥

शिवकुम्भं शिरोदेशे शिवस्य च तदुत्तरे।
विन्यस्य वर्धनीं सोमास्कन्दस्येद्दक्षिणे घटम्॥

स्कन्देनाधिष्ठितं न्यस्य गन्धाद्यैरर्चयेत्ततः।
लक्षणोदितरूपाभिध्यानाधिकृतधीर्गुरुः॥

परितोऽष्टौ घटान्न्यस्य विद्येशैरप्यधिष्ठितान्।
तत्तदध्यायमार्गेण तत्त्वमूर्त्यादिकं नयेत्॥

कृत्वा कुण्डाग्निसंस्कारं समिदाज्यान्नलाजकैः।
तिलसर्षपमुद्गैश्च होमं च विधिना नयेत्॥

पलाशोदुम्बराश्वत्थवटा दिक्षु विदिक्षु च।
शमीखदिरमायूरश्रीवृक्षोत्था इहेरिताः॥

प्रधानेऽप्यादिमः प्रोक्तः पूर्णान्तं कर्म कारयेत्।
षण्मुखं च तदा देवीं प्रधाने तर्पयेद्गुरुः॥

एते विभिन्नपीठाश्चेत् पृथङ्मण्टपमाचरेत्।
द्वितीये देवकुम्भाग्नींस्तर्पयेत् पूर्ववर्त्मना॥

संप्राप्तदशनिष्कादिदक्षिणो मूर्तिपादिभिः।
वस्त्रहेमाङ्गुलीयादिपूजितो गुरुरादरात्॥

कुम्भाद्बीजं समादाय महेशानहृदि न्यसेत्।
वर्धन्यास्तत उद्धृत्य तस्य पीठे तु विन्यसेत्॥

सहजा यदि सा देवी तस्यास्तु हृदि विन्यसेत्।
गुहकुम्भाद्गुहार्णं तं गुहस्य हृदि विन्यसेत्॥

अन्येभ्यः परितः पीठे न्यस्य तानभिषेचयेत्।
एते विभिन्नपीठाश्चेत् पृथङ्मण्टपमाचरेत्॥

कल्याणकर्म कर्तव्यं यथाविधि विशेषतः।
अनुक्तमत्र यत् कुर्यात् सामान्यस्थापनोक्तवत्॥

इत्यमेषां प्रतिष्ठां तु यः कुर्यान्नरसत्तमः।
स यास्यति शिवेनैक्यमिह सिद्धिं च सोऽश्नुते॥

इति उत्तरकामिकाख्ये महातन्त्रे सोमास्कन्दस्थापनविधिः सप्तचत्वारिंशत्तमः पटलः॥

—o—



## चन्द्रशेखरस्थापनविधिः॥

इन्दुमौलिप्रतिष्ठां तु वक्ष्ये लक्षणपूर्विकाम्।
आपाद्य च शिलादीनि तैः कुर्यात् प्रतिमां गुरुः॥

चतुर्भुजस्त्रिणेत्रश्च समपात् स्थानके स्थितः।
वराभयसमायुक्तः पूर्वस्थकरपल्लवः॥

वरदं वामहस्ते स्यादभयं दक्षिणे करे।
वरदं यदि तं कुर्याद्यथान्यः सिंहकर्णकः॥

ऊरुस्थुमकरो वापि कटको वा विधीयते।
मृगटङ्ककरावन्यौ दोस्सीमान्तं व्यवस्थितौ॥

मृगटङ्कौ तु कर्णान्तौ कर्तरी संव्यवस्थिता।
पराङ्मुखौ संमुखौ वा मृगटङ्कौ समीरितौ॥

दिङ्मात्रं कर्तरीबाहुमध्यमं परिकीर्तितम्।
हिक्कायाः कर्तरीमध्यमेकत्रिंशदथाङ्गुलम्॥

मणिबन्धकबाह्वोस्तु मध्यमं द्वादशाङ्गुलम्।
श्रोण्यन्तात् कूर्परादर्वागन्तरं पूर्वहस्तयोः॥

शरैर्वा कौशिकैर्वापि सार्धाङ्गुलरसैस्तु वा।
स्तनान्तमभयान्तोर्ध्वं नाभ्यूर्ध्वे पुष्करोदयः॥

नाभेरभयहस्तान्तं गुणाङ्गुलमिति स्मृतम्।
स्तनान्तादभयाग्रान्तं द्वादशाङ्गुलमिष्यते॥

कटकाधःप्रदेशं तु मेढ्रमूलसमं भवेत्।
ऊरुमूले कटकान्तं स्पृष्टं वाथ गुणान्तरम्॥

सार्धभागद्वयेनाथ भागाभ्यां वाथ कल्पयेत्।
ऊर्वादिमध्यमात्राणां जान्वोरप्यन्तरं क्रमात्॥

एकेनार्धेन सार्धाभ्यां त्रिभिश्च परिकल्पयेत्।
अथवा जानुमध्यात्तु सार्धाङ्गुलमिति स्मृतम्॥

जङ्घयोर्मूलमध्याग्रं वेदभूतरसान्तकम्।
अङ्गुष्ठयोर्द्वयोर्मध्यं विश्वेशाङ्गुलमीरितम्॥

भागं पार्ष्ण्यन्तरं प्रोक्तं ततस्सूत्राणि लम्बयेत्।
तत्पार्श्वयोस्त्रिसूत्राणि मुखकर्णभुजावधि॥

पुरः पृष्ठे च मध्ये च नव तान्यवलम्बयेत्।
प्रलम्बफलकामूर्ध्नि स्थापयित्वावलम्बयेत्॥

ललाटघ्राणहन्नाभिमेढ्राङ्घ्रियुगमध्यमे।
सूत्रं पुरःस्थितं नासाकुक्षिस्पर्शं यथा भवेत्॥

मुखान्तपिप्पलीकर्णमूलचूचुकपात्तले।
कर्णकण्ठस्तनानां तु बाह्ये श्रोणिस्पृगेव च॥

मुखान्मूलान्तरं नीत्वा दोस्पृश्यमपरं मतम्।
एवं पार्श्वे त्रिसूत्राणि लम्बयेद्देशिकोत्तमः॥

कृकाटिकाककुत्कर्णस्फिक्पार्ष्णीनां तु मध्यमे।
मस्तकाल्लम्बनीयं स्याद्यथा पृष्ठककुद्गतम्॥

देहस्यान्तर्गतं मध्यसूत्रं स्यान्मुनिपुङ्गवाः।
उष्णीषभूषणं कुर्यात् त्रिमात्रेण विशेषतः॥

पार्श्वयोः पुरतः पृष्ठे चतुश्शूरिसमन्वितम्।
मध्ये मकरकूटं स्यात् ससकोटरसंयुतम्॥

पार्श्वयोः पत्रकूटं स्यात् पृष्ठे स्याद्रत्नकूटकम्।
अग्रे दशाङ्गुलं तस्य मूले तु मुखविस्तरम्॥

तत्तत्त्रिगुणनाहं तु वामेऽवामेऽर्धचन्द्रकम्।
वामे महाफणि तस्य सर्वालङ्कारभूषितम्॥

जटाभिः पञ्चभिर्ग्रन्थि त्रिमात्रेण विशेषतः।
एकधा तु त्रिधाकृत्वा शेषाभिः पार्श्वलम्बनम्॥

जटामकुटमेतद्धि सर्वालङ्कारमीरितम् ।
रत्नपत्रिकया वापि शङ्खपत्रिकयापि वा ॥ 25

पद्मपत्रिकया वापि शोभितं वामकर्णकम् ।
सव्यं मकरसिंहाख्यपत्रकुण्डलकैर्युतम् ॥
पृष्ठतः कर्णपर्यन्तं केशावर्ति विलम्बनम् ।
पार्श्वयोर्बाहुमूलान्तु जटाग्राणां विलम्बनम् ॥
हारयुग्मीवसंयुक्तं तथा कर्णिकयान्वितम् ।
वक्षस्थलं प्रकर्तव्यं भुजाः केयूरसंयुताः ॥
सुपत्रवत्रयोपेतास्सर्वरत्नोपशोभिताः ।
मुक्तादामविलम्बाश्च तदग्रे मणिभूषणम् ॥
कराग्रं कटकोपेतमङ्गुल्यो मुद्रिकान्विताः ।
छन्नवीरोत्तरीयोपवीतैस्सोदरबन्धनः ॥ 30

समस्तरत्नपाशाढ्यकृत्रिमाननदामभिः ।
संयुक्तकटिसूत्रोऽन्तः पादजालकसंयुतः ॥
चन्द्रशेखर एवं स्याद्देव्या च सहितो न वा ।
सापीह भिन्नपीठा वा देवेनालिङ्गितार्थवा ॥
तयालिङ्गितदेवो वा अन्योन्यालिङ्गितस्तु वा ।
आलिङ्गनयुतो वा स्यान्निराभङ्गोऽथवा मतः ॥
एवं लक्षणमाख्यातं प्रतिष्ठाथं निगद्यते ।
कालोऽपि प्राग्वदुद्दिष्टस्तद्देवाङ्कुरार्पणम् ॥
रत्नन्यासं दृशां मोक्षं बेरशुद्धिं प्रदक्षिणम् ।
जलाधिवासनं पश्चान्मण्टपं पूर्ववन्नयेत् ॥ 35
कुण्डानि परितः कुर्यान्नवपञ्चैकसंख्यया ।
तद्दिगग्राणि वृत्तानि कुण्डान्यश्राणि वा नयेत् ॥
विप्रान् संभाजयेत्पश्चात् पुण्याहं वाचयेत्ततः ।
समर्द्यपदे वास्तुहोमः कार्यो द्विजोत्तमाः ॥

पुण्याहं वाचयित्वा तु शय्यायाः कल्पनं नयेत् ।
स्नपनं कौतुकं शय्यारोहणं पृथगाचरेत् ॥

ततः कुम्भं शिरोदेशे वर्धनीं च तदुत्तरे ।
लक्षणोदितरूपं च स्मरन्नभ्यर्चयेत्तयोः ॥
परितोऽष्टौ घटान्न्यस्य विद्येशाधिष्ठितान्न्यसेत् ।
न्यस्यैव तत्त्वमूर्त्यादीन् प्राग्वद्धोमं समाचरेत् ॥ 40
कृत्वा कुण्डाग्निसंस्कारं समिदाज्यान्नकैस्तिलैः ।
लाजसस्येन्द्रकैश्चैव वटोदुम्बरसंज्ञकौ ॥
अश्वत्थकपलाशौ च दिक्ष्वेवं समिधो मताः ।
शम्यपामार्गश्रीवृक्षमायूरा वह्निकोणतः ॥
प्रत्येकं पूर्ववद्धुत्वा पूर्णान्ते देशिकोत्तमः ।
प्रभाते देवकुम्भाग्नीनभ्यर्च्य गुरुरादरात् ॥
वस्त्रहेमाङ्गुलीयाद्यैर्मूर्तिपाद्यैस्समन्वितः ।
संप्राप्तदक्षिणः प्राग्वन्मन्त्रन्यासं समाचरेत् ॥

प्रतिमाग्रे घटान्न्यस्य कुम्भाद्बीजं तु विन्यसेत् ।
देवस्य हृदि तत्पीठे वर्धन्यास्तु मनुं न्यसेत् ॥ 45
सहजा चेत्तु तद्देवी तस्यास्तु हृदि विन्यसेत् ।
अन्येभ्यो विन्यसेद्बीजं पीठस्य परितस्ततः ॥
विभिन्नपीठा देवी चेत् पृथङ्मण्टपमाचरेत् ।
कल्याणं कारयेदन्ते स्नपनं चोत्सवं तथा ॥
कारयेद्भूरि नैवेद्यं दापयेत्तु न वा गुरुः ।
अत्रानुक्तं तु संप्रार्थं सामान्यस्थापनोदितम् ॥
चन्द्रमौलिप्रतिष्ठां तु कुर्यादेवं हि यो नरः ।
लब्ध्वेह सर्वकामांस्तु स चान्ते मोक्षमाप्नुयात् ॥

इति उत्तरकामिकाख्ये महातन्त्रे चन्द्रशेखरस्थापनविधिः अष्टचत्वारिंशत्तमः पटलः ॥



## पुरारिस्थापनविधिः ॥

पुरारिस्थापनं वक्ष्ये तदादौ लक्षणं च वै ।
चतुर्भुजस्त्रिनेत्रश्च जटामकुटसंयुतः ॥
समभङ्गयुतस्सम्यक् स्थानकेन समन्वितः ।
सव्यकर्णस्थमकरकुण्डलेन समन्वितः ॥
कृष्णापरशुसंयुक्तपरहस्तद्वयान्वितः ।
धनुर्बाणयुतोपेतवामेतरकरान्वितः ॥
दोस्सीमपरहस्तोच्चं शरास्तन्मेढ्रसीमकम् ।
नाभेस्तु मणिबन्धान्तमात्रमेकोनविंशतिः ॥
पार्श्वमध्यमबाह्वोश्च मध्यमं तु शराङ्गुलम् ।
देमू ...परहस्तान्तं षोडशाङ्गुल्मीरितम् ॥ 5
परहस्तोज्झितो वाथ द्विहस्तस्त्रिपुरान्तकः ।
शिरसो वामदक्कृष्णमण्डलस्य च दक्षिणे ॥
सूत्रं तु लम्बयेद्वामे वामनासापुटस्य तु ।
दक्षिणस्थितपादे च पुरस्तान्मुनिपुङ्गवाः ॥
कृत्वाभिभेदसव्याङ्घ्रिजानूनां सूत्रतोऽन्तरम् ।
सव्येऽङ्घ्रिभागादेवं स्यात्समभङ्गे स्थिरानतिः ॥
तत्पादाङ्गुष्ठपार्ष्ण्योश्च द्वयन्तरं दशभौतिकम् ।
कुर्यात् सलक्षणां वाथ वामभागे तु पार्वतीम् ॥
एवं कृत्वा पुरारिं तु प्रतिष्ठां कारयेत्ततः ।
सुमुहूर्ते सुलग्ने च कृत्वैवाङ्कुरकर्म च ॥ 10
रत्नन्यासं दृशां मोक्षं बेरशुद्धिं प्रदक्षिणम् ।
तोयाधिवासनं पश्चात् स्नपनं कौतुकं नयेत् ॥

मण्टपे स्थण्डिलं कृत्वा नवपञ्चैकसंख्यया ।
कुण्डान्यश्राणि वृत्तानि तद्दिगश्राणि तानि वा ॥
संकल्प्य शयनं तस्मिन्नारोप्य च महेश्वरम् ।
देवेशस्य शिरोदेशे शिवकुम्भं च वर्धनीम् ॥
लक्षणोक्तं च रूपं तु ध्यात्वा तत्रैव पूजयेत् ।
अभितोऽष्टौ घटान्न्यस्य विद्येशांस्तत्र पूजयेत् ॥
गन्धाद्यैरपि नैवेद्यपर्यन्तैर्भावितो गुरुः ।
तत्त्वमूर्त्यादिविन्यासं कृत्वा होमं समाचरेत् ॥ 15
संस्कृत्य कुण्डं वह्निं च समिदाज्यान्नकैस्तिलैः ।
पालाशोदुम्बराश्वत्थवटाः प्रागादिदिक्षु च ॥
शम्यपामार्गश्रीवृक्षमायूरा वह्निकोणतः ।
प्रधानस्य पलाशस्स्यात् स च सर्वत्र वा मतः ॥
प्रत्येकं पूर्ववद्धुत्वा पूर्णाहुत्यन्तमेव च ।
ततो द्वितीयदिवसे देवकुम्भाग्नितर्पणम् ॥
पूजितो मूर्तिपैस्सार्धं प्राप्तपूर्वोक्तदक्षिणः ।
सुमुहूर्ते ततः प्राप्ते मनुन्यासं समाचरेत् ॥
कुम्भाद्बीजं समादाय शिवस्य हृदि विन्यसेत् ।
वर्धन्या बीजमादाय तत्पीठे विन्यसेद्गुरुः ॥ 20
सहासना तु देवी चेत् तस्यास्तु हृदि विन्यसेत् ।
विभिन्नपीठा चेत्तस्याः पृथङ्मण्टपमाचरेत् ॥
कल्याणं कारयेत्पश्चात्तदन्ते स्नपनं नयेत् ।
उत्सवं भूरि नैवेद्यं कारयेद्वा न वा गुरुः ॥

अनुक्तमत्र यद्ग्राह्यं सामान्यस्थापनोक्तवत् ।
प्रतिष्ठैवं समाख्याता पुरारेरिष्टदायिनी ॥

इत्थं कारितवान्यस्तु प्रतिष्ठां भक्तिपूर्वकम् ।
सोऽनेकभोगान् भुक्त्वेह यायादन्ते शिवं परम् ॥

इति उत्तरकामिकाख्ये महातन्त्रे पुरारिस्थापनविधिरेकोनपञ्चाशत्तमः पटलः ॥

## लिङ्गोद्भवप्रतिष्ठाविधिः ॥

लिङ्गोद्भवस्य देवस्य प्रतिष्ठाथं निगद्यते ।
गर्भमानवशाल्लिङ्गं प्राग्वत् सम्यक् प्रकल्पयेत् ॥

लिङ्गोर्ध्वे वेदपञ्चर्तुसप्तांशेऽशमथ त्यजेत् ।
तत्समं वा तदर्धं वा त्यक्त्वा चोर्ध्वे तदन्तरे ॥

पूर्ववत् कारयेत् सम्यक् चन्द्रशेखरमूर्तिनम् ।
लिङ्गाधो शर्वजान्वन्तभागं नेन्द्रियगोचरम् ॥

लिङ्गोर्ध्वाधःप्रदेशे तु हंसं सूकरमाचरेत् ।
बिम्बस्याननमानेन कारयेद्धंसमादरात् ॥

बिम्बद्विमुखमानेन भूकृष्यास्यं तु सूकरम् ।
तल्लिङ्गरसभागैकद्वित्रिवेदशरैर्नयेत् ॥

ब्रह्मविष्णू द्विपार्श्वस्थौ नतौ तस्यानुकूलकौ ।
तिर्यग्गतसुपादौ तौ सर्वावयवसुन्दरौ ॥

लिङ्गोद्भूतस्त्विति ख्यातो ब्रह्मविष्ण्वभिनन्दितः ।
ब्रह्मविष्णुविहीनो वा हंससूकरसंयुतः ॥

इत्थं लक्षणमादिष्टं प्रतिष्ठाविधिरुच्यते ।
कालश्च पूर्ववद्ग्राह्यस्तद्वदेवाङ्कुरार्पणम् ॥

पश्चान्मण्टपनिर्माणं कृत्वा तत्रैव कल्पयेत् ।
कुण्डानि परितोऽग्राणि नवपञ्चैकसंख्यया ॥

दिगग्राण्यथ वृत्तानि रत्नन्यासोऽत्र नास्ति हि ।
नयनोन्मीलनं पश्चाद्बेरशुद्धिमनन्तरम् ॥

प्रदक्षिणं पुरादीनां जले चैवाधिवासनम् ।
भूषणं मण्टपस्यैव वास्तुहोममतः परम् ॥

भूपरिग्रहमादौ वा पूर्ववत् कारयेद्बुधः ।
वेद्यूर्ध्वे स्थण्डिलं कृत्वा शयनं कल्पयेत्ततः ॥

जलादुत्तीर्य देवं तु प्रतिमां शोधयेत्ततः ।
कृत्वा कौतुकबन्धं तु शाययेच्छयनोपरि ॥

नयनोन्मीलनाद्यं तु ब्रह्मविष्ण्वोस्तु कल्पयेत् ।
ब्रह्माणं दक्षिणे चैव विष्णुं वामे तु शाययेत् ॥

वस्त्रैश्चैव तु संवेष्ट्य गन्धाद्यैरर्चयेत्ततः ।
प्रधानकुम्भं तेषां तु शिरोभागे तु विन्यसेत् ॥

वर्धनीं विन्यसेद्धीमाञ्छिवकुम्भस्य चोत्तरे ।
अभितश्च घटानष्टौ न्यस्य विद्येश्वरात्मकान् ॥

लक्षणोदितरूपं तु ध्यायेत् स्वहृदि देशिकः ।
रूपसंस्थानभावैस्तु पूजयित्वा यथाविधि ॥

देवस्य ब्रह्मणो विष्णोस्तत्त्वमूर्त्यादिकं न्यसेत् ।
प्राग्वद्देवस्य तत्त्वाद्यान् कविष्णोस्तु यथोदितम् ॥

ततो होमं प्रकुर्वीत मूर्तिपैस्सह देशिकः ।
समिदाज्यान्नलाजैश्च तिलसर्षपवेणवैः ॥

पलाशोदुम्बराश्वत्थप्लक्षाः पूर्वादिदिक्षु च ।
शम्यपामार्गश्रीवृक्षमायूरा वह्निकोणतः ॥

प्रधानस्य पलाशस्तु स च सर्वत्र वा मतः ।
द्रव्यैरेभिः क्रमाद्धुत्वा ब्रह्माणं विष्णुमेव च ॥

गुरुः प्रधानकुम्भे तु तर्पयेत् समिदादिभिः ।
रात्रिशेषं व्यपोह्याथ प्रभाते विमले ततः ॥

देशिकस्तु विशुद्धात्मा मूर्तिपैस्सह तत्त्ववित् ।
बिम्बानुद्धृत्य संपूज्य कुम्भान् कुण्डेषु पावकान् ॥

देशिकादींश्च संपूज्य दक्षिणां दापयेत्ततः ।
मुहूर्तेनाडिकापूर्वे मन्त्रन्यासं समाचरेत् ॥

वेद्याः कुम्भान् समुद्धृत्य तदग्रे स्थण्डिले न्यसेत् ।
कुम्भाद्बीजं समादाय देवस्य हृदि विन्यसेत् ॥

वर्धन्या बीजमादाय पाददेशेऽभिषेचयेत् ।
विद्येशेभ्यस्तथा न्यस्य तज्जलैः स्नापयेत्प्रभुम् ॥

ब्रह्मविष्ण्वोः स्वबीजं तु तद्वन्न्यस्याभिषेचयेत् ।
स्नपनं पूजनं कुर्यादन्ते चोत्सवसंयुतम् ॥

बिम्बान् संस्थापयेत् पश्चाद्ब्रह्माणं दक्षिणे गुरुः ।
वामभागे तु देवस्य विष्णुं संस्थापयेद्गुरुः ॥

अनुक्तमत्र सामान्यप्रतिमास्थापनोक्तवत् ।
लिङ्गोद्भवप्रतिष्ठां तु कुर्यादेवं हि यो नरः ॥

इहैव धनवान् धीमान् सोऽन्ते सायुज्यमाप्नुयात् ।

इति उत्तरकामिकाख्ये महातन्त्रे लिङ्गोद्भवप्रतिष्ठाविधिः पञ्चाशत्तमः पटलः ॥

## दक्षिणामूर्तिस्थापनविधिः ॥

स्थापनं दक्षिणेशस्य शृणुध्वं विप्रसत्तमाः ।
व्याख्यानगेययोगेषु निश्चस्य त्रिविधस्य च ॥

व्याख्यायुग्ज्ञानमुद्रातो गेयी वीणासमन्वितः ।
ताभ्यां विरहितो योगी स नानाकारभेदतः ॥

चतुर्भुजस्त्रिणेत्रस्तु कुन्देन्दुधवलप्रभः ।
श्वेतविद्रुमहेमाभः श्यामाभो वा प्रकीर्तितः ॥

व्याघ्रचर्माम्बरो वापि दिव्याम्बरधरस्तु वा ।
उत्तरीयसमोपेतः शुक्लयज्ञोपवीतकः ॥

विकीर्णमूर्धजो वापि जटामकुट एव वा ।
पट्टिकाबन्धनो वापि सत्करोटिकया युतः ॥

धुत्तूरगरवर्धैर्नागपत्रैश्चन्द्रेण मण्डितः ।
पञ्चमुद्रासमोपेतो गण्डाकिङ्किणिसंयुतः ॥

अधस्ताद्वटवृक्षस्य शैलादूर्ध्वे श्रितः पुनः ।
व्याघ्रचर्मोपरिष्टात्तु स्थितो वीरासनोऽथवा ॥

लम्बितं दक्षिणं पादं तज्जानूपरि संस्थितम् ।
वामाङ्घ्रिन्नालकं कुर्यात्सव्यहस्तं तु मुद्रया ॥

संदंशसंज्ञयोपेतं वामहस्तस्थपुस्तकः ।
द्वात्रिंशद्धृतिमात्रान्तदैर्घ्यः स्यात् स तु पुस्तकः ॥

अथवा नागसंयुक्तो वामहस्तस्समीरितः ।
वरदं तं विजानीयाज्जानुस्थमणिबन्धकम् ॥ 10

दण्डहस्तो यदा स स्यात् प्रकोष्ठं जानुसंस्थितम् ।
विकसत्पद्मसंकाशस्त्वधस्तादिस्थिताङ्गुलिः ॥

परहस्तद्वये चाक्षमालाग्न्यालम्बसमन्वितः ।
पद्मं वा चोत्पलं वापि व्यालं वामे तु कल्पयेत् ॥

कटकौ तौ प्रकर्तव्यौ प्रसन्नसमलोचनः ।
नासाग्रदृष्टियुग् वामहस्तो वा स्यात्सुपुस्तकः ॥

आभङ्गसहितं कुर्याद्देहमध्ये तु वामतः ।
सूत्रं वामे च हृदयान्नाभेर्मेढ्रात् क्रमेण तु ॥

मात्रं कालं च भागं च त्यक्त्वा तिष्ठति मध्यतः ।
लम्बपादस्थितं मध्यसूत्रादर्धाङ्गुलान्तरे ॥ 15

अर्धार्धाङ्गुलवृद्ध्या तु यावत् सार्धयवं भवेत् ।
स दशाङ्गुष्ठमूलोच्चस्तनाग्रावधिरेव तु ॥

नयने मध्यमं विद्यादङ्गुष्ठस्तनयोस्ततः ।
नाभेस्तु मणिबन्धान्तो धृत्यङ्गुलमुदाहृतः ॥

सपुस्तकस्य हस्तस्य चोरूर्ध्वाद्भागमन्तरम् ।
नाभेस्तु मणिबन्धान्तं स स्यादेकोनविंशतिः ॥

दोर्मध्यात् पार्श्वमध्याच्च द्व्यन्तरं स्याद्दशाङ्गुलम् ।
परस्य मणिबन्धाच्च भुजमध्यान्नवाङ्गुलम् ॥

द्व्यन्तरं दशमात्रं स्याद् दोर्मूलान्मध्यमाङ्गुलात् ।
हिक्कासूत्राद्द्विमात्राथ कटकाग्रप्रमुष्टया ॥ 20

सजटामकुटा देवचूचुकास्यगलान्तकाः ।
तत्तत्कलासमोपेताश्शुकवच्छ्रोत्रकीर्तितः ॥

शुक्लाद्यम्बरसंयुक्ता भस्मरुद्राक्षसंयुताः ।
कौशिकः काश्यपश्श्यामस्त्वितरः पीतवर्णकः ॥

रक्तवर्णो भरद्वाजो धूम्राभावत्रिगौतमौ ।
एषामेकं द्वयं वापि त्रयं वा पार्श्वयोर्न्यसेत् ॥

व्याख्यानमूर्तिरेवं स्याद्गेयमूर्तिस्ततो मतः ।
ऊर्ध्वयोर्मध्यकटकौ सव्यासव्यकरावुभौ ॥

वीणा तु दक्षिणे वामे दक्षिणे कटकस्थितिः ।
दक्षिणे कटकं चोरुस्थितायां विनिवेशयेत् ॥

कोणकं चोरुबाह्ये तु तन्मूलं कटकोर्ध्वतः ।
भागमग्रं तदा वामो भागाधिकचतुर्मुखः ॥

विस्तारस्तु कला तस्याः परिणाहं तु पूर्ववत् ।
कला वक्त्रस्य विस्तारायामं वापि षडङ्गुलम् ॥

तत्तुङ्गं तु तदर्धं स्यादेवं ज्ञात्वा समाचरेत् ।
हस्तस्य मणिबन्धान्तं हिक्कासूत्रादितः क्रमात् ॥

त्रिंशदङ्गुलमित्युक्तमथान्यमणिबन्धतः ।
आनाभेरन्तरं तालं शेषं सर्वं तु पूर्ववत् ॥

व्याख्यानसहितस्त्वेवं सन्दर्शस्य समास्थयुक् ।
तत्राक्षिपातयोगेन सदा कुञ्चितलोचनः ॥

प्रसृतो वामहस्तः स्याद्योगमूर्तिरयं मतः ।
अथ कुञ्चितवामाङ्घ्रियुग्मस्फिग्गतपार्ष्णिकः ॥

उद्धृतं तस्य जान्वग्रदण्डकोर्परकान्तयुक् ।
संदर्शदृष्टिपातश्च आभङ्गं चैव पूर्ववत् ॥



नानामृगैस्तु संकीर्णं नानाव्यालैस्तु संयुतम् ।
नानामुनिगणैस्सार्धं सिद्धविद्याधरैरपि ॥

भूतैश्च किन्नरैरन्यैः पुष्पवृक्षैश्च मण्डितम् ।
शैलं कुर्यात्तु तत्पार्श्वे वटवृक्षस्तु शाद्वले ॥

फलशाखोपशाखाढ्यो नानापक्षिसमायुतः ।
तन्मूले दक्षिणे छायानिषण्णः कृपया युतः ॥ 35

रत्नोपशोभिते पीठे व्याघ्रचर्मोत्तरच्छदे ।
आसीनो मुनिभिस्सम्यक् कौशिकादिभिरादरात् ॥

शिवद्विजकुलस्थादिभूतैस्तु परितः स्थितैः ।
आगमाहितचेतोभिः परमेशेन दीक्षितैः ॥

एवं तु दक्षिणामूर्तेर्मूर्तिभेदा उदाहृताः ।
व्याख्यायुग्ज्ञानदः प्रोक्तो गेययुग्भुक्तिदो मतः ॥

सयोगो मुक्तिदो ज्ञेय इति ज्ञात्वा समाचरेत् ।
आसीनो वा स्थितो वापि ऋषिभिस्संवृतो न वा ॥

वटवृक्षविहीनो वा भूताद्यावृत एव वा ।
भूतस्थलम्बपादो वा दक्षिणेशस्समीरितः ॥ 40

एवं लक्षणमादिष्टं प्रतिष्ठाविधिरुच्यते ।
आराध्यं पूर्ववद्ग्राह्यमङ्कुरार्पणमेव च ॥

मण्टपं पूर्ववत् कुर्यान्नवपञ्चैकसंख्यया ।
कुण्डानि परितोऽश्राणि तद्दिगश्राणि वा नयेत् ॥

रत्नन्यासाक्षिमोक्षौ च प्रतिमाशोधनं तथा ।
ग्रामप्रदक्षिणं चैव जले चैवाधिवासनम् ॥

पुण्याहप्रोक्षणं चैव पश्चाद्ब्राह्मणभोजनम् ।
पुण्याहं वास्तुहोमं च भूपरिग्रहमेव वा ॥

कृत्वा तु देवदेवस्य ऋषीणां च यथार्हकम् ।
वेद्यूर्ध्वे स्थण्डिलं कृत्वा शयनं कल्पयेत् पृथक् ॥ 45

स्नानवेद्यां तु ऋषिभिः स्नपनं कारयेच्छिवे ।
शय्यायां शाययेद्देवं कौशिकादिऋषीनथ ॥

दक्षिणे तु भरद्वाजप्रमुखानप्यदक्षिणे ।
शाययेद्वस्त्रकूर्चादिभूषितांस्तान् पृथक् पृथक् ॥

व्याख्यानगेययोगानामेतत् सामान्यमीरितम् ।
तांस्तु कुम्भान् शिरोदेशे न्यसेद्वस्त्रादिभूषितान् ॥

वर्धनीं विन्यसेद्धीमान् शिवकुम्भस्य चोत्तरे ।
अभितो वसुकुम्भांस्तु विद्येशाधिष्ठितान्न्यसेत् ॥

रूपसंस्थानभावैस्तु पूजयित्वा यथाक्रमम् ।
तत्त्वमूर्त्यादिविन्यासं कृत्वा होमं समाचरेत् ॥ 50

तत्पाद्यं पूर्ववद्दत्वा मुनिष्वपि यथोदितम् ।
कृत्वाग्निकुण्डसंस्कारमुत्पाद्य शिवपावकम् ॥

समिदाज्यचरूँल्लाजांस्तिलसर्षपवैणवान् ।
जुहुयात्तु महाशाखं प्रधानेऽपि पलाशकम् ॥

बैल्वाः कोणेषु होतव्याः प्रधाने तर्पयेदृषीन् ।
द्रव्यैरेभिः क्रमैर्हुत्वा पूर्णाहुत्यवसानकम् ॥

रात्रिशेषं व्यपोह्यैवं प्रभाते विमले ततः ।
समूर्तिपैर्गुरुः स्नातः कृतमन्त्रादिविग्रहः ॥

संपूज्योद्धृत्य बिम्बांश्च कुम्भान् कुण्डेषु पावकान् ।
देशिकादींश्च संपूज्य दक्षिणां दापयेत् पृथक् ॥ 55

मुहूर्तनाडिकापूर्वं मन्त्रन्यासं समारभेत् ।
कुम्भान् बिम्बपुरो न्यस्य स्थण्डिले पूर्वकल्पिते ॥

कुम्भाद्बीजं समादाय शिवस्य हृदि विन्यसेत् ।
वर्धन्या बीजमादाय तस्य पीठे तु विन्यसेत् ॥
विद्येशानां तु बीजानि पीठे शक्रादितो न्यसेत् ।
तत्कुम्भजलैश्चैव तत्प्रदेशेऽभिषेचयेत् ॥
ऋषाणां बीजानि तेषां तु हृदि विन्यसेत् ।
तत्कुम्भोदकैश्चैव तेषां च स्नपनं नयेत् ॥
श्रीकण्ठमुनिहस्तस्थपुस्तकेष्वखिलागमम् ।
विन्यसेत् कामिकाद्यं तु सोऽपीदं गुरूत्तमः ॥
देवेशं स्थापयेत्पश्चाद्दर्शीतदक्षवामयोः ।
स्नपनं चोत्सवं भूरिनैवेद्यं कारयेन्न वा ॥
अनुक्तमत्र सामान्यस्थापनोक्तवदाचरेत् ।
एवं यो दक्षिणामूर्तेः स्थापनं कुरुते नरः ॥
सोऽखिलानिह भुक्त्वा भोगान् स्वात्माभिरा...
देहान्ते परमेशाने कर्ता यावन्न संशयः ॥

इति उत्तरकामिकाख्ये महातन्त्रे दक्षिणामूर्तिस्थापनविधिरेकपञ्चाशत्तमः पटलः ॥

## भिक्षाटनप्रतिष्ठाविधिः

भिक्षाटनस्य वक्ष्येऽहं कङ्कालस्यापि लक्षणम् ।
प्रतिष्ठां तु द्विजश्रेष्ठाश्शृणुध्वं द्विजसत्तमाः ॥
पादे पादुकया युक्तं चतुर्दोर्भिस्समन्वितम् ।
सयज्ञसूत्रं शान्तं च गमनोन्मुखमीश्वरम् ॥
आबद्धक्षुरिकं सौम्यं कपर्दमकुटोज्ज्वलम् ।
क्षौमाम्बरं स्थितं कुर्यात् सुन्दरं तं विभूषितम् ॥
सशङ्खपत्रिका वामे दक्षिणे नक्रकुण्डलम् ।
दक्षिणं कुञ्चितं पादं वामपादं तु सुस्थितम् ॥
समभङ्गयुतं वापि कान्तियुक्तनिजाङ्गकम् ।
प्रहारं दक्षिणे हस्ते ढक्कां वामे तु पूर्वयोः ॥ 5
सव्यमध्याङ्गुल्यग्रं तु कृष्णाजिह्वाग्रगं भवेत् ।
वामे करेऽपरे पिञ्छदण्डकं कालदण्डकम् ॥
उभयोर्दण्डयोर्मूलं स्कन्धमूलोपरि स्थितम् ।
नानागणसमायुक्तं नानाभूतसमाकुलम् ॥
असंख्यभूतमूर्धस्थबलिपात्रेण संयुतम् ।
नानारूपधरैर्भूतैरनेकैः परिवारितम् ॥
भेरिकाकाहलाद्याद्यैर्गानन्नृत्तरवाकुलैः ।
योषितश्चानवद्याङ्ग्यो अपेक्षावश्यमोहिताः ॥
स्रस्तभूषणवस्त्राद्या बलिदानसमुन्मुखाः ।
आशीर्वादान्विताः काश्चित् काश्चिदालिङ्गनोन्मुखाः ॥
मूर्ध्नस्सूत्रं ललाटस्य मध्यं नीत्वाङ्गुष्ठे नयेत् ।
सव्यनासापुटाग्रात्तु स्थिताङ्गुष्ठाङ्गुष्ठमूलतः ॥
दक्षिणेऽध्यर्धं हित्वा हृदयाद्दक्षिणे त्रिकम् ।
नाभेर्मेढ्रात्तु वामे तु भागं सप्ताङ्गुलं भवेत् ॥
पादाङ्गुष्ठद्वयोर्मध्यं स्मृतिमात्रमुदाहृतम् ।
पार्ष्ण्योश्च मुनिमात्रं स्याज्जान्वोर्मध्यं मुखेन तु ॥
सार्धविंशाङ्गुलैर्वापि तयोरन्तरमिष्यते ।
प्रहारहस्ते यो बद्धः कटको नाभिसीमकः ॥



नाभेस्तन्मणिबन्धान्तो भाग इत्यभिधीयते ।
पार्श्वमध्यमबाह्वोश्च मध्यमं भूतमात्रकम् ॥ 15
हरिणस्याग्रतो हस्त ऊरुमध्यसमो भवेत् ।
ऊरुमध्याच्च तस्याग्रमेकविंशतिमात्रकम् ॥
अधोमुखस्सकटकः स्मृतिर्वाग्रसमन्वितः ।
पार्श्वमध्यमबाह्वोश्च मध्यं पातालमात्रकम् ॥
कङ्कालपिञ्छधृग्घस्तः कक्षतुल्योच्छ्रयो भवेत् ।
भुजान्तान्मणिबन्धान्ताद्द्व्यन्तरं षोडशाङ्गुलम् ॥
अर्कमात्रं तु वा प्रोक्तं पिञ्छदण्डस्तु हस्ततः ।
तत्समं पिञ्छदैर्घ्यं स्याद् देवनासाग्रमात्रकम् ॥
कङ्कालदण्डमानं तु देवस्याधोगलान्तकम् ।
दण्डाग्रे कारयेद्विद्वान् कङ्कालं हि मुनीश्वराः ॥ 20
योषितो देवकन्याः स्युः स्तननाभ्यन्तसीमकाः ।
भूतरूपाणि सर्वाणि त्रिमुखेनेच्छया तथा ॥
एष एव परो देवो नग्नः कङ्कालवर्जितः ।
विकीर्णोन्नतपार्श्वस्थजटामकुटविभूषितः ॥
कटिदेशे प्रकर्तव्यः फणिसूत्रेण वेष्टितः ।
सकपालं च वरदं वामहस्तं तु कल्पयेत् ॥
दिव्यढक्कासमायुक्तं वामस्थमपरं करम् ।
शिखिपिञ्छधरं कुर्यात् सव्यस्थमपरं करम् ॥
व्यालपार्श्वस्थितः कार्यः पूर्वसव्यो मृगाश्रगः ।
सव्यं कोणसमायुक्तमथवा परिकल्पयेत् ॥ 25
कपालहस्तमुक्तं तु नाभिदघ्नं प्रकल्पयेत् ।
नाभेस्तन्मणिबन्धान्तं षोडशाङ्गुल ईरितः ॥
डमरूर्ध्वं तु कर्णान्तं तद्धस्तमणिबन्धनात् ।
कर्णान्तं षोडशैर्मात्रैश्शेषं कङ्कालमुद्भवेत् ॥
भिक्षाटनो हरः प्रोक्तः पृथग् विष्णुयुतो न वा ।
स्थापनं च समासेन वक्ष्येऽहं मुनिपुङ्गवाः ॥
कालः प्राग्वत्समुद्दिष्टस्तद्वदुक्ताङ्कुरक्रिया ।
रत्नन्यासं ततः कृत्वा देवे भूते यथाक्रमात् ॥
जायासु च पृथक्पीठे चैकत्र च गुरूत्तमः ।
अथवा रत्नविन्यासं कृष्णादीनां विसर्जयेत् ॥ 30
नेत्राणां मोक्षणं कृत्वा बेरशुद्धिमतः परम् ।
जलाधिवासनं ग्रामप्रदक्षिणपुरस्सरम् ॥
यागमण्टपमासाद्य पूर्ववत् परिकल्पयेत् ।
तदिगश्राणि वृत्ताभं नवपञ्चैककुण्डकम् ॥
उद्वास्य शिल्पिनं विद्वान् भोजयेत्तद्विशुद्धये ।
पुण्याहं वास्तुहोमं च स्थण्डिलं शयनं पृथक् ॥
स्नपनं कौतुकं तेषां पृथक् कृत्वा तु शाययेत् ।
मध्ये देवं च तद्दक्षे जाया भूतानि वामके ॥
यथावच्छादयेत् सर्वान् पृथग्वस्त्रादिभूषितान् ।
पृथक् कङ्कालदण्डश्चैव शिरोदेशे तु शाययेत् ॥ 35
शक्रशाङ्करयोर्मध्ये न्यसेत् कुम्भं च वर्धनीम् ।
अन्येषां च शिरोदेशे घटं जायासु वर्धनीम् ॥
विन्यस्य गन्धपुष्पाद्यैः पूजयेत् स्वस्वमन्त्रयुक् ।
वीरेशाय नमश्चेति भूतकुम्भे यजेद्गुरुः ॥
नन्दनायै नमश्चेति तद्वर्धन्यां यजेन्मुदा ।
कङ्कालकुम्भे कङ्कालं न्यस्य तस्यादकान्न्यसेत् ॥

तत्वादयश्शिवे प्राग्वद् वीरेशे पुनरुच्यते ।
मूर्तयः प्राग्वदेव स्युः प्रमुखो दुर्मुखस्तथा ॥

प्रमोदश्च तथा मोदो विघ्नराडिति मूर्तिपाः ।
विष्णुकवत् स्यात् कङ्काळे ततो होमं समाचरेत् ॥

कुण्डाग्निसंस्कृतिं कृत्वा समिदाज्यान्नलाजकैः ।
तिलैस्सर्षपेन्द्रकैस्सार्धं साक्षतैर्होममाचरेत् ॥

पलाशखदिराश्वत्थोदुम्बरा दिक्षु संमताः ।
शमीवटाश्च श्रीवृक्षा मायूरा वह्निकोणतः ॥

प्रधानेऽपि पलाशस्स्यात् स च सर्वत्र वा मतः ।
देशिकेन्द्रः प्रधाने तु देवानावाह्य तर्पयेत् ॥

ततो द्वितीयदिवसे देवकुम्भाग्नितर्पणम् ।
पूजितो वस्त्रहेमाद्यैः मूर्तिपैः प्राप्तदक्षिणः ॥

मन्त्रन्यासं ततः कुर्यान्न्यस्त्वा बिम्बपुरो घटान् ।
कुम्भान्मन्तुं समादाय देवस्य हृदि विन्यसेत् ॥

वर्धन्या मनुमादाय तस्य पीठाम्बुजे न्यसेत् ।
अन्येभ्यो बीजमादाय तेषां च हृदि विन्यसेत् ॥

तत्तत्कुम्भजलैः स्नाप्य स्नपनं चोत्सवं महत् ।
नैवेद्यं च प्रतिष्ठान्ते देशिकेन्द्रस्तु कारयेत् ॥

अनुक्तमत्र संग्राह्यं सामान्यस्थापनोक्तवत् ।
एवं यः कुरुते मर्त्यस्स पुण्यां गतिमाप्नुयात् ॥

मध्यसूत्रादिसूत्राणां द्व्यङ्गुलद्व्यङ्गुलं च यत् ।
अङ्गानामपि सर्वेषां तेषां वै संनिवेशनम् ॥

हस्तानामपि संख्या च वस्त्राण्याभरणानि च ।
मुद्राः श्वेतादिवर्णाश्च देवानां संस्थितिस्थिताः ॥

आचार्यशिल्पिकर्तॄणां यथाशोभं च वाञ्छया ।
भवेत्सामान्यमेतद्धि सर्वदेवेषु च द्विजाः ॥

एषां प्रतिष्ठा सर्वत्र बालस्थानान्विता न वा ।
भिक्षाटने च कङ्काळे प्रतिष्ठैवं समीरिता ॥

इति उत्तरकामिकाख्ये महातन्त्रे भिक्षाटनप्रतिष्ठाविधिः द्विपञ्चाशत्तमः पटलः ॥

## बलिभर्तृप्रतिष्ठाविधिः

बलिभर्तुः प्रतिष्ठां तु वक्ष्ये तल्लक्षणं तु वै ।
नित्योत्सवे तु कथितं सूत्राद्यं चेन्दुमौळिवत् ॥

प्रायश्चित्तादिके वाथ सर्वकामार्थसिद्धये ।
नित्योत्सवेऽपि तच्छ्रेष्ठं तन्मन्त्रैश्च विशेषतः ॥

प्रतिष्ठां च समासेन प्रवक्ष्यामि मुनीश्वराः ।
कालोऽङ्कुरक्रिया रत्नन्यासो वै दृष्टिमोचनम् ॥

शुद्धिः प्रदक्षिणं ग्रामप्रमुखीनां जलस्थितिः ।
पूर्वमेवोदितं यस्मात् तदुत्सवं समाचरेत् ॥

मण्टपं कारयेत्तत्र नवपञ्चैककुण्डकम् ।
कुण्डानि वृत्तान्यश्राणि तद्दिगश्राणि वा नयेत् ॥

कुण्डं वृत्तं प्रधानं स्यात्त्रिषु पक्षेषु वै द्विजाः ।
पश्चाच्छिल्पिनमुद्वास्य ब्राह्मणांस्तत्र भोजयेत् ॥



पुण्याहप्रोक्षणं कृत्वा वास्तुहोमं तु कारयेत् ।
जलादुद्धृत्य बिम्बं तु मृदाद्यैः स्नपनं नयेत् ॥
गन्धादिना ततोऽभ्यर्च्य कौतुकं बन्धयेत्ततः ।
शयनं कल्पयेद्वेद्यां तस्यां स्थण्डिलपूर्वकम् ॥
शयने शाययेद्देवं रक्तवस्त्रादिभूषितम् ।
पूर्ववत् स्थापयेत् कुम्भान् परितश्शिवकुम्भकम् ॥
सुवस्त्राद्यं शिरोदेशे सर्वे वस्त्रादिभूषिताः ।
शिवकुम्भे यजेदस्त्रं देवं पाशुपताह्वयम् ॥
तल्लक्षणोक्तरूपं तु ध्यात्वा गन्धादिभिस्तदा ।
हुंफट्क इति मन्त्रेण चतुर्थ्यन्तेन नामतः ॥
दीप्तस्थी पशुपूर्वं च हुं च फण्णम इत्यपि ।
मन्त्रेण वाथ संपूर्णं देवं पाशुपताह्वयम् ॥
आराद्यौकारान्ताश्च स्वरास्सद्यादयो मताः ।
ओंकाराद्याः फडन्ताश्च मन्त्रास्स्युर्हृदयादयः ॥
मन्त्रेण विधिवल्लिङ्गा ओंकाराद्या हृदादयः ।
हृदयादिसमोपेता हुंफडन्ता नमोऽन्तकाः ॥
हृत्पुटाजातमूर्त्या च विद्यादेहाणुनापि वा ।
हुंकारकल्पितेनैव हृदा सम्पुटिते न च ॥

वज्रादीनायुधानष्टौ परितोऽभ्यर्चयेद्गुरुः ।
तत्वतत्त्वेश्वरान्न्यस्त्वा न्यसेन्मूर्तीश्च पूर्ववत् ॥
मूर्तीशांश्च न्यसेद्धीमान्वज्रादीन् देशिकोत्तमः ।
कृत्वा कुण्डेषु संस्कारं संपाद्य च शिवानलम् ॥
समिद्घृतान्नसस्येन्द्रतिललाजसमन्वितम् ।
पूर्वोक्तमूलमन्त्राद्यैर्होमं पूर्वोक्तसंख्यया ॥
तत्त्वमूर्त्यादिमन्त्रैश्च सार्धं कुर्याद्गुरूत्तमः ।
पलाशोदुम्बराश्वत्थवटा इन्द्रादिदिक्षु च ॥
शमीखदिरश्रीवृक्षपिप्पला अग्निकोणतः ।
प्रधानेऽपि पलाशस्स्याद् द्वितीये होममाचरेत् ॥

संपूज्य देशिकादींश्च दक्षिणां दापयेत्ततः ।
प्रतिमाग्रे घटान्न्यस्त्वा तत्कुम्भात्तु मनुं हृदि ॥
न्यसेत् पीठाम्बुजे तस्य परिवारमनुं न्यसेत् ।
स्नपनं चोत्सवं भूरि नैवेद्यं कारयेन्न वा ॥
अनुक्तमत्र सामान्यस्थापनोक्तवदाचरेत् ।
एवमस्त्रप्रतिष्ठां तु यः कुर्यादस्त्रमूर्तिनः ॥
यात्येव च सुख मोक्षमिहापि च परत्र च ।

इति उत्तरकामिकाख्ये महातन्त्रे बलिभर्तृप्रतिष्ठाविधिः
त्रिपञ्चाशत्तमः पटलः ॥

## शरमेशप्रतिष्ठाविधिः

शरमेशप्रतिष्ठां तु वक्ष्ये लक्षणपूर्विकाम् ।
पक्ष्याकारं सुवर्णाभं पक्षद्वयसमन्वितम् ॥
ऊर्ध्वपक्षसमायुक्तं रक्तनेत्रत्रयान्वितम् ।
पादैः सिंहपदाकारैश्चतुर्भिश्च समन्वितम् ॥

सुतीक्ष्णनखसंयुक्तैरूर्ध्वस्थैर्वेदपादकैः ।
दिव्यलाङ्गूलसंयुक्तं सुविकीर्णजटान्वितम् ॥
कन्धरोर्ध्वं नराकारं दिव्यमौळिसमायुतम् ।
सिंहास्यं भीमदंष्ट्रं च भीमविक्रमसंयुतम् ॥

हरन्तं नरसिंहं तु जगत्संहरणोद्यतम् ।
कृताञ्जलिपुटोपेतं निश्चेष्टितमहातनुम् ॥ 5

नम्रदेहं तदूर्ध्वास्यं विष्णुं पद्मदलेक्षणम् ।
पादाभ्यामम्बरस्थाभ्यां कुक्षिस्थाभ्यां च तस्य तु ॥

गगनाभिमुखं देवं कारयेच्छरमेश्वरम् ।
एवं लक्षणमादिष्टं तस्य मन्त्रश्च कथ्यते ॥

अष्टवर्गादिमं बीजं चतुर्दशविभूषितम् ।
षष्ठस्वरसमोपेतं बिन्दुनादसमन्वितम् ॥

शारभं बीजमित्याहुः शरमेश्वर इत्यपि ।
ततो हरिहरस्त्वेवं चतुर्थ्यन्तं पदद्वयम् ॥

आदौ प्रणवसंयुक्तं नमस्कारान्तसंयुतम् ।
योजयेच्छरमेशार्थे पूजादिष्विष्टसिद्धये ॥ 10

कल्पयेदाद्यवर्णेन अङ्गान्यङ्गानि देशिकः ।
वज्रदेहो भवेदाद्यः खादकश्च वियोजकः ॥

मारणो दीर्घहस्तस्तु तीक्ष्णदंष्ट्रो जटाधरः ।
बलिप्रियेण चाष्टौ स्युः प्राग्दिगारभ्य संस्थिताः ॥

पूजायां च प्रतिष्ठादौ क्रमेण परितःस्थिताः ।
स्वनामाद्यक्षरैरेषां मन्त्राणामुद्धृतिर्भवेत् ॥

कुर्याच्छिलादिष्विष्टेन द्रव्येण शरमेश्वरम् ।
प्रतिष्ठां च ततः कुर्याच्छुभलग्नोदयेऽहनि ॥

अङ्कुरार्पणकार्यं तु तद्विधानेन कारयेत् ।
नेत्राणामपि रत्नानां मोक्षणं न्यासमाचरेत् ॥ 15

मृदादिशोधनं ग्रामप्रभृतीनां प्रदक्षिणम् ।
जलाधिवासनं प्राग्वत् पृथक् कुर्याद्धरे हरौ ॥

मण्डपं पूर्ववत् कृत्वा वेदाश्रं नवकुण्डकम् ।
पञ्चाग्न्यायतनोपेतमेकाग्न्यायतनेन वा ॥

स्थपत्युद्वासनं पुण्यतोयसेचनमाचरेत् ।
विप्रभुक्तिं तदुच्छिष्टोद्वासनं मार्जनं पुनः ॥

पुण्याहं वास्तुपूजाग्निकार्यं स्थण्डिलकल्पनम् ।
शयनं स्नपनं प्राग्वद् बन्धनं कौतुकस्य च ॥

पृथग्द्वयोस्समादिष्टं शयनारोहणं नयेत् ।
उदक्पादं यथादेवं पूर्वदिङ्मस्तकं यथा ॥ 20

भिन्नपीठो हरिस्तर्हि वामे तं शाययेत्प्रभोः ।
रक्तवस्त्रेण संवेष्ट्य कुम्भस्थापनमारभेत् ॥

विन्यसेच्छिवकुम्भं च विष्णुकुम्भं च विन्यसेत् ।
ससूत्रं सापिधानं च सवस्त्रं शिरोऽन्तिके ॥

परितोऽष्टौ घटान्न्यस्त्वा स्वर्गवस्त्रादिसंयुतान् ।
ससूत्रान्सोदकान् वज्रदेहाद्यैरप्यधिष्ठितान् ॥

प्रागुक्ताणुस्वरूपज्ञो गन्धाद्यैरर्चयेद्गुरुः ।
हृत्पुटाजातमूर्त्या तानावाह्य सकलीकृतम् ॥

विधाय हृत्पुटेनैव मूलेनावाह्य तं मनुम् ।
शरमेशमनुं न्यस्त्वा यजेद्विष्णौ तदुक्तवत् ॥ 25

मूर्तिमूर्तीश्वरन्यासं कारयेत् प्राग्वदेव हि ।
मूर्तयो वज्रदेहाद्यास्तदीशाना इति स्मृताः ॥

ततो होमं प्रकुर्वीत कृत्वा कुण्डाग्निसंस्कृतिम् ।
समिद्भिरथ पालाशैर्घृतेन चरुणापि च ॥

तिलैर्लाजैश्च सत्येन्द्रैर्मूर्तीशाद्यणुभिर्युतम् ।
पूर्णां हुत्वा द्वितीयेऽह्नि वह्निकुम्भाम्बरार्चनम् ॥



सम्प्राप्तदक्षिणस्तुष्टो गुरुस्संपूजितस्सह ।
मूर्तिपायैर्यथायोग्यं मन्त्रन्यासं समारभेत् ॥

देवेशाग्रे घटान्न्यस्त्वा संकल्प्य स्थण्डिलं गुरुः ।
कुम्भाद् बीजं समादाय शरमेशहृदि न्यसेत् ॥ 30

विष्णुबीजं समादाय नरसिंहहृदि न्यसेत् ।
अन्येभ्यो बीजमादाय पीठाब्जे परितो न्यसेत् ॥

तत्तत्कुम्भोदकैश्चैव स्नापयेत्शरमेश्वरम् ।
स्नपनं कारयित्वा तु नैवेद्यं चोत्सवं नयेत् ॥

एवं देवं प्रतिष्ठाप्य प्रत्यहं तं समर्चयेत् ।
अर्चनं प्राग्वदेव स्यात् किं तु मन्त्रैस्तु शारभैः ॥

स्नपनोत्सवकर्माद्यं तदर्थं विधिनाचरेत् ।
देशिकश्चास्य मन्त्रैस्तान्नाशयेच्छत्रुवर्गिणः ॥

सर्वव्याधिसमुत्पत्तौ मन्त्रेणानेन नाशयेत् ।
वश्याकर्षणविद्वेषमनेन विधिना नयेत् ॥ 35

अनुक्तमत्र संप्राह्यं सामान्यस्थापनोक्तवत् ।
कुर्यादेवं स्थापनं तु यो नरश्शरमेश्वरे ॥

भक्त्या भावनया सार्धं तस्यैवं कल्पयेद् द्विजाः ।
इयत्ता पुण्यसंघस्य भोगान् भुक्त्वेह जन्मनि ॥

वाञ्छितांस्तान् परत्रापि प्राप्नोति पदमैश्वरम् ॥

इति उत्तरकामिकाख्ये महातन्त्रे शरमेशप्रतिष्ठाविधिश्चतुःपञ्चाशत्तमः पटलः ॥

## चण्डेशाद्यनुग्रहप्रतिष्ठाविधिः ॥

अथ चण्डीशनन्दीशविष्ण्वनुग्रहकृत्प्रभोः ।
प्रतिष्ठां संप्रवक्ष्यामि तल्लक्षणपुरस्सरम् ॥

उमया सहितस्याथ चन्द्रशेखरमूर्तिनः ।
वामे वा दक्षिणे वापि कारयेद्देशिकोत्तमः ॥

एवं जानूरुनाभ्यन्तस्तनवक्षोगलास्यगम् ।
सुखासीनं स्थितं वापि कृताञ्जलिपुटान्वितम् ॥

देवेक्षणसमोपेतं मद्भक्तं चण्डनायकम् ।
सर्वाङ्गसुन्दरं कुर्यात् कनिष्ठदशतालतः ॥

माल्याग्रं देववरदे कटकेनेतरेण तु ।
देवशिरसि चण्डस्य माल्या परिवेष्टयेत् ॥ 5

नन्दीश्वरप्रसादे तु विशेषः कश्चिदिष्यते ।
द्विनेत्रं द्विभुजं शान्तं कृताञ्जलिपुटान्वितम् ॥

सुविकीर्णजटोपेतं जटामकुटकान्वितम् ।
आभङ्गसहितं कुर्यादागमश्रवणोन्मुखम् ॥

नन्दीश्वरं प्रसन्नं तं कारयेत्पूर्वमानतः ।
नन्दीशानुग्रहस्त्वेवं तद्वद्विष्णुप्रसादकृत् ॥

हित्वा नन्दीश्वरं तस्मिन् विष्णुं तल्लक्षणान्वितम् ।
सचक्राञ्जलिहस्तं च शङ्खाब्जापरहस्तकम् ॥

कारयेद्देव एष स्याच्चक्रदो विष्णुमूर्तिनः ।
कारयेद्देवमेशान्यप्रसादाभिमुखं शिवम् ॥ 10

इत्थं लक्षणमादिष्टं प्रतिष्ठाविधिरुच्यते ।
वाराथमङ्कुरं रत्नविन्यासमुभयत्र च ॥

नेत्रमोक्षं तथा शुद्धिं पुरादीनां प्रदक्षिणम् ।
तोयाधिवासनं यागमण्टपस्य प्रकल्पनम् ॥

कुण्डानामथ वृत्ताश्रदिगश्राणां तु कल्पनम् ।
नवपञ्चैकसंख्यानां लक्षणैः पूर्ववद्द्विजाः ॥
तक्षकोद्वासनं विप्रभुक्तिं पुण्योदसेचनम् ।
वास्तुहोमं तु वेश्यां तु स्थण्डिलं शयनं पृथक् ॥
स्नपनं कौतुकं चैव देवानां पूर्ववत् पृथक् ।
आरोहणं च शय्यायास्तस्यां च शयनं नयेत् ॥
देवास्त्वनुगृहीता ये भिन्नपीठस्थिता यदि ।
देवेशपादमूले तु तेषां च शयनं नयेत् ॥
देवोत्तमाङ्गदेशे तु शिवकुम्भं च वर्धनीम् ।
अनुगृहीतदेवानां तत्तन्मूर्ध्वेष्टकं मतम् ॥
तत्तद्ध्यायसंसिद्धं संग्राह्यं मुनिपुङ्गवाः ।
कृत्वा कुण्डाग्निसंस्कारं द्रव्यैर्होमं समारभेत् ॥
समिदाज्यान्नलाजैश्च तिलशाल्यक्षतैः क्रमात् ।
सत्पलाशवटप्लक्षोदुम्बरं पूर्वतो भवेत् ॥
शमीखदिरश्रीवृक्षा अश्वत्थो वह्निकोणतः ।
प्रधानस्य पलाशस्स्यात् स च सर्वत्र वा मतः ॥
चण्डनन्दीश्वविष्णूंश्च प्रधाने तर्पयेद्गुरुः ।
निष्कृतौ पूर्णयोपेतं होमकर्म पृथङ्नयेत् ॥
द्वितीये तु ततश्शुद्धो मूर्तिपैस्तत्त्वविद्गुरुः ।
संपूज्योद्धृत्य देवांस्तु कुम्भान् कुण्डेषु पावकान् ॥
सुमुहूर्तेऽथ संप्राप्ते मन्त्रन्यासं समाचरेत् ।
वस्त्रहेमाङ्गुलीयाद्यैः पूजितो मूर्तिपादिभिः ॥
संप्राप्तदशनिष्कादिदक्षिणस्तुष्टधीर्गुरुः ।
कृतस्थण्डिलकाधारान्बिम्बाग्रे तु घटान्न्यसेत् ॥
कुम्भान्मनुं समादाय शिवस्य हृदि विन्यसेत् ।
वर्धन्या मनुमादाय तत्पीठोपरि विन्यसेत् ॥
देवी सहासना चेत्तु तस्या हृदि मनुं न्यसेत् ।
अन्येभ्यो बीजमादाय पीठस्य परितो न्यसेत् ॥
चण्डेशादिषु देवेषु तत्तत्कुम्भान्मनुं न्यसेत् ।
तत्तद्घटोदकैस्तत्तद्देवमप्यभिषेचयेत् ॥
स्नपनं चोत्सवं भूरि नैवेद्यं कारयेन्न वा ।
देवी विभिन्नपीठा चेत् कल्याणं कारयेद्गुरुः ॥
एवं यः कुरुते मर्त्यः सोऽन्ते मोक्षमवाप्नुयात् ।

इति उत्तरकामिकाख्ये महातन्त्रे चण्डेशाद्यनुग्रहप्रतिष्ठाविधिः

पञ्चपञ्चाशत्तमः पटलः ॥

## भक्तानुग्रहदेवस्थापन विधिः

भक्तानुग्रहदेवस्य तल्लक्षणपुरस्सरम् ।
स्थापनं संप्रवक्ष्यामि शृणुत द्विजसत्तमाः ॥
सदाशिवादयो देवाः प्रागेव प्रतिपादिताः ।
त एवानुग्रहपरा भक्तानुग्राहका मताः ॥
देवदानवगन्धर्वमुनयो मनुजादयः ।
पिपीलिकाद्या गजान्ता जङ्गमाः स्थावराश्च ये ॥
तेऽनुग्राह्याः स्मृताश्शास्त्रेऽनुग्रहो बहुधा मतः ।
दीक्षाव्याख्यानसंस्पर्शावलोकोक्तिमुखो द्विजाः ॥
शिवाधिष्ठितदेहस्तु मरणं याति यो नरः ।
स नरः शिव एव स्यात् सर्वपापबहिष्कृतः ॥



स्यादुत्क्रान्तिकाले तु स्वेष्टलिङ्गं तु संस्पृशन् ।
प्राणमोक्षं च कुर्याद्यः स शिवो नात्र संशयः ॥
सुसंस्पृष्टोकगोत्रादिदेहं कृत्वा तु साकृतिम् ।
आसीनां वा स्थितां वापि शयितां शुभलक्षणाम् ॥
कृताञ्जलिपुटोपेतां प्रतिमां लोहपूर्वकैः ।
द्रव्यैस्सदाशिवाद्यां तु कृत्वा संस्थापयेत्सुधीः ॥
तत्पीठानथ तद्देवाकृतिं कुर्याद् गुरुस्सुधीः ।
भक्तानुग्रहदेवस्य लक्षणं त्वेवमीरितम् ॥
संस्थापनमथो वक्ष्ये श्रूयतां द्विजसत्तमाः ।
कालः प्राक्समुद्दिष्टस्तथैवाङ्कुरकर्म च ॥
रत्नन्यासं तथैवाक्षिमोक्षणं बेरशोधनम् ।
ग्रामप्रदक्षिणं वारिमध्यमे त्वधिवासनम् ॥
प्रतिष्ठामण्टपाद्यं यत् पूर्वोक्तविधिनाचरेत् ।
कुण्डानि कारयेत्तत्र नवपञ्चैकसंख्यया ॥
चतुरश्राणि कार्याणि प्रधानं वृत्तमेव वा ।
तक्षकोद्वासनं विप्रभुक्तिं पुण्योदसेचनम् ॥
स्थण्डिलं स्नपनं शय्यां तद्वत् कौतुकबन्धनम् ।
शयनारोहणं कुम्भस्थापनं पूर्ववन्नयेत् ॥
तत्पादे भक्तकुम्भं तु तत्तद्ध्यानसमन्वितम् ।
आत्ममन्त्रसमोपेतं विधेश्वरघटावृतम् ॥
तद्दन्मूर्त्यादिविन्यासं प्रागुक्तविधिना नयेत् ।
अग्निकुण्डादिसंस्कारं कृत्वा होमं समाचरेत् ॥
समिदाज्यान्नलाजैश्च तिलैर्मुद्गयवैर्द्विजाः ।
पलाशोदुम्बराश्वत्थन्यग्रोधाः प्राग्दिगादितः ॥
शम्यपामार्गश्रीवृक्षप्लक्षाश्चाग्नेयगोचराः ।
प्रधाने तु पलाशस्स्यात् स च सर्वत्र वा मतः ॥
ततो द्वितीयदिवसे कृतकुम्भाग्निपूजनः ।
पूजितो वस्त्रहेमाद्यैर्मूर्तिपाद्यैस्समन्वितः ॥
संप्राप्तदशनिष्कादिदक्षिणस्तुष्टधीर्गुरुः ।
मन्त्रन्यासं ततः कुर्यान्न्यस्त्वा बिम्बपुरो घटान् ॥
कुम्भान्मन्त्रं समादाय देवस्य हृदये न्यसेत् ।
देव्या देवस्समायुक्तो यदि देवीमनुं गुरुः ॥
विन्यसेद्धृदये देव्या नो चेत् पीठे तु विन्यसेत् ।
ततः कुम्भजलेनाथ तौ च संस्नापयेत्सदा ॥
भक्तकुम्भस्थबीजं तु तद्भक्तहृदये न्यसेत् ।
आदाय बीजान्यन्येभ्यः पीठस्य परितो न्यसेत् ॥
तत्कुम्भस्थजलेनापि स्नापयेत्पीठमादरात् ।
स्नपनं कारयेदन्ते नैवेद्यं दापयेत्ततः ॥
उत्सवं तु तदन्ते स्यादेतत् सामान्यमीरितम् ।
विशेषस्त्रिपुरघ्नादिप्रतिष्ठाविधिचोदितः ॥
तथा भक्तप्रतिष्ठोक्तविधिना च समन्वितः ।
एवं यः कुरुते मर्त्यस्स पुण्यां गतिमाप्नुयात् ॥
पुत्रार्थी लभते पुत्रान् धनार्थी धनमाप्नुयात् ।
देवार्थी देवमाप्नोति मोक्षार्थी मोक्षमाप्नुयात् ॥
यान्यान् कामयते भोगांस्तान्सर्वानाप्नुयान्नरः ।
मृतमुद्दिश्य यः कुर्यात्तत्पुत्रः पौत्र एव वा ॥
जीवन्नेवाथवा कुर्यादात्मानं शिवलंशितम् ।

इति उत्तरकामिकाख्ये महातन्त्रे भक्तानुग्रहप्रतिष्ठाविधिः

षट्पञ्चाशत्तमः पटलः ॥

## कालारिकामान्तकप्रतिष्ठाविधिः

वक्ष्ये कालारिकामान्तप्रतिष्ठां लक्षणान्विताम् ।
चतुर्भुजस्त्रिनेत्रश्च कार्दमकुटान्वितः ॥

कुञ्चितासव्यपादस्तु व्याघ्रचर्माम्बरान्वितः ।
ततस्तन्दृग्भ्रूक्षाक्षस्त्रितीक्ष्णदंष्ट्रोग्रनासिकः ॥

दक्षहस्तस्थशूलो वा वामहस्तस्थसूचिकः ।
दक्षहस्तस्थरज्जुर्नागपाशोऽथ वामगः ॥

कटाक्षदृष्टिर्देवस्य कालदेवे व्यवस्थिता ।
शूलं ह्यधोमुखं प्रोक्तं कालकण्ठस्थमेव वा ॥

सूचिमुद्रासमोपेतकरोच्चं नाभिसीमकम् ।
तद्धस्तमणिबन्धाच्च पार्श्वमध्यं कलाङ्गुलम् ॥ 5

कर्णान्तशूलहस्ताग्रं तद्धस्तमणिबन्धनात् ।
कर्णाग्रान्तं द्वितालं स्याद्दोस्समं परहस्तकम् ॥

कर्णाग्रं मणिबन्धान्तं यवं चेति प्रकीर्तितम् ।
मूर्ध्नो दक्षकरान्तिस्यं वामनासापुटाद्यवः ॥

नाभेस्सव्ये च वामाङ्घ्रेरग्रे सूत्रं पुरो भवेत् ।
तत्सूत्रान्मेढ्रमूलस्य वामभागोत्तरो मतः ॥

स्थितजान्वन्तरं सूत्रादामसूत्रमुदीरितम् ।
अथोद्धृताङ्घ्रिजानूर्ध्वं कटयग्रसममेव हि ॥

जङ्घामध्यात्समोच्चं तत्तलाग्रान्तं स्मृतिः स्मृता ।
दक्षपादस्य पार्ष्ण्यग्रं तिथिःस्यात्सूत्रदक्षिणे ॥ 10

परहस्ताच्च कटकौ शूलहस्तस्तथैव च ।
तत्सूत्राद्दक्षिणे नाभिर्विश्वेश्वरयवं भवेत् ॥

सूत्रादन्वितजान्वन्तो गुणवक्त्रयङ्गुलो भवेत् ।
उद्धृतस्य तलस्याग्राज्जङ्घायाः स्मृतिमात्रकम् ॥

कालं तु पतितं कुर्यात्तं प्लुताक्षं तु मूर्च्छितम् ।
उद्गिरद्रक्तवक्त्रं च तथा लोहितमूर्धजम् ॥

शूलपाशकरं चैव विकीर्णचरणान्वितम् ।
दंष्ट्राकरालवदनं रक्तरक्तलोचनम् ॥

देवस्य नाभिमानेन नवतालेन कारयेत् ।
कृताञ्जलिपुटं चापि कारयेत्कालमादरात् ॥ 15

अथवाथ हरालिङ्गान्निर्गतात् पतितं नयेत् ।
कालान्तलिङ्गमानाद्यं लिङ्गोद्भूतोक्तवन्नयेत् ॥

त्रिभङ्गेन स्थितश्चान्योऽधोमुखो भस्मविग्रहः ।
बद्धपुष्पाञ्जलिः पार्श्वे मार्कण्डेयः स्थितो वरः ॥

कर्तव्यः कालतो भीतस्सन्तुष्टो तु हरेण तु ।
मार्कण्डेयोऽनुमानेन युक्तो वा वर्जितस्तु वा ॥

अपस्मारशरीरस्थचरणेन युतो न वा ।
कालारिरेवमाख्यातो मन्मथान्तक उच्यते ॥

अग्रे तु दक्षिणामूर्तेर्योगनिष्ठस्य मन्मथम् ।
कुर्यात्तु पतितं दृष्टिपातादेव च तत्क्षणात् ॥ 20

भक्त्वा दशांशं देवोच्चमेकाद्याः सप्त भागकाः ।
मन्मथोत्सेध उद्दिष्टः स तु हेमविभूषितः ॥

शुद्धजाम्बूनदप्रख्यः पुष्पस्त्रेषुसंयुतः ।
मीनकेतुस्तथैवेक्षुकार्मुकाकृतिसंयुतः ॥

देवभागवसन्ताख्यमित्रयुक्तोऽतिसुन्दरः ।
उन्मिनी तापिनी चैव वेदिनी द्राविणी तथा ॥

मारिणी तु शराख्याः स्युर्धनुर्वामे शराः परे ।
मन्मथो मित्रयुक्तो वायुतो वैकशरेण तु ॥ 24



इत्थं लक्षणमाख्यातं प्रतिष्ठाविधिरुच्यते ।
बाराद्यमङ्कुरं यागमण्टपं पूर्ववन्नयेत् ॥ 25

कुण्डानि मण्टपे कुर्याद् प्रशस्तैकसंख्यया ।
दिग्गताश्राणि वृत्तानि चतुरश्राणि वा द्विजाः ॥
रत्नन्यासाक्षिमोक्षौ च बेरशुद्धिमनन्तरम् ।

ग्रामप्रदक्षिणं तोयाधिवासं पूर्ववद्गुरुः ॥
देवे च काले कामे च कारयेत्तु पृथक् पृथक् ।

वेद्यूर्ध्वे स्थण्डिले चैव शयनं स्नपनं पृथक् ॥

देवस्य पाददेशे तु शय्या स्यात् कालकामयोः ।
कौतुकं शयनारोहं पूर्ववत् पृथगाचरेत् ॥

ईशकुम्भं शिरोदेशे वर्धनीं तस्य चोत्तरे ।
कालकुम्भं च तन्मूर्ध्नः प्रदेशे तन्मनुं स्मरन् ॥ 30

कामश्चेत्तच्छिरोदेशे वस्त्राद्याढ्यं घटं न्यसेत्
मित्राभ्यां संयुतश्चेत्तु तयोश्च कलशद्वयम् ॥

कामस्य पार्श्वयोः कलशशय्याशयितयोरपि ।
देवभागवसन्ताख्ययुक्तयोर्मित्रयोर्गुरुः ॥

विन्यसेद्वस्त्रहेमाढ्यं पूर्ववत् परितो घटान् ।
विद्येश्वरात्मकान्न्यस्य यजेद् गन्धादिभिस्ततः ॥

तत्रेश्वरादिविन्यासं कृत्वा होमं समाचरेत् ।
तत्शाखाः पूर्ववद्देवे कामे तस्य यथोदितम् ॥

कालस्य पञ्चमूर्तीस्तु मूर्तीशानपि विन्यसेत् ।
आत्मविद्याशिवाख्यानां तत्त्वानां व्याप्तिरिष्यते ॥

शब्दप्रकृतिकालान्तं तदीशानां तथैव हि ।
मूर्तयः प्राग्वदुद्दिष्टा वसन्तो ग्रीष्मसंज्ञकः ॥

प्रावृट् शरच्च हेमन्त इति मूर्तीश्वरा मताः ।
कृत्वा कुण्डाग्निसंस्कारं समिद्घृतचरूंस्तिलान् ॥

अक्षतांश्च गुळं लाजान्सर्षपं च हुनेत् क्रमात् ।
पलाशोदुम्बराश्वत्थवटाः प्रागादिदिक्षु च ॥

शमीखदिरमायूरश्रीवृक्षा वह्निकोणतः ।
पलाशस्तु प्रधाने स्यात् स तु सर्वत्र वा मतः ॥

कालं कामं प्रधाने तु कल्पयेद्देशिकः सुधीः ।
नीत्वैवं रात्रिशेषं तु प्रभाते विमले ततः ॥ 40

देशिकस्तु विशुद्धात्मा संपूज्योद्धृतबिम्बकः ।
कुम्भान् कुण्डस्थवह्निं च मन्त्रन्यासं गुरूत्तमः ॥

वस्त्रहेमाङ्गुलीयाद्यैः पूजितो मूर्तिपादिभिः ।
संप्राप्तदक्षिणः पश्चात् सुमुहूर्ते सुलग्नके ॥

कुंभान् बिम्बपुरो न्यस्य शिवकुम्भं मनुं स्मरन् ।
शिरस्य चादरान्न्यस्य तत्पीठे करकं न्यसेत् ॥

वैधेशकुम्भबीजानि तत्पीठे परितो न्यसेत् ।
अन्येभ्यो मनुमादाय तेषां तेषां हृदि न्यसेत् ॥

स्नपनं भूरि नैवेद्यं चोत्सवं कारयेन्न वा ।
अनुक्तमत्र सामान्यस्थापनोक्तवदाचरेत् ॥ 45

एवं यः कुरुते मर्त्यो भोगान् भुक्त्वा स्ववाञ्छितान् ।
देहान्ते पुनरीशानं प्राप्नोत्यत्र न संशयः ॥

इति उत्तरकामिकाख्ये महातन्त्रे कालारिकामान्तकप्रतिष्ठाविधिः

### सप्तपञ्चाशत्तमः पटलः

## कल्याणमूर्तिप्रतिष्ठाविधिः ॥

वक्ष्ये कल्याणमूर्तेस्तु प्रतिष्ठां लक्षणान्विताम् ।
जटामकुटसंयुक्तश्चन्द्रार्धकृतशेखरः ॥

त्रिदृक् चतुर्भुजश्चैव नवयौवनगर्वितः ।
समभङ्गयुतो देवः स्थानकः संप्रकीर्तितः ॥

कुञ्चितः सव्यपादस्तु स्थितसव्येतराङ्घ्रिकः ।
इन्दुशेखरहस्ताभपरहस्तद्वयान्वितः ॥

जलसंग्रहणे योग्यवरवामकरान्वितः ।
स्वदक्षिणगृहीतो वादक्षहस्तः प्रसन्नधीः ॥

नासाग्राल्लम्बयेत्सूत्रं स्तनमध्यात्तु दक्षिणे ।
नाभिमध्यात्तु वामे च दक्षिणे बहिरेव च ॥ 5

एकैकामङ्गुलं नीत्वा नाभिसूत्रसमं भवेत् : ।
वरहस्तस्य पृष्ठोर्ध्वे तन्नाहमणिबन्धयोः ॥

अन्तरं स्यात्तथैकोनविंशतिर्बाहुमध्यमात् ।
पार्श्वान्तं रसमात्रं स्यादन्तरं मुनिपुङ्गवाः ॥

मेढ्रमूलसमं दक्षकटकस्यास्यलम्बनम् ।
नाभेस्तु मणिबन्धान्तं सूर्याङ्गुलमितीरितम् ॥

तद्बाहुमध्यात् पार्श्वान्तं शराङ्गुलमिति स्मृतम् ।
पादाङ्गुष्ठद्वयोर्मध्यं मुखपार्ष्णिद्वयान्तरम् ॥

सूत्रात्तु जानुनो मध्यं कलया परिकीर्तितम् ।
अर्धेन्दुमौलिवध्वान्यहस्तयोरन्तरं मतम् ॥ 10

पूर्ववत्कथितं देव्या मानं विप्रोत्तमास्त्विह ।
देवी दृगास्यचिबुककक्षचूचुकमानका ।

तद्देव्यपरभागस्था श्रीदेवी सर्वलक्षणैः ।
युक्ता देवीकटिस्पृष्टकराभ्यामपि संयुता ।

श्रीदेवीमध्यमकांशेस्तद्वन्नाभिभुजान्तरम् ।
पादाङ्गुष्ठद्वयोर्मध्यं भवेदष्टादशाङ्गुलम् ॥

रसाङ्गुलान्तरे पार्ष्ण्योः श्रीदेव्येवं प्रकीर्तिता ।
देवोच्चदशभागैकभागादेकादशावधि ॥

भागमानयुतः श्यामः किरीटमकुटान्वितः ।
गृहीतशङ्खचक्रश्च हस्ताभ्यां धृतयापि च ॥ 15

तोयकुण्डिकयोपेतो विष्णुरेष उदाहृतः ।
नासाग्रात् स्थितपादस्य चाङ्गुष्ठान्तं विलम्बयेत् ॥

तन्मूलान्नाभिमध्यं तु वेदमात्रमिति स्मृतम् ।
कुण्डिकोत्सेधविस्तारौ तालमूलाङ्गुलौ मतौ ॥

तन्नालोत्सेधविस्तारौ कलया कोलकेन च ।
आस्यं पञ्चाङ्गुलं प्रोक्तं नासिकोच्चं द्विकोलकम् ॥

तन्मूलं तु कला चाग्रं तस्य वक्राकृतिर्भवेत् ।
एकाङ्गुलं तत्पदोच्चं तन्मूलाग्रनतिस्त्रिभिः ॥

पञ्चभिश्च हरेर्वामकरपल्लवसंस्थितिः ।
तदूर्ध्वे दक्षिणं हस्तं धारापाताय कल्पयेत् ॥ 20

कुण्डिकामूलहस्तोच्चं नाभिसूत्रसमं भवेत् ।
नाभेस्तु मणिबन्धान्तं धातुमात्रमिति स्मृतम् ॥

तदन्यमणिबन्धात्तु सप्तभिश्चूचुकान्तकम् ।
वरदकटकौ स्यातां वामेतरकरावुभौ ॥



[illegible]मानेन ब्रह्माणमपि कारयेत् ।
[illegible] चतुर्बाहुं जटामकुटमण्डितम् ॥

[illegible] प्रसन्नं तं कुङ्कुमक्षोदसन्निभम् ।
[illegible]वयोपेतं सोपवीतोत्तरीयकम् ॥

[illegible]रकरावूर्ध्वौ कमण्डल्वक्षधारकौ ।
[illegible]करौ पूर्वौ स्यातां तौ दक्षिणेतरौ ॥ 25

[illegible]किरीटोपेतावन्यौ तु कटकामुखौ ।
[illegible] ललाटनासाग्रमध्यमे नाभिगुल्फयोः ॥

[illegible]वर्तं ततो नाभेर्द्व्यन्तरं तु दशांशकम् ।
[illegible]ङ्गुष्ठमूलान्तान्नाभेर्वसुदशाङ्गुलम् ॥

[illegible] चूचुकान्तं स्यान्नाभ्यन्तं मणिबन्धकम् ।
[illegible] विस्तृतं स्याद् बाहुपार्श्वान्तकं रसैः ॥

[illegible]कायसमं जान्वोरन्तरं समुदाहृतम् ।
[illegible]मिति स्यातं तथा पद्मासनस्थितम् ॥

[illegible]ङ्गुलमानेन द्वात्रिंशत्यङ्गुलो भवेत् ।
[illegible]कुण्डस्य विष्कम्भस्त्रिमेखलयुतस्य च ॥ 30

[illegible]काङ्गुला प्रोक्ता प्रत्येकं मुनिपुङ्गवाः ।
[illegible]ङ्गुष्ठविस्तारदैर्घ्या सा सप्तजिह्वकः ॥

[illegible] मध्यगुणो वाग्निः कुण्डमध्यस्थितः स्वयम् ।
[illegible]सूत्राणां प्रमाणं चान्तरं तु यत् ॥

[illegible]हस्तगदानामन्याङ्गानामिहोच्यते ।
[illegible] नतिश्चापि संकोचो निर्गमोऽपि वा ॥

[illegible]दिशस्त्राणां संग्रहे संस्थितिस्त्वियम् ।
[illegible]णां नियमश्चापि सर्वशास्त्रप्रचोदितः ॥



दृष्टान्तमात्रतस्सर्वशास्त्रेषु प्रतिपादितः ।
भूषणानां च सर्वेषां वामदक्षिणभेदतः ॥ 35

दर्शनं सर्ववेराणां सर्वेषां द्विजसत्तमाः ।
देवीनामेवमेव स्यान्नरादीनां विशेषतः ॥

इत्थं लक्षणमाख्यातं प्रतिष्ठाविधिरुच्यते ।
संभाव्य पूर्ववत्कालं प्राग्वत् कृत्वाङ्कुरार्पणम् ॥

देवस्य सव्ये ब्रह्माणमुत्तरे विष्णुमेव च ।
गौर्याश्च दक्षिणे लक्ष्मीं विन्यसेद्देशिकोत्तमः ॥

नवरत्नं न्यसेत्पश्चाद्देवेशे च हरावपि ।
शिष्टानां ब्रह्मगौरीश्रीदेवीनां कनकं न्यसेत् ॥

दृङ्मोक्षणं ततः कृत्वा तदध्यायोक्तवर्त्मना ।
वेरशुद्धिं पुरग्रामप्रभृतीनां प्रदक्षिणम् ॥ 40

तोयेऽधिवासयेद्देवं मध्ये तद्दक्षवामयोः ।
ब्रह्मविष्णू तु तौ ब्रह्मपार्श्वयोरम्बिकां श्रियम् ॥

यागमण्डपमासाद्य पूर्ववत्परिकल्पितम् ।
पूर्वेशोत्तरकाष्ठासु स्नानवेदिकयान्वितम् ॥

अस्य पूर्वेयपाश्येन्दुस्थाने श्रेष्ठस्तु मण्डपः ।
योन्या भनवपञ्चैककुण्डैरपि समन्वितः ॥

स्नानश्वभ्रत्रयोपेतो देवगः पूर्ववदीरितः ।
देवस्य मण्डपे चापि कुण्डानि नवसंख्यया ॥

पञ्चैकसंख्यया वापि चतुरश्रनिभानि वा ।
दिगश्राण्यथ वृत्तानि कल्पयेद् कल्पवित्तमः ॥ 45

उद्वास्य शिखिनं पश्चाद् विप्रान् संभोजयेत्ततः ।
पुण्याहं वास्तुहोमं च स्थण्डिलं शयनं तथा ॥

स्नपनं केशगौरीश्रीदेवीनां कौतुकं पृथक् ।
शयने शाययेद्देवं तस्य वामे च दक्षिणे ॥

कृष्णं चैवाब्जजं भिन्नशय्यायां शाययेद्गुरुः ।
देव्यास्तु मण्डपे देवीं शाययेद्दक्षिणे श्रियम् ॥

उत्तरे शाययेद्वह्निं संकल्प्य शयनं पृथक् ।
रक्तेन वाससा देवं देवीं पीतेन केशवम् ॥

कृष्णेन पद्मां शुभ्रेण तद्वर्णेन पितामहम् ।
आचार्याःसंगृहीतव्याः प्रतिमण्डपमुत्तमाः ॥ 50

गुरवः प्रतिदेवं वा संप्राप्ता मुनिपुङ्गवाः ।
देवोत्तमाङ्गदेशे तु शिवकुम्भं च वर्धनीम् ॥

ब्रह्मविष्णोश्शिरोदेशे विन्यसेत्तु घटद्वयम् ।
परितोऽष्टौ घटान्न्यस्त्वा विद्येशाधिष्ठितान्न्यसेत् ॥

देवीश्रीपावकानां तु शिरोदेशे घटत्रयम् ।
वामाद्यधिष्ठितानष्ट कुम्भांश्च परितोन्यसेत् ॥

तल्लक्षणोदिताकारध्यानयुक्तः स्वतन्त्रयुक् ।
यजेद् गन्धादिभिर्देवान् नैवेद्यान्तैः पृथक् पृथक् ॥

तत्त्वमूर्त्यादिविन्यासं कारयेत्पूर्ववत् प्रभोः ।
अन्येषां तत्तदध्यायप्रोक्तांस्तत्त्वादिकान्न्यसेत् ॥ 55

ततो होमः प्रकर्तव्यः कृत्वा कुण्डाग्निसंस्कृतिम् ।
समिदाज्यान्नलाजैश्च तिलसर्षपमुद्गकैः ॥

पलाशोदुम्बराश्वत्थवटाः पूर्वादिदिक्षु च ।
शम्यपामार्गश्रीवृक्षमायूरा वह्निकोणतः ॥

प्रधाने तु पलाशस्स्यात् सर्वत्रैव च वा मतः ।
प्रत्येकं पूर्ववद्धुत्वा पूर्णान्ते देशिकोत्तमः ॥

स्वगृहे तत्प्रदेशे वा स्वपेदायासशान्तये ।
प्रभाते कृतनित्यस्तु कर्ता संपूजयेद्गुरुम् ॥

वस्त्रहेमाङ्गुलीयाद्यैर्मूर्तिपाद्यैस्समन्वितम् ।
तदन्ते दक्षिणां दत्त्वा पञ्चनिष्कादिनिर्मिताम् ॥

प्रतिमाग्रे घटान्न्यस्त्वा कुम्भाद्बीजं तु विन्यसेत् ।
वर्धन्या बीजमादाय देवीहृदयमध्यमे ॥

सहजा चेदुमादेवी भिन्ना चेत्पीठमध्यमे ।
भिन्नपीठाथवा देवी तद्वत्वं वा मनुं न्यसेत् ॥

अन्येभ्यो बीजमादाय पीठस्य परितो न्यसेत् ।
संपूज्य स्नपनं कुर्याद्देवोक्तवदर्चयेत् ॥

दत्त्वा नैवेद्यमन्ते तु प्रतिष्ठोत्सवमाचरेत् ।
कश्चिदस्मिन्विशेषोऽस्ति श्रूयतां द्विजसत्तमाः ॥

सदाशिवादिदेवानां देवी यस्य यथा मता ।
तथा विधेया सा देवी स्वतन्त्रे देवसद्मनि ॥

प्रासादमण्डपादीनां बाह्ये संस्थापिता यदा ।
तेषां हस्तादिविन्यासः स्वस्वपूर्वादिदेशतः ॥

यथा वा लभते शोभा बलं तेषां यथा भवेत् ।
तेषां देव्यश्च तत्पार्श्वे कर्तव्या वा न वा मताः ॥

स्वतन्त्रे सर्वथा कार्या वृषवाहनकादिषु ।
दक्षिणेशादिदेवानां देव्यो न क्वापि संमताः ॥

प्रासादभित्तिदेवानां प्रतिष्ठा भिन्नगा न वा ।
एवं मर्त्योऽपि यः कुर्याद्वाञ्छितं फलमाप्नुयात् ॥

इति उत्तरकामिकाख्ये महातन्त्रे कल्याणमूर्तिप्रतिष्ठाविधिरष्टपञ्चाशत्तमः पटलः



## कल्याणकर्मविधिः

...कल्याणकर्मापि सर्वदेवे सनातने ।
...मुहूर्ते तु तद्दिने वा परे दिने ॥

...ऽह्नि चतुर्थे वा दिवाकालेऽर्धरात्रके ।
... मण्डपे वेष्टदेशे गोमयलेपिते ॥

...डलं तत्र संकल्प्य सितवस्त्रोत्तरच्छदम् ।
...त्र देवेशं भूषितं भूषणार्हकैः ॥

...पटहाशब्दच्छत्रचामरदर्पणैः ।
...दीपैरानीतं शिबिकादिभिः ॥

...तत्पुरः कृत्वा स्थण्डिलं सिकतादिभिः ।
...ण्डिलयोर्मध्ये स्थापयेद्वह्निमूर्तिनम् ॥ 5

... वामभागेऽब्जं सौम्यास्यं दक्षिणाननम् ।
... तत्सव्यभागे तु वस्त्राभरणभूषितम् ॥

...चमनं दत्त्वा सदशं चाम्बरद्वयम् ।
...च्छादनोत्तरीयार्थं गुरुर्दद्यात् प्रभोर्हृदा ॥

...लेऽग्निं विनिक्षिप्य पञ्चसंस्कारमाचरेत् ।
...ङ्गं शिवं चेष्ट्वा समिदाज्यान्नकैस्सह ॥

...र्णाहुतिं तदा दत्त्वा सर्वाभरणसंयुताम् ।
...रीश्वरसव्ये तु हृदा संस्थाप्य देशिकः ॥

...चमनं चार्घ्यं दद्यात्तेनैव मन्त्रतः ।
...पा मङ्गलसूत्रं तु दद्याद्धृदयमन्त्रतः ॥ 10

...च्छादनोत्तरीयार्थं वस्त्रयुग्मं च दापयेत् ।
... पार्श्वे न्यसेल्लक्ष्मीं देव्यास्सर्वाङ्गसुन्दरीम् ॥

...तुकं बन्धयेद्देवदेव्योस्सर्वात्मना गुरुः ।
...वद्विजकुलोद्भूतस्समधीतशिवागमः ॥

सोष्णीषस्सोत्तरीयश्च धृतपञ्चाङ्गभूषणः ।
अनेन गुरुणादिष्टो गुरुरन्यः प्रसन्नधीः ॥

वस्त्रद्वयाङ्गुलीयस्सन् निजदेहं तु विष्णुवत् ।
ध्यात्वोदकं हृदा दद्यात् कराभ्यां करकेण च ॥

शैवेऽपरे करे भस्म पश्चाद्द्वयाद्वयोरपि ।
पुण्याहं वाचयेत्पश्चात् सूक्तवेदध्वनीनपि ॥ 15

समिधः षोडशैवाग्नौ शिवेनाङ्गैश्च तर्पयेत् ।
गुडदुग्धाज्यसंमिश्रं मधुपर्कं हृदा प्रभोः ॥

दद्यादस्त्रेण चाचान्तं पुनराज्येन वै हृदा ।
हुत्वा षोडशसंख्यातं तत्तत्त्वाज्येन षोडश ॥

नैवेद्यं सोपदंशं तु दत्त्वा शान्तिं च वै हृदा ।
ताम्बूलमपि तेनैव स्तुत्वा परमकारणम् ॥

त्रिंशद्दर्भमितं कृत्वा ग्रन्थियुक्तं द्वितालकम् ।
शिवहस्तमिति ध्यात्वा गौर्या हृदि हृदा न्यसेत् ॥

तस्माद्दक्षिणकर्णे तु बीजमुख्यं जपेद्गुरुः ।
ततो वामेऽश्म संस्थाप्य शालिस्थण्डिलकोपरि ॥ 20

पूर्वोक्तशिवहस्तेन देव्या दक्षिणपत्तलम् ।
संगृह्य विन्यसेत् तस्मिन्नश्मन्येव हृदा गुरुः ॥

उग्गीयाद्यैस्ततो विष्णुं तोषयेदीश्वराज्ञया ।
प्राग्दर्भस्य हस्तस्य कुर्वैवाथ चतुष्टयम् ॥

शिवहस्तद्वयं देव्या हस्तद्वयमिति स्मरेत् ।
ततश्शिवाग्निं प्रज्वाल्य हस्तैस्तैस्तु विनिक्षिपेत् ॥

अतीव पक्वान्लाजान्शुद्धान्नस्त्रेण शोधितान् ।
देशिकस्य तथान्यस्य साङ्गुलीयकरेण च ॥

प्रदद्य हृदयेनैव तस्मिन्नग्नौ शिवाणुना ।
अग्नेः प्रदक्षिणं कृत्वा संस्पृश्याश्म ततो गुरुः ॥ 25

द्वितीयं लाजदानं च प्रदक्षिणमनुव्रजेत् ।
कृत्वैवमपरं चापि व्याहृतिं जुहुयात्ततः ॥

शतमष्टोत्तरं हुत्वा पूर्णां चान्ते शिवेन तु ।
विसृज्य पावकस्थं तं शिवं साङ्गं तु पूर्ववत् ॥

शिवाग्निं च विसृज्याथ तद् भस्म च विसर्जयेत् ।
संपूज्य पुष्कलैर्देवान् गन्धपुष्पस्रगादिभिः ॥

ततश्चतुर्थदिवसे चतुर्थं कर्म कारयेत् ।
तद्दिने वापरे वापि दिवाकालेऽथवा निशि ॥

समिदाज्यान्नकैरग्नौ पञ्चसंस्कारसंस्कृते ।
शिवेनैव शतं चाङ्गैः प्रत्येकं दशकं हुनेत् ॥ 30

अघोरास्त्रं शतं हुत्वा पूर्णां दद्याच्छिवाणुना ।
शयनं चर्मजाद्यैर्वा पञ्चवस्त्रैस्तु वा नयेत् ॥

वर्मणा तच्च संपूज्य नवखट्वोपरि स्थितम् ।
दम्पती तत्र विन्यस्य चापूपाद्यैस्तु तोषयेत् ॥

स्नपनं कारयेन्नो वा तदन्ते तु शिवोत्सवम् ।
चलं चेदचलं चेत्तु स्थापयेत्तु सहासने ॥

देवं देवीं श्रियं विद्वान् वह्निं तत्पुरतो नयेत् ।
वह्नेर्वामेऽप्यवामेऽञ्जं हरिं वा विपरीततः ॥

एवमेवान्यदेवानां कर्म वैवाह्यमाचरेत् ।
भिन्नपीठाम्बिकानां तु मूललिङ्गस्य च द्विजाः ॥

किं तु श्रीहरिवेराभ्यां मङ्गवेरेण वोज्झितम् ।
गन्धाद्यैः स्थण्डिले तत्र तानभ्यर्च्यैव कारयेत् ॥

मूललिङ्गस्य चोद्वाहे गर्भागारात्तु मण्डपे ।
विन्यस्य स्थण्डिले देवीं कर्म वैवाहिकं नयेत् ॥

प्रतिष्ठाकर्म यः कुर्याद्देवं कल्याणमूर्तिनः ।
स्वबन्धुजनवर्गैस्तु सर्वैरेतैरतन्द्रितः ॥

आयुः श्रीकीर्तिसंयुक्तः पुत्रपौत्रादिसंयुतः ।
इह लोके सुखं प्राप्य नृपाणामपि दुर्लभम् ॥

गच्छेत्स्वदेहपातान्ते शैवं स्थानमनुत्तमम् ।
यद्गत्वा न निवर्तन्ते मम भक्ता द्विजोत्तमाः ॥

इति उत्तरकामिकाख्ये महातन्त्रे कल्याणकर्मविधिरेकोनषष्टितमः पटलः ॥

## विष्णूमार्धप्रतिष्ठाविधिः

विष्णूमार्धप्रतिष्ठां तु वक्ष्ये तल्लक्षणान्वितम् ।
द्रव्यैश्शिलादिभिः कुर्यात् प्रतिमां तु विशेषतः ॥ 1

उमार्धं वामभागं तु हरार्धं दक्षिणं वपुः ।
सजटामकुटं दक्षे शश्यर्धाङ्कितमग्रजाः ॥

करण्डमकुटं वाममलकेन समन्वितम् ।
ललाटदक्षिणे भागे नयनार्धेन संयुतम् ॥

पत्रं तु वामकर्णे स्याद्वालिकेनापि संयुतम् ।
सनक्रकुण्डलं सव्ये तं विनाथाथ कारयेत् ॥

सव्ये टङ्काभयौ हस्ते उत्पलं वामगे करे ।
देव्यध्यायोदितास्त्रं वा दर्पणास्फलोचनम् ॥

दर्पणं मुखवृत्तं स्यात्तन्मुष्टिस्स्यात्तदर्धतः ।
तत्पुच्छं मुकुलाकारं पादे शोभाविराजितम् ॥



स्तनोपेतं चित्रवस्त्रपरिच्छदम् ।
...जिनाम्बरं सव्यपादं कुञ्चितमिष्यते ॥

...वामचरणं नूपुरेणाप्यलंकृतम् ।
...सहितं तत्र कोलकाङ्गुलकर्णनतिः ॥

...मरकताभं स्याद्दक्षिणं मणिसन्निभम् ।
...मेढ्रदेशेभ्यो वामे दक्षे च वामके ॥

...तु भागान् हित्वाग्रे स्थिताङ्घ्रेर्मध्यमे नयेत् ।
...हस्तोच्चं चूचुकां तदनन्तरम् ॥ 10

...ङ्गुलमित्युक्तं विश्वाङ्गुलमथापि वा ।
...मवाह्वोस्तु मध्यमं तु षडङ्गुलम् ॥

...मध्यं तु तिथिभूताङ्गुलं भवेत् ।
...खण्डेव कर्तव्यं हि मुनीश्वराः ।

...रीश्वरो ह्येवं हृद्वयं शृणुत द्विजाः ।
...कृत्वा महेशार्धं विष्ण्वर्धमितरत्र च ॥

...युतं शङ्खकटकस्तत्र संमतः ।
...समोपेतं सर्वाभरणसंयुतम् ॥

...खण्डेव सूत्रपातादिकं भवेत् ।
...व्रह्मादिभागं चैवं समाचरेत् ॥ 15

...समापाद्य प्रतिष्ठां कारयेत्ततः ।
...प्रतिष्ठां च विप्रेन्द्राः शृणुध्वं हि समासतः ॥

...पूर्ववमादिष्टस्तद्देवाङ्कुरार्पणम् ।
...ग्रामाक्षिमोक्षौ च मृदाद्यैर्विशोधनम् ॥

...क्षिणं पुराद्दीक्षामुदके चाधिवासनम् ।
...मान्यस्थापनप्रोक्तमार्गेणैव समाचरेत् ॥

किं त्वर्धभागं देवाणुसंयुक्तं कारयेद्गुरुः ।
मुखवासमहेष्वेककुण्डं तु परिकल्पयेत् ॥

प्राच्यैशदक्षे वेदाश्रं कुण्डमेकं तु कल्पयेत् ।
शिल्पिनं तु विसृज्याथ विप्रान् संभोजयेत्ततः ॥ 20

पुण्याहसेवनं कृत्वा स्थण्डिलं च ततो नयेत् ।
शयनं कल्पयेत्तस्मिन् स्नपनं कौतुकं पृथक् ॥

बन्धयेद्देशिको धीमानुभयोःपूर्वहस्तयोः ।
शयनारोहणं कृत्वा शाययेद्देवमादरात् ॥

शिरःप्रदेशे देवस्य शिवकुम्भं तु विन्यसेत् ।
उमोत्तमाङ्गदेशे तु वर्धनीं विन्यसेद्गुरुः ॥

विष्णुश्चेत्तच्छिरोदेशे विष्णुकुम्भं तु विन्यसेत् ।
तत्तद्कापार्श्वभागं तु तत्र ध्यात्वा यजेद्गुरुः ॥

परितोऽष्टघटान्न्यस्त्वा विधेशाधिष्ठितान्न्यसेत् ।
गन्धस्रग्धूपनैवेद्यमुख्यैर्देशिकोत्तमः ॥ 25

तत्त्वतत्त्वेश्वरन्यासं कृत्वा व्याप्तिं च भावयेत् ।
क्ष्मादिमूर्त्यष्टकं न्यस्त्वा मूर्तीशानपि विन्यसेत् ॥

मूर्तीशानां तु विन्यासे विशेषः कश्चिदिष्यते ।
शर्वं च पशुपत्युग्ररुद्रांश्चैतान्त्रलोत्कटान् ॥

धात्री विश्वेमथेन्द्रादिकाग्रादिक्रमशो न्यसेत् ।
विष्ण्वर्धस्थापने शर्वपशुपत्युग्ररुद्रकान् ॥

पुरुहूतं च विष्णुं च गोविन्दं वित्तनायकम् ।
पञ्चमूर्त्यात्मके न्यासे मूर्तयः पूर्वकर्मणा ॥

ब्रह्माणं केशवं रुद्रं ज्ञानीमिष्ठां तु पश्चिमात् ।
न्यसेद्गौर्यर्धपक्षे तु ब्रह्मविष्णू च रुद्रकम् ॥ 30

जनार्दनं ततस्सम्यक् पुरुहूतमथाप्यथ ।
न्यसेद्विष्ण्वर्धपक्षे तु पञ्चमूर्तीश्वरानपि ॥

शिवांशे शिवमन्त्रं तु न्यसेदन्यस्य तन्मनुम् ।
ईशादिसंहितामन्त्रान्देवस्यार्धे तु विन्यसेत् ॥

तत्रैव योजयेदन्यदेवोकेशाद्यणून्मनून् ।
एवमेवान्यमन्त्रांश्च युक्त्या ह्यत्रैव विन्यसेत् ॥

संस्कृत्य कुण्डमन्ते तु जनयेत्तत्र पावकम् ।
आवाह्य मूर्तिमूर्तीशांस्तत्तद्दिक्षु व्यवस्थितान् ॥

समिदाज्यान्नलाजैश्च तिलवेणुयवैरपि ।
होमयेत् सर्वमन्त्रैश्च प्रधाने पूर्ववद्गुरुः ॥

पलाशोदुम्बराश्वत्थवटाः प्रागादिदिक्षु च ।
शम्यपामार्गश्रीवृक्षमायूरा वह्निकोणतः ॥

प्रधानेऽपि पलाशः स्याद्विशेषः कश्चिदुच्यते ।
विष्ण्वर्धपक्षे तुलसी पलाशश्च प्रधानके ॥

ततो द्वितीये दिवसे देवान् कुम्भांश्च पावकान् ।
यजेद् गन्धादिभिश्चैवं वस्त्रहेमाङ्गुलीयकैः ॥

मूर्तिपांश्च गुरुं चेष्ट्वा दक्षिणां दापयेत्ततः ।
शुभे मुहूर्ते संप्राप्ते मन्त्रन्यासं समाचरेत् ॥

कुम्भान्मनूंश्च वर्धन्या शिवोमांशे क्रमान्न्यसेत् ।
विष्ण्वर्धपक्षे वर्धन्या मनुं पीठे तु विन्यसेत् ॥

कृष्णस्य कुम्भात् कृष्णस्य बीजं कृष्णहृदि न्यसेत् ।
अन्येभ्यो बीजमादाय तत्पीठे परितो न्यसेत् ॥

उत्सवं स्नपनं भूरि नैवेद्यं कारयेन्न वा ।
अनुक्रमस्य संप्राह्य तद्देवस्थापनोदितम् ॥

विष्णूमार्धप्रतिष्ठा तु कथिता भुक्तिमुक्तिदा ।

इति उत्तरकामिकाख्ये महातन्त्रे विष्णूमार्धप्रतिष्ठाविधिः

षष्टितमः पटलः

## त्रिमूर्तिस्थापनविधिः

त्रिमूर्तिस्थापनं वक्ष्ये तल्लक्षणपुरस्सरम् ।
रक्तवर्णस्त्रिणेत्रश्च वरदाभयहस्तकः ॥

कृष्णापरशुसंयुक्तो जटामकुटमण्डितः ।
ऋज्वागतस्तथैकेन पादेनापि समन्वितः ॥

दक्षिणोत्तरयोश्चैव पार्श्वयोरुभयोरपि ।
कटिप्रदेशादूर्ध्वे तु ब्रह्मविष्ण्वर्धकाययुक् ॥

स्त्रीमानवत्तयोर्मानं ब्रह्मविष्ण्वोस्तु कल्पयेत् ।
कृताञ्जलिपुटावेकपादयुक्तौ च वा मतौ ॥

अथवा शिवलिङ्गस्य पार्श्वयोर्न गतौ तु तौ ।
अथवा तौ पृथक्स्थाप्यावेकविष्टरमास्थितौ ॥

अथवा मध्यमे लिङ्गं पृथगालयसंस्थितम् ।
तस्य सव्येऽप्यसव्ये च ब्रह्मविष्णू तथा मतौ ॥

पृथग्धामस्थिताश्चैकधामस्था वा त्रिमूर्तयः ।
संश्लिष्टधामयुक्ता वा ब्रह्मविष्णुशिवा मताः ॥

पूर्वास्याः पश्चिमास्या वा परिवारादिसंयुताः ।
भिन्नप्राकारगा वापि एकप्राकारसंस्थिताः ॥



[illegible]दिदेवा वा स्थापनीयास्तु मध्यमे ।
[illegible]लक्षणमादिष्टं प्रतिष्ठाविधिरुच्यते ॥

[illegible]लिङ्गप्रतिष्ठा च ब्रह्मणः केशवस्य च ।
[illegible]प्यायसंसिद्धाः कर्तव्या मुनिपुङ्गवाः ॥

[illegible]मिकपादस्य प्रतिष्ठाविधिरुच्यते ।
[illegible] काल इत्युक्तस्तद्देशाङ्कुरार्पणम् ॥

[illegible]वासं च हृद्गोक्षं वेरशुद्धिं पृथङ्नयेत् ।
[illegible]णं जलावासं मण्टपं पूर्ववन्नयेत् ॥

[illegible]नि कारयेत्तत्र नवसंख्यकसंख्यया ।
[illegible]प्यथ वृत्तानि चतुरश्राणि तानि वा ॥

[illegible]कोदासनं विप्रभुक्तिं पुण्योदसेचनम् ।
[illegible] शयनं स्नानं कौतुकानां च बन्धनम् ॥

[illegible]विष्णुहराणां च दक्षहस्ते तु वै पृथक् ।
[illegible]नारोहणं कुम्भस्थापनं पूर्ववन्नयेत् ॥

[illegible] ब्रह्मणो विष्णोश्शिरोदेशे घटत्रयम् ।
[illegible] तु शिवकुम्भस्य उत्तरे वर्धनीं न्यसेत् ॥

[illegible] तु तत्रैव ध्यात्वा गन्धादिभिर्यजेत् ।
[illegible]दिन्यासं तेषां कुर्याद्यथोदितम् ॥

अग्निकुण्डादिसंस्कारं कृत्वा होमं तु कारयेत् ।
तिलसर्षपमुद्गांश्च माषशिवाढवैणवैः ॥

पलाशोदुम्बराश्वत्थन्यग्रोधाः प्रागिदगादितः ।
शम्यपामार्गश्रीवृक्षप्लक्षाश्चाग्नेयकोणतः ॥

प्रधाने तु पलाशस्स्यात् स च सर्वत्र वा मतः ।
ततो द्वितीयदिवसे देवकुम्भाग्नितर्पणम् ॥

पूजनो वस्त्रहेमैर्मूर्तिपाद्यैस्समन्वितः ।
संपासदशनिष्कादिदक्षिणास्तुष्टधीर्गुरुः ॥

मन्त्रन्यासं ततः कुर्यान्न्यसत्रा त्रिमयुगे घटान् ।
कुम्भान्मनुं समादाय देवस्य हृदि विन्यसेत् ॥

वर्धन्या बीजमादाय तस्य पीठे तु विन्यसेत् ।
ब्रह्मविष्णुघटाद्बीजं हृत्वा तद्धृदि विन्यसेत् ॥

आदाय बीजमन्येभ्यः पीठस्य परितो न्यसेत् ।
तत्तत्कुम्भजलैश्चैव तत्तद्देशेऽभिषेचयेत् ॥

स्नपनं चोत्सवं कुर्याद् भूरि नैवेद्यमेव च ।
अनुक्रमस्य संप्राह्य तत्तदध्यायचोदितम् ॥

प्रतिष्ठां कृता येन त्रिमूर्तीनां नरेण तु ।
इह लोके सुखं प्राप्य याति सोऽन्ते परं शिवम् ॥

इति उत्तरकामिकाख्ये महातन्त्रे त्रिमूर्तिस्थापनविधिः

एकषष्टितमः पटलः ॥

## ॥ वृषारूढप्रतिष्ठाविधिः ॥

[illegible]रूढप्रतिष्ठां तु वक्ष्ये तल्लक्षणान्विताम् ।
[illegible]भुजस्त्रिणेत्रश्च जटामकुटसंयुतः ॥

[illegible]र्दक्षिणे हस्ते वामहस्ते मृगो भवेत् ।
[illegible]दक्षिणहस्तस्तु कटको वक्रदण्डयुक् ॥

अस्य सव्यप्रकोष्ठं तु विन्यसेद्वृषमस्तके ।
स हस्तो हंसपक्षो वा पताकाधोमुखस्तु वा ॥

तन्मध्यमाङ्गुलाग्रेण नाभिसूत्रं समं भवेत् ।
तद्मात्राभिसूत्रान्तं पञ्चाधिकदशाङ्गुलम् ॥

तद्धस्तमणिबन्धाच्च पार्श्वतो द्व्यङ्गुलं भवेत् ।
प्रकोष्ठमूलाद्वृत्तमध्यात् पञ्चपञ्चाङ्गुलं भवेत् ॥

हस्तस्य मणिबन्धान्तो मेढ्रमूलसमो भवेत् ।
एकोनविंशन्मात्रं स्यात् पार्श्वतो मणिबन्धकात् ॥

पार्श्वमध्यमबाह्वोश्च मध्ये सप्ताङ्गुलो भवेत् ।
समभङ्गयुतो देवः स्थानकेनापि संयुतः ॥

ललाटघ्राणमध्याच्च दक्षिणे स्थितपादके ।
गुल्फमध्ये स्थितं सूत्रं शिवसूत्रमिति स्मृतम् ॥

सूत्रं हन्वधगं प्रोक्तं गुणाङ्गुलमिति स्मृतम् ।
सूत्रनाभ्यन्तरं मात्रं चतुर्भिर्मेढ्रसूत्रयोः ॥

सूत्रदक्षिणजान्वोस्तु मध्यमं हि गुणाङ्गुलम् ।
शराङ्गुलोऽन्तरे पाष्ण्योर्दक्षपादस्य वक्रता ॥

द्व्यङ्गुलेन तु शेषं तु चन्द्रशेखरवद्भवेत् ।
तस्यैव दक्षिणे देवीं कारयेल्लक्षणान्विताम् ॥

अथ स्वदक्षिणे देव्यायुक्तो वा मूर्त्यपेक्षया ।
आयुधव्यतिरिक्तैस्सर्वैरङ्गैस्तु विपरीतकैः ॥

संयुक्तो वा वृषारूढस्त्वेवं मुक्तिप्रदो भवेत् ।
पृष्ठस्थो वृषभः कार्यो देवजानूरुकोच्छ्रयः ॥

मेढ्रान्तो नाभिसीमान्तश्शेषं सर्वं तु पूर्ववत् ।
एवं देवं समापाद्य शिल्पाद्यैः स्थापनं नयेत् ॥

कालेऽङ्कुरार्पणं रत्नन्यासं संप्रोक्षणं नयेत् ।
वृषस्य नेत्रमोक्षं तु शुद्धिं ग्रामप्रदक्षिणम् ॥

जलाधिवासनं कृत्वा मण्टपं पूर्ववन्नयेत् ।
कुण्डानि नवपञ्चैकसंख्यया तत्र कल्पयेत् ॥

चतुरश्राणि वृत्तानि तद्दिगश्राणि तानि वा ।
पश्चाच्छिल्पिनमुद्वास्य तस्मिन्विप्रांस्तु भोजयेत् ॥

पुण्याहप्रोक्षणं कृत्वा स्थण्डिलं शयनं न्यसेत् ।
स्नपनं कौतुकं कुर्याद्वृषेऽपि च यथोदितम् ॥

आरोप्य शयने पश्चात् कुम्भान् संस्थापयेत्ततः ।
शिवस्य च शिरोदेशे शिवकुम्भं च वर्धनीम् ॥

यदि भिन्नो वृषो देवपादमूले तु शाययेत् ।
दक्षमस्तकसंयुक्तां शय्यां संकल्प्य वै पृथक् ॥

वृषमस्तकदेशे तु वृषकुम्भं तु विन्यसेत् ।
परितोऽष्टघटान्न्यस्य विद्येशांस्तत्र पूजयेत् ॥

गन्धपुष्पादिभिर्धीमान् नैवेद्यान्तैर्गुरूत्तमः ।
तत्त्वमूर्त्यादिविन्यासं कृत्वा देवे वृषेऽपि च ॥

अग्निकुण्डादिसंस्कारं कृत्वा होमं समाचरेत् ।
समिदाज्यान्नलाजादितिलसर्षपमाषकैः ॥

पलाशोदुम्बराश्वत्थवटाः प्रागादिदिक्षु च ।
शम्यपामार्गश्रीवृक्षमायूरोत्था भवन्ति हि ॥

प्रधानेऽपि पलाशस्स्यात्तर्पयेत्तत्र वै वृषम् ।
ततो द्वितीये संतर्प्य देवान् कुम्भांश्च पावकान् ॥

समूर्तिपो गुरुस्सम्यक् वस्त्रहेमादिपूजितः ।
संप्राप्तदक्षिणः पश्चान्मन्त्रन्यासं समाचरेत् ॥

घटान्न्यस्त्वा तु देवाग्रे स्थण्डिले तु गुरुः क्रमात् ।
कुम्भाद्बीजं समादाय देवस्य हृदि विन्यसेत् ॥

वर्धन्या मनुमादाय तस्य पीठे तु विन्यसेत् ।
सहजा यदि सा देवी तस्यास्तु हृदि विन्यसेत् ॥

वृषकुम्भान्मनुं स्मृत्वा वृषभस्य हृदि न्यसेत् ।
अन्येभ्यो बीजमादाय पीठस्य परितो न्यसेत् ॥

विभिन्नपीठा देवी चेत् प्रतिष्ठां पृथगाचरेत् ।
कल्याणं कारयेत्पश्चात् तद्विधानेन देशिकः ॥

उत्सवं स्नपनं भूरि नैवेद्यं कारयेन्न वा ।
अनुक्तमत्र संग्राह्यं सामान्यस्थापनोदितम् ॥

इत्याख्याता प्रतिष्ठेयं वृषवाहनमूर्तिनः ।
घनो वाऽप्यघनो वापि वृषभस्स च संमतः ॥

प्रतिष्ठानुष्ठिता येन भक्त्या भावनया सह ।
लभते स पदं शैवं भुक्त्वा भोगान्यथेच्छया ॥

इति उत्तरकामिकाख्ये महातन्त्रे वृषारूढप्रतिष्ठाविधिः ॥

द्विपञ्चितमः पटलः ॥

## गङ्गाधरप्रतिष्ठाविधिः

गङ्गाधरप्रतिष्ठां तु वक्ष्ये तल्लक्षणान्विताम् ।
चतुर्भुजस्त्रिणेत्रश्च जटामकुटमण्डितः ॥

दक्षिणाभयहस्तश्चोऽप्यन्यत्र कटकामुखः ।
तेन हस्तेन धृत्वैकां जटां गङ्गासमन्विताम् ॥

…स्थितस्तु प्रसन्नात्मा कृष्णापरशुसंयुतः ।
…दयुक्करोर्ध्वं तु कर्णयोर्विसमं भवेत् ॥

तदन्तरं तु द्विमुखमाभङ्गेन समन्वितम् ।
स्थानकस्तु तदुष्णीषनासावाद्दक्षमध्यमे ॥

सूत्रं वामे तु हृदयाद्दक्षे वै नाभिमेढ्रयोः ।
…कासूत्राच्चतुर्मात्रं सव्यजान्वोर्गुणाङ्गुलम् ॥

पादाङ्गुष्ठद्वयोः पाष्ण्योरन्तरं निश्चिबाणकम् ।
वामपादस्य वक्रं तु सूत्राद्वामे गुणाङ्गुलम् ॥

चन्द्रशेखरवच्छेषं कर्तव्यं मुनिपुङ्गवाः ।
देवस्य वामभागे तु देवीं कुर्यात्सलक्षणाम् ॥

कुर्याद् भगीरथं देवनाभ्यन्तस्तनसीमगम् ।
गलान्तं वाष्टतालेन विलम्बितजटान्वितम् ॥

वल्कलाम्बरसंयुक्तं हन्मस्तककृताञ्जलिम् ।
द्विनेत्रं च द्विबाहुं तमेवं गङ्गाधरो भवेत् ॥

कालेऽङ्कुरार्पणं रत्नन्यासो वै नेत्रमोक्षणम् ।
रत्नन्यासो न गङ्गायाः कर्तव्यो नेत्रमोक्षणम् ॥

तथा भगीरथस्यापि रत्नन्यासस्तु पञ्चभिः ।
प्रतिमाशोधनं ग्रामपुरादीनां प्रदक्षिणम् ॥

तोयाधिवासो यागार्हमण्टपः पूर्ववत्ततः ।
चतुरश्राणि कुण्डानि नवपञ्चैकसंख्यया ॥

मोचनं शिल्पिनः कृत्वा कुर्याद्भूसुरभोजनम् ।
पुण्याहेनैव संसिच्य वास्तुहोमं ततो नयेत् ॥

स्थण्डिलं शयनं बिम्बस्नपनं कौतुकं पृथक् ।
भगीरथस्य गङ्गाया देवस्यापि नयेद्गुरुः ॥

शयनं भिन्नपीठस्थो यदि स्यात्तु भगीरथः ।
देवस्य पाददेशे तु शयनं तत्र कल्पयेत् ॥

देवेशस्य शिरःपार्श्वे शिवकुम्भं च वर्धनीम् ।
भगीरथशिरोदेशे घटं वस्त्रादिभूषितम् ॥

हैरण्यरङ्गजाढ्यं वा गङ्गायाश्चैवमाचरेत् ।
परितोऽष्टौ घटान्न्यस्त्वा विद्येशैस्त्वधिष्ठितान् ॥

पूर्वोक्तरूपसंस्थानध्यानयुक्तो गुरूत्तमः ।
गन्धपुष्पादिभिस्सर्वान्देवानभ्यर्चयेत् क्रमात् ॥

तत्त्वमूर्त्यादिविन्यासं प्रकुर्यात्पूर्ववत्प्रभोः ।
भगीरथस्य मूर्तीशैः पञ्चभिश्च समन्वितान् ॥

पञ्चमूर्तीन्न्यसेद्धीमान् मूर्तयः पूर्ववर्त्मना ।
मूर्तीशास्तुर्मकारोत्थास्सद्योजातादयोऽथवा ॥

वान्तं चतुर्दशं षष्ठं बिन्दुनादौ नियोजयेत् ।
चतुर्थ्यन्तं स्वनामान्ते चेति मूलाणुरेष वै ॥

भगीरथाक्षरेणैव हृदादीनां समुद्धृतिः ।
गङ्गायास्तद्विधानोक्तमार्गेणैव समाचरेत् ॥

कृत्वा कुण्डाग्निसंस्कारं समिदाज्यान्नलाजकैः ।
तिलैश्च जुहुयात्पश्चाद् वस्त्रहेमाङ्गुलीयकैः ॥

दक्षिणां दापयेत्तेषां मन्त्रन्यासं ततो नयेत् ।
तत्तद्देवपुरस्तत्तत् कुम्भान्न्यस्त्वा गुरूत्तमः ॥

शिवकुम्भमनुं ज्ञात्वा शिवस्य हृदि विन्यसेत् ।
वर्धन्या मनुमादाय तस्य पीठे तु विन्यसेत् ॥

अन्येभ्यो बीजमादाय पीठाब्जे परितो न्यसेत् ।
गङ्गाया बीजमादाय तस्यास्तु हृदि विन्यसेत् ॥

भगीरथघटाद् बीजं स्मृत्वा तस्य हृदि न्यसेत् ।
तत्तत्कुम्भजलेनैव स्नापयेत्तत्प्रदेशके ॥

सहासना तु देवी चेद्वर्धन्यास्तद्धृदि न्यसेत् ।
विभिन्नपीठा देवी चेत्प्रतिष्ठां पृथगाचरेत् ॥

कल्याणं कारयेदन्ते स्नपनं चोत्सवं ततः ।
कारयेद् भूरि नैवेद्यं कर्तुरिच्छावशेन तु ॥

अनुक्तमत्र संग्राह्यं सामान्यस्थापनोक्तवत् ।
भगीरथयुतो वायं वियुक्तो वा महेश्वरः ॥

जाह्नवीशप्रतिष्ठां तु भक्त्या यः कुरुते नरः ।
इह लोके सुखं प्राप्य स्वबन्धुजनसंयुतः ॥

यायात् स्वदेहपातान्ते शैवं स्थानं तु दुर्लभम् ।

इति उत्तरकामिकाख्ये महातन्त्रे गङ्गाधरप्रतिष्ठाविधिः

त्रिषष्टितमः पटलः ॥

---



## गुहस्थापनविधिः

गुहस्य स्थापनं वक्ष्ये तल्लक्षणपुरस्सरम् ।
पुरादेर्मध्यमे वाग्नौ यमे वा मध्यमे तयोः ॥

नैर्ऋते वरुणे वायौ सोमे शर्वेऽथवा भवेत् ।
अन्तरालेऽथवा तेषां शिवधाम्न्येवमेव वा ॥

अन्यदेवालयेऽप्येवमथवा पर्वतोपरि ।
पर्वतस्यान्तिके वापि नद्युद्यानादिकेऽथवा ॥

राजधान्यादिके वाथ पुण्यक्षेत्रे गृहेषु वा ।
प्रासादमण्टपादीनां देशे पुण्यतरेऽथवा ॥

कुमारालय इष्टस्याद्धामलक्षणलक्षितः ।
अथैकादिस्त्रयस्त्रिंशद्धस्तविस्तारसंयुतः ॥

त्रयस्त्रिंशत्करादूर्ध्वं विस्तारो नेष्यते द्विजाः ।
द्विहस्तस्कन्दरूपाख्यः केवलो वा तदालयः ॥

रुद्रोमाविष्णुरूपाख्यस्त्वथवा हंसकोणयुक् ।
गणकोणोऽथवा स स्यात् केवलो वा गुहालयः ॥

एकभूम्यादिसप्तान्तस्तले च्वेष्टनलाञ्छितः ।
शिवोक्तमार्गसंकल्पगर्भेष्टकयान्वितः ॥

तद्वन्मूर्धेष्टकास्थूपिप्रतिष्ठाभ्यां समायुतः ।
द्विहस्तदेवतेष्वस्तमध्यकुम्भयुतेन च ॥

धाम्नस्संस्थापनेनाढ्यः प्रागुक्तविधिना सह ।
प्रागुक्तमण्टपाद्यैश्च प्राकाराद्यैश्च मण्डितः ॥

पूर्वास्यः पश्चिमास्यो वा दक्षोत्तरमुखस्तु वा ।
परिवारामरैर्युक्तः कथ्यन्ते ते प्रसङ्गतः ॥

यक्षेन्द्रो राक्षसेन्द्रश्च पिशाचेन्द्रश्च भूतराट् ।
गन्धर्वः किन्नरो दैत्यनायको दानवाधिपः ॥

क्रमात्पूर्वादिशर्वान्तस्थिता एते चतुर्भुजाः ।
वरदाभयसंयुक्ताः खड्गखेटसमन्विताः ॥

खड्गखेटसमायुक्ता द्विभुजा वाञ्जनप्रभाः ।
भीमरूपास्सुशान्ता वा बद्धकेशास्तु वा मताः ॥

शकुनी पूतना चैव रेवती चार्धपूतना ।
वक्त्रमण्डी शकारी च निशान्ता मेषदेवता ॥

षण्मुखश्शक्तिपाणिश्च कार्तिकेयो गुहस्ततः ।
स्कन्दो मयूरवाहस्स्यात् सेनानीः शक्तिहस्तवान् ॥

एते वा मूर्तिपास्तस्य कृताञ्जलिपुटान्विताः ।
वज्रपद्मधरास्सर्वे स्कन्दोक्ताक्षरसंयुताः ॥

चतुर्भुजा द्विहस्ता वा षड्वक्त्राश्चैकवक्त्रकाः ।
एते वा परितः स्थाप्याः क्रमात् पूर्वादियोगतः ॥

इन्द्रादीन्वाष्टपीठं वा मयूरं वाग्रतो गजम् ।
विघ्नेशं क्षेत्रपं भानुं महापीठं प्रकल्पयेत् ॥

बलिपीठं च शर्वोक्तान् परिवारांस्तु वा न्यसेत् ।
बलिपीठदलेष्विन्द्रपूर्वान्मध्ये ग्रहेश्वराः ॥

द्वारपौ कल्पयेद्द्वारे श्यामरत्ननिभौ क्रमात् ।
दक्षवामगतौ द्वारे द्विभुजौ वा चतुर्भुजौ ॥

खड्गखेटधरौ सूचिमुद्राविस्मयसंयुतौ ।
श्यामाभौ रक्तवर्णौ वा सितकृष्णौ भयंकरौ ॥

जयाख्यविजयाख्यौ द्वौ द्वारपौ विकृताननौ ।
ईशाने कल्पयेत् स्कन्दचण्डं वेदकरं वरम् ॥

अभयं वज्रपद्मे च वरदं द्विभुजं तु वा ।
शाकल्यसंज्ञया ख्यातं तदर्थे पीठमेव वा ॥

लक्षणं तस्य संक्षेपाच्छृणुध्वं विप्रसत्तमाः ।
द्रव्यैश्शिलादिभिः कुर्यात् प्रतिमालक्षणोदितैः ॥ 25

प्रतिमालक्षणप्रोक्तं विश्वमानं गुहस्य तु ।
योजनीयं द्विजा गर्भद्वारस्तम्भादिसंयुतम् ।

द्विभुजश्च द्विनेत्रश्च सुब्रह्मण्यस्सुसुन्दरः ।
पद्मधृक् सव्यहस्तः पाणिर्लम्बितेतरसत्करः ॥

बालरूपी प्रतिष्ठाप्यो ग्रामस्यैवाभिवृद्धये ।
द्विहस्तो यज्ञसूत्राढ्यस्सशिखस्स त्रिमेखलः ॥

कौपीनदण्डधृक्सव्यपाणिः कट्याश्रितोऽपरः ।
स्थाप्योऽयं ज्ञानदः स्कन्दः पर्वतेषु वनादिषु ॥

चतुर्भुजस्त्रिणेत्रश्च कर्णयोः पत्रपिण्डयुक् ।
नक्रकुण्डलयुक्तो वा छत्रशक्तिकरद्वयः ॥ 30

वरदाभयसंयुक्तश्शक्तिद्वययुतो न वा ।
शतयैकया युतो वा स्यात्तयोर्लक्षणमुच्यते ॥

द्विनेत्रे द्विभुजे शान्ते पद्मोत्पलकरद्वये ।
श्यामरक्तनिभे सव्यवामपार्श्वे व्यवस्थिते ॥

गौरीलक्षणसंयुक्ते कल्पयेत्तु शुभानने ।
गजेति गजवल्लीति नाम्ना ख्यातेऽतिसुन्दरे ॥

इत्थं लक्षणयुक्स्थाप्यः पुरे वा नगरेऽपि वा ।
षडाननश्च षड्बाहुर्द्वादशश्रोत्रेक्षणान्वितः ॥

षट्कण्ठस्त्वेककण्ठो वा षड्भिर्मौलिभिरन्वितः ।
सशक्तिस्साभयस्सासिस्साक्षमालस्सकुक्कुटः च 35

सखेटकस्स्वयं स्थाप्यो वृद्धये राजधानिके ।
रक्ताम्बरसमायुक्तो बालचन्द्रसमप्रभः ॥

करण्डमकुटोपेतो नेत्रत्रयसमन्वितः ।
शक्तिं च मुसलं खड्गं चक्रं पाशाभये वहन् ॥

दक्षिणेऽदक्षिणे वज्रं कार्मुकं खेटकं तथा ।
समयूरध्वजं चैवमङ्कुशं वरदं वहन् ॥

सोपवीतो मयूरस्थोः शक्तिद्वयसमायुतः ।
ग्रामादौ स्थापनीयोऽयं प्रासादादौ च सिद्धये ॥

एवं पञ्चविधस्कन्दो विभागस्थानभेदतः ।
द्वापरे स्यान्न वान्यत्र सैव सर्वत्र वा मताः ॥ 40

एवं सम्पाद्य तन्मन्त्रैः प्रतिष्ठामारभेत्ततः ।
शवर्गस्य तृतीयं तु षष्ठस्वरसमन्वितम् ॥

चतुर्दशस्वरोपेतं बिन्दुनादविभूषितम् ।
सुब्रह्मण्यं चतुर्थ्यन्तं नमोऽन्तं प्रणवादिकम् ॥

मूलबीजमिति ख्यातं तस्मिन् ब्रह्माङ्गकल्पना ।
शान्तान्तं दीर्घह्रस्वार्णैर्जात्यन्तैर्वा नमोऽन्तकैः ॥

ईशानादिपदोपेतैर्ब्रह्माङ्गानि समुद्धरेत् ।
महासेनाय संयुक्तं विद्महे पदसंयुतम् ॥

षडाननाय संयुक्तं धीमहीति पदं ततः ।
तन्नःस्कन्दपदोपेतमन्ते युक्तं प्रचोदयात् ॥ 45

गायत्रीबीजमेतत्स्यादीगूर्वे प्रयोजयेत् ।
हृत्पुटाञ्जातमूलाणू मूर्तिविद्यामनू स्मृतौ ॥

गजाया गजवल्ल्याश्च मन्त्रास्तन्नामकल्पिताः ।
ततः प्रतिष्ठा कर्तव्या प्रागबकुरत्वाङ्कुरार्पणम् ॥

शुभे पूर्वोदिते काले पञ्चरत्नानि विन्यसेत् ।
देव्योश्च हृदयेनैव पद्महेमाब्जमेव वा ॥



कृत्वा पद्मस्य संस्नातं नेत्रमोक्षमथाचरेत् ।
मध्वाज्याभ्यां सहेमाभ्यां पात्राभ्यां प्रकल्पयेत् ॥

हृदा स्वर्णनखन्यासं धान्यगोविप्रदर्शनम् ।
कुर्यात् प्रच्छन्नवस्त्रेण सह सर्वात्मना गुरुः ॥ 50

यदि देवीयुतः स्कन्दः पृथक् तस्याश्च कारयेत् ।
प्राग्वच्छुद्धिं प्रकल्प्यास्मै ग्रामादीनां प्रदक्षिणम् ॥

जलेऽधिवासयेत् स्कन्दं लम्बकूर्चयुतं हृदा ।
परितः कलशान्मन्त्री न्यसेदिन्द्रादधिष्ठितान् ॥

प्रासादस्य चतुर्दिक्षु वह्नीशेऽथ मण्टपम् ।
पद्मासनवपश्चैकसंख्याकुण्डप्रकल्पनम् ॥

पूर्वोत्तरेशसंकल्पस्नानवेदिकयान्वितम् ।
तक्षकोद्वासनं विप्रभुक्तिं गोमयलेपनम् ॥

पुण्योदसेचनं वास्तुदेवतेभ्याग्नितर्पणे ।
स्थण्डिलं शयनं प्राग्वच्चर्मशयेत्तु वाम्बरैः ॥ 55

जलादानीय तं स्कन्दं स्नपनं प्राग्वदाचरेत् ।
गन्धपुष्पादिनाभ्यर्च्य बन्धयेत् कौतुकं हृदा ॥

आरोप्य शयने स्कन्दं शाययेत् प्राक्शिरो यथा ।
वस्त्रैराच्छाद्य संपूज्य सासनं मूर्तिसंयुतम् ॥

सदेहमूलमन्त्राभ्यां साङ्गं गन्धादिभिर्युतम् ।
शिरःप्रदेशे सूत्राढ्यं कुम्भं वस्त्रादिभिर्युतम् ॥

न्यस्त्वा तस्मिन्यथा बेरे तथा स्कन्दं प्रपूजयेत् ।
देवीयुतं चेद्देव्यस्य वर्धनीं तत्र तां यजेत् ॥

परितोऽष्टौ घटान्न्यस्त्वा गुहश्चैवेश्वरान्यजेत् ।
सूत्रवस्त्रसुवर्णादियुक्तास्सर्वे घटा मताः ॥ 60

आत्मविद्याशिवाख्यं च जानुकण्ठशिरोऽवधि ।
न्यस्त्वा तत्त्वत्रयं सेशं मूर्तिमूर्तीश्वरान्न्यसेत् ॥

मूर्तयः क्ष्मादयो लोकपाला मूर्तीश्वरा मताः ।
प्रागुक्ता वा तदीशानास्ततो होमं समाचरेत् ॥

गुरुः पूर्वोक्तपञ्चाङ्गभूषणस्सोत्तरीयकः ।
सोष्णीषस्साम्बरस्स्नातश्शिवद्विजकुलोद्भवः ॥

मूर्तिपैरीदृशैर्युक्तः कृत्वा कुण्डाग्निसंस्कृतिम् ।
प्रधाने स्कन्दमावाह्य समङ्गाङ्गं सलोचनम् ॥

तत्त्वत्रयं सनाथं च मूर्तिमूर्तीश्वरान्वितम् ।
गजां च गजवल्लीं च तर्पयेत्संभवे तयोः ॥ 65

सहस्रं वा तदर्धं वा शतं मूलाहुतिर्गुरोः ।
ब्रह्माङ्गानां दशांशःस्यान्मूलार्धं मूर्तिपाहुतिः ॥

मूर्तिपा जुहुयुर्दिक्षु विदिक्ष्वीशाद्दादाषगूल् ।
तत्तद्दिङ्मूर्तिमूर्तीशानपि शान्तिघटान्वितम् ॥

समिद्घृतान्नसस्येन्द्रतिलसल्लाजतण्डुलाः ।
पलाशोदुम्बराश्वत्थवटा दिक्षु विदिक्ष्वथ ॥

शम्यपामार्गश्रीवृक्षा होम्याः पिप्पलपश्चिमाः ।
पलाशस्स्यात् प्रधानेऽपि स च सर्वत्र वा भवेत् ॥

वेदपाठश्चतुर्दिक्षु कोणेष्वस्त्रजपो भवेत् ।
शान्त्यम्भःप्रोक्षणं स्वस्वमन्त्राणां च जपक्रियाम् ॥ 70

दर्भसंस्पर्शनं चेत्थं प्रतिभागं समाचरेत् ।
ततः प्रभाते संशुद्धो मूर्तिपैस्सह देशिकः ॥

उद्धृत्य षण्मुखं तं च कुम्भानग्नींश्च तर्पयेत् ।
प्रायश्चित्तनिमित्तं तु दक्षिणेन शताहुतिम् ॥

दत्वा पूर्णाहुतिं पश्चात् प्रविशेद्धाम देशिकः ।
मानुषे दैविके वापि प्राग्वत् संस्कारसंयुताम् ॥

कशिलां हृदयेनैव रत्नधान्यादिगर्भिताम् ।
विन्यस्य स्थापयेत्तस्यां षण्मुखं मूलमुच्चरन् ॥

सुलग्ने सुमुहूर्ते तु यथा द्वारस्य संमुखम् ।
अथ ब्रह्मशिलोपेतं स्थापयेद्वा षडाननम् ॥ 75

देवाग्रे तु घटान्न्यस्त्वा मन्त्रन्यासं समाचरेत् ।
कुम्भाद्बीजं समादाय षण्मुखस्य हृदि न्यसेत् ॥

यदि देवी सती तस्यां वर्धन्या विन्यसेन्मनुम् ।
पीठस्य परितश्चान्यकुम्भेभ्यो विन्यसेन्मनून् ॥

तत्तद्घटस्थिताद्वस्तमभिषिञ्चेत् षडाननम् ।
तत्वमूर्त्यादिविन्यासं कारयेत्पूर्ववत्ततः ॥

स्नपनं कारयेदन्ते नैवेद्यं चोत्सवं चले ।
गुरुं च मूर्तिपांश्च वस्त्राद्यैर्दक्षिणायुतम् ॥

इष्ट्वा हेमाङ्गुलीयैश्च प्रतिमास्थापनोक्तवत् ।
सनातनप्रतिष्ठोक्तं यदनुक्तं समाचरेत् ॥ 80

एवं यः स्थापनं कुर्यात् षण्मुखस्य द्विजोत्तमाः ।
आयुः पुत्रान् वसून्विद्यामकलङ्कां वरस्त्रियम् ।

सौभाग्यं महतीं लक्ष्मीं नीरोगत्वं यशस्सुखम् ।
शुभं लब्ध्वा परत्रापि मोक्षं च लभते नरः ॥

तस्यार्चनं च संक्षेपाच्छृणुध्वं विप्रसत्तमाः ।
अथ प्रातः कृतावश्यशौचस्नाने विधाय च ॥

सन्ध्योपस्थापनं मन्त्रतर्पणं प्राग्वदाचरेत् ।
गत्वा धाम प्रविश्यान्तर्निर्णेकाङ्घ्रिकरद्वयः ॥

आचान्तस्सकलीकृत्य स्कन्देशानहृदादिभिः ।
सनातनं विधायार्घ्यमस्त्रमन्त्रेण तज्जलैः ॥ 85

द्वारं सम्प्रोक्ष्य संपूज्य जयं च विजयं तथा ।
स्वनाम्नोदुम्बरे हेतिं प्रविश्यान्तस्समर्चयेत् ॥

वास्तुनाथमुदग्वक्त्रः स्वासनस्थोऽणुविग्रहः ।
शक्तिस्थं स्वं समायोज्य रक्षायै ध्वंसितस्थितिः ॥

शक्त्युद्भूतसुधौघेन कृतपूतमहातनुः ।
अस्त्रमन्त्रं सुसंशुद्धं चन्दनार्पितसत्करः ॥

न्यस्तेशानतत्पुरुषाघोरवामाजाङ्गुष्ठकादिकः ।
तल्लयनिविष्टाखिलदेहमूलाणुसंयुतः ॥

कनिष्ठाद्यङ्गुलिन्यस्तहृच्छिरश्चूलिकावपुः ।
भूयस्तत्कृतन्यासमस्त्रमन्त्रपरान्वितः ॥ 90

देहन्यासं च तैर्मन्त्रैर्नालाब्रह्मान्वितैर्न वा ।
सैकत्रिंशत्कलामन्त्रन्यासं पाग्वन्नयेन्न वा ॥

आपाद्यैवं तनुं मन्त्री गुहवत्तामनुस्मरन् ।
इष्ट्वा हुत्वा विभाव्यान्तर्गुहं हन्नाभिबिन्दुषु ॥

शिवाणुभिस्तनुं शैवीमापाद्य गुहं यजेत् ।
अवकुण्ठनदिग्बन्धप्राकारैः स्थानशोधनम् ॥

विशेषार्घ्यं च संकल्प्य गन्धपुष्पाक्षतैर्हृदा ।
अर्चनाङ्गोदितैर्वाथ पाद्यमाचमनं तथा ॥

अर्घ्यं वा केवलं तेन संप्रोक्ष्य द्रव्यसंहतिम् ।
हृदाभिवन्द्य स्व चेष्ट्वा शुध्यै मन्त्रान् समुच्चरन् ॥ 95

इष्ट्वा पर्युषितां पूजां गायत्र्यार्घ्यं सनातनम् ।
दत्त्वा मूर्ध्नि हृदा तां च दद्यान्निर्माल्यधारिणे ॥



अजेद्वा वेत्सशुद्धिं नयेत् प्रागुक्तवर्त्मना ।
लोहजं यदि तद्वेरं स्नानं पर्वणि पर्वणि ॥

शिलादिजं चेत् कर्मार्चाशुद्ध्या शुद्धिमता द्विजाः ।
आत्मात्मतत्त्वद्रव्यमन्त्रबिम्बविशोधनम् ॥

गत्वासनं गुहस्यैवं कल्पयेत् प्रणवादिभिः ।
प्रणवं मध्यमे धर्माधर्मादीन् कल्पयेत्पुनः ॥

अथश्चोर्ध्वच्छदे पद्मकर्णिकेऽन्ते गुहासनम् ।
संकल्प्य चासनं मूर्तिमावाह्यास्मिन् हृदाणून् ॥ 100

ईशानादीन्न्यसेन्माद्याब्रह्माण्यर्णांस्तु वाखिलान् ।
विद्यादेहं च संकल्प्य तस्मिन्मूलेन षण्मुखम् ॥

हृदयानुगतेनैव पुष्पसंपूर्णसत्करः ।
आवाह्य बिम्बे तद्बिन्दोरानीय स्थापयेद्धृदा ॥

निष्ठुरां सन्निधानार्थं हृदा कृत्वावकुण्ठयेत् ।
हृदादिनेत्रपर्यन्तमन्त्रन्यासोऽवकुण्ठनम् ॥

महामुद्रां च मूलेन कल्पयेद्वामृतीकृतिम् ।
पाद्यं पादे हृदाचान्तिं मुखेऽर्घ्यं शिरसि क्रमात् ॥

नमःस्वाहावषड्वौषड्जात्यन्तेन गुहस्य तु ।
गन्धं पुष्पं च धूपं च दत्त्वा पञ्चामृतादिभिः ॥ 105

विभूतौ स्नापयेत् पिष्टामलकादिसमन्वितम् ।
वाससोन्मृज्य वस्त्रेण दत्त्वाचान्तिं गुहस्य तु ॥

चन्दनागरुकर्पूरकुष्ठान् पूर्वप्रमाणजान् ।
पिष्ट्वालिप्य हृदा स्कन्दं केवलं चन्दनं तु वा ॥

कृष्णागरुकृतं धूपं दद्याद्धृदयमन्त्रतः ।
लघुचन्दननिर्यासं भस्मजं वा पुरोदितम् ॥

सुरभीणि विचित्राणि सर्वर्तुप्रसवानि तु ।
तत्क्षणप्रतिबुद्धानि प्राग्वत् पुष्पाणि दापयेत् ॥

हृदा तैलाद्यसंक्लृप्तिं दद्यात् प्राग्वद्धृदाणुना ।
आमन्त्रणहविर्दद्यात् प्रागुक्तविधिना न वा ॥ 110

गन्धादीनां प्रमाणं तु पश्चिमास्यार्चनोक्तवत् ।
पूजयेदावृतिं पश्चाद्धूपदानावसानके ॥

वह्नीशरक्षोवातेशदिग्विदिक्षु हृदाद्यणून् ।
तद्बहिर्वसुमूर्तींश्च बहिरिन्द्रादिदेवताः ॥

ततोऽस्त्राणि यजेदेवं त्रिभिर्वावरणैर्गुहम् ।
द्वाभ्यां वैकेन भूयोऽपि धूपदीपं प्रदापयेत् ॥

गानयेन्मन्त्रगानाद्यं जपं कृत्वा निवेदयेत् ।
नैवेद्यं च बलिं दत्त्वा कुण्डे शैवेऽनले गुहम् ॥

आवाह्य साङ्गं चर्वन्तं पलाशसमिदाज्ययुक् ।
मूलेन शतपञ्चाशत्पञ्चविंशतिसंख्यया ॥ 15

जुहुयात्तद्दशांशेन षडङ्गाहुतिमाचरेत् ।
दत्त्वा पूर्णाहुतिं पश्चान्नित्योत्सवमथाचरेत् ॥

तदन्ते ताण्डवं कुर्यात् प्रागुक्तविधिना सह ।
एकाहादि नवाहान्तं कुर्यात्संवत्सरोत्सवम् ॥

ध्वजे मयूरमालिख्य ध्वजारोहणमाचरेत् ।
तद्दिनत्रिगुणे वाथ द्विगुणे वाथ तद्दिने ॥

अङ्कुरार्पणपूर्वं तु भेरीताडनपूर्वकम् ।
ध्वजारोहणपूर्वं वा कारयेदुत्सवं बुधः ॥

शकुनी रेवती चैव पूतना मण्डपूतना ।
वक्त्रमण्डी ततः प्रोक्ता निशान्ता मेषदेवता ॥ 20

शकारीति परिशेषाः सुब्रह्मण्यस्य सुव्रताः ।
षट्कुमारास्तु विशेयास्तेषां नामानि च द्विजाः ॥

सेनापतिस्सुरेशश्च हरसूनुस्सुराग्रजः ।
सुब्रह्मण्यः कुमारश्च षट्कुमाराः प्रकीर्तिताः ॥

कुण्डं षडश्रमिष्ट स्यादीशाने वाथ पावके ।
वज्ररूपं भवेदस्त्रं पुष्पे वा तण्डुले यजेत् ॥

द्विनेत्रं द्विभुजं रौद्रं शिखाकोटिसमुज्ज्वलम् ।
तीक्ष्णवज्रधरं सव्ये वामहस्ते तु चित्रके ॥

शकुन्यादिकुमारान्ता दिनानामधिपा मताः ॥

इति उत्तरकामिकाख्ये महातन्त्रे गुहस्थापनविधिश्चतुष्षष्टितमः पटलः ॥

---

## चण्डेशस्थापनविधिः

चण्डेशस्थापनं वक्ष्ये तल्लक्षणपुरस्सरम् ।
परस्वतन्त्रभेदेन द्विविधं तच्च संमतम् ॥

पुरादौ मण्डपे बाह्यदिक्षु चण्डेश्वरालयः ।
वामेशानेऽथ सौम्ये वा सोमेशेन्द्रान्तरेऽथवा ॥

अन्तर्मण्डलदेशेऽन्तर्हारायां वेदशालके ।
अथैकादित्रयस्त्रिंशद्धस्तविस्तारसंयुतः ॥

वामलणक्षसंसिद्धायामेनापि समन्वितः ।
एकादिसप्तभूम्यन्तं भूमिभागसमन्वितः ॥

धामोक्ताकारसंयुक्तो दिक्षु चण्डेश्वरान्वितः ।
इष्टदेवान्वितो वा स्यात् केवलो वा वृषान्वितः ॥ 5

प्रागुक्तविधिनानीतगर्भाधेष्टकया युतः ।
मूर्धेष्टकासमायुक्तः स्थूपिस्थापनसंयुतः ॥

दक्षिणद्वारसंयुक्तं पराङ्गं चेन्मुनीश्वराः ।
स्वतन्त्रस्थापने दक्षपूर्वपश्चिमदिङ्मुखः ॥

दिङ्न्यस्तामरविन्यस्तमध्यकुम्भयुतेन च ।
धामसंस्थापनेनाख्यः प्रागुक्तविधिना सह ॥

प्रागुक्तगर्भमानार्धं सर्वमत्र प्रयोज्यताम् ।
प्राकारमण्डपोपेतः परितः परिवारयुक् ॥

रुद्रभक्तस्ततो रुद्रश्चण्डश्चण्डप एव च ।
महाकालस्तथा विप्राष्टङ्कपाणीशसेवकौ ॥ 10

रुद्रकोपज इत्यष्टमूर्तयः परिवारगाः ।
एते श्वेता महाकाया कृताञ्जलिपुटान्विताः ॥

सटङ्कास्तद्विहीना वा वीराद्यासनसंस्थिताः ।
कृत्तिवासोऽन्विता वाथ चण्डरूपधरास्तु वा ॥

इन्द्राद्या वा तदर्थं तु पीठं वा पुरतो वृषः ।
बलिपीठादिपीठान्तं पूर्ववत् कल्पयेत्तु वा ॥

द्वारस्थौ द्वारपौ कार्यौ द्विकरौ दण्डधारकौ ।
चण्डानुगः चण्डमान्यो नेत्रौ वा देशिकाग्रजाः ॥

बलिपीठे बलिर्देयो यथादेशं बलिर्द्विजैः ।
देवोक्तपरिवारान्वा विघ्नक्षेत्रेशमातृभिः ॥ 15

द्रव्यैश्शिलादिभिः कार्यः पूर्ववल्लक्षणान्वितः ।
मध्येन दशतालेन दशतालाधमेन वा ॥



प्रतिमालक्षणप्रोक्तमानेनायादिसंयुतः ।
बद्धपद्मासनश्चण्डनाथो दुर्दर्शभीषणः ॥

व्यालयज्ञोपवीती च मुखोद्गीर्णमहानलः ।
करालकज्जलाभाक्षो जटिलश्चन्द्रशेखरः ॥

चतुर्वक्त्रश्चतुर्बाहुश्चाक्षमालात्रिशूलवान् ।
टङ्कं कमण्डलुं वामे भासुरत्नार्कलोचनः ॥

अथवा शङ्खवर्णाभश्चतुर्बाहुस्त्रिलोचनः ।
चन्द्रार्धमण्डितः कृत्तिवासा वीरासनस्थितः ॥ 20

पिनाकामोघबाणाभ्यां व्यग्रपाणितलद्वयः ।
वराभयप्रदानाभ्यामन्यत्र परिमण्डितः ॥

अथवा द्विभुजश्शुक्लवस्त्रश्च्यक्षोऽञ्जनप्रभः ।
जटामकुटयुक्तो वा धवलीकृतमूर्धजः ॥

स्थानको वासनस्थो वा शयितासव्यपादकः ।
सव्यप्रसव्यपादस्तु वामहस्तभुजानुगः ॥

वरहस्तोऽथवा स स्यादितरष्टङ्कसंयुतः ।
वामेतरकरष्टङ्कयुक्तोऽञ्जलिपुटोऽथवा ॥

शंकरेक्षणसंपन्नश्शोकनम्रशिरास्तु वा ।
उत्कुटासनयुक् शान्तो जटिलष्टंकधृक्करः ॥ 25

एवं वा चण्डनाथस्तु कार्यस्स्वष्टासनान्वितः ।
अथवाभयटङ्काभ्यां पाशशूलद्वयेन तु ॥

चतुर्भुजस्तु वा कार्यश्शङ्कराज्ञानुपालकः ।
विशेषस्संकुले देशे कश्चिदत्राभिधीयते ॥

कृतायामष्टहस्तस्स्यात् त्रेतायां षड्भुजो मतः ।
द्वापरे च चतुर्हस्तः कलौ तु द्विकरो मतः ॥

अन्यदेशे तु सर्वत्र विभागो नायमीरितः ।
अथवा चण्डनाथस्तु देव्या तु सहितो न वा ॥

सा देवी श्यामला हस्तद्वयाखिलविभूषिता ।
धर्मनीलाख्यया ख्याता धृतनीलोत्पला वरा ॥ 30

एवमापाद्य बेरं तु मनुभिः स्थापनं नयेत् ।
चण्डासनं चतुर्थ्यन्तं नमोन्तं मनुरासने ॥

चण्डमूर्तिपदं दीपपूर्वं नमोन्तमेव च ।
चतुर्थ्यन्तमिदं मूर्तिमन्त्रमित्यभिधीयते ॥

ध्वनिचण्डेश्वरायेति हुंफट्स्वाहापदेन च ।
मूलमन्त्रस्समादिष्टस्तदग्रे दीपसंयुतः ॥

ईशानादीनि चण्डस्य चकारेणोद्धरेद्गुरुः ।
ओं चण्डपूर्वको हुंफण्णमोन्तः स्यादुहृदादिकाः ॥

तन्नाम्ना हुंफडन्तेन मूर्तीनामपरो मनुः ।
अथवान्यप्रकारेण मन्त्रश्चण्डाय कल्प्यते ॥ 35

ज्ञानशक्तिपदैर्मन्त्रैर्हुंफट्कारसमन्वितैः ।
चण्डायेति पदोपेतैश्चण्डमन्त्रोऽयमीरितः ॥

विघ्नाङ्कुरान्ततो वाथ चण्डनाथसमीरितः ।
ततः प्रतिष्ठा कर्तव्या चाङ्कुरार्पणपूर्विका ॥

कालः पूर्ववदेवोक्तो रत्नन्यासश्च पूर्ववत् ।
सौवर्णबेरे रत्नादिविन्यासो नात्र कथ्यते ॥

कृत्वा पद्मस्य संघातं नेत्रमोक्षणमाचरेत् ।
मध्वाज्याभ्यां सहेनाभ्यां पात्रस्थाभ्यां हृदाणुना ॥

सौवर्णनखविन्यासः प्रच्छन्नपटकादिभिः ।
बेरशुद्धिं पुरादेव प्रदक्षिणमथाचरेत् ॥ 40

तोयेऽधिवासयेदेवमिन्द्राद्यष्टघटान्वितम् ।
यागार्थमण्टपं कुर्याद्धाम्नोऽग्रे तस्य पार्श्वयोः ॥,

याम्याप्यैन्द्रेषु वार्धेन्दुनिभकुण्डानि कल्पयेत् ।
नवपञ्चैकसंख्यानि वृत्तान्यश्राणि वा द्विजाः ॥

मण्डपं कल्पयित्वैवं पूर्वोक्तविधिना सह ।
उद्वास्य शिल्पिनं पश्चाच्छैवान् भक्तांश्च भोजयेत् ॥

पुण्याहप्रोक्षणं कृत्वा वास्तुहोमं समाचरेत् ।
जलाद्यानीय चण्डेशं प्राग्वत् स्नानमाचरेत् ॥

कौतुकं बन्धयित्वान्ते सर्वात्मानं समुच्चरन् ।
कल्पयेच्छयनं वेद्यामण्डजाद्यैरनुक्रमात् ॥ 45

पञ्चभिर्वाम्बरैश्शुद्धैश्शाययेद्धृदयेन तु ।
वासोभ्यां वेष्टयित्वा तु कुम्भन्यासं समाचरेत् ॥

चण्डोत्तमाङ्गदेशे तु सूत्रकूर्चाम्बरान्वितम् ।
सहैमटङ्कतोयाढ्यं विन्यसेत्तु सपल्लवम् ॥

तथाविधघटानष्टौ विन्यसेत् परितो बहिः ।
चण्डेशो देवियुक्तश्चेद्वर्धनीमुत्तरे न्यसेत् ॥

सासनेन सदेहेन चण्डेशेनाप्यधिष्ठितम् ।
कुम्भमिष्ट्वा तु पूर्वोक्तध्यानयुक् चन्दनादिभिः ॥

हृच्छिरश्चूलिकावर्मशस्त्राणि परितो बहिः ।
घटेषु पूजयेन्मन्त्री ईशानादुत्तरावधि ॥ 50

लोकपालांस्तु वा तेषु चण्डमूर्त्यष्टकं तु वा ।
गन्धपुष्पादिभिश्चेष्ट्वा तत्त्वमूर्त्यादिकं न्यसेत् ॥

आत्मविद्याशिवाख्यं च ब्रह्मादींश्च तदीश्वरान् ।
क्ष्मादिमूर्तीस्तदीशानान् लोकपानपि विन्यसेत् ॥

प्रागुक्तमूर्तयो वाथ रुद्रभक्तादयोऽथवा ।
सासनं मूर्तियुक्चण्डं ब्रह्माङ्गसहितं यजेत् ॥

मूर्तिभृद्भिर्गुरुस्सार्धं होमार्थं कुण्डमाश्रयेत् ।
संस्कृत्य वह्निं कुण्डं च दिक्षु तत्पुरुषादिकान् ॥

कोणेषु हृदयादींश्च सब्रह्माङ्गं तु चण्डपम् ।
प्रधाने तर्पयेन्मन्त्री समिदाज्यान्नसक्तुभिः ॥ 55

लाजसक्तुयवैस्सार्धं पलाशोदुम्बरौ वटः ।
प्लक्षश्च समिधो दिक्षु प्रधानेऽपि पलाशकः ॥

शमीखदिरमायूरश्रीवृक्षा वह्निकोणतः ।
तत्त्वमूर्तितदीशांश्च क्रमशस्तर्पयेत् पृथक् ॥

शान्त्यम्भःप्रोक्षणं स्वस्वमन्त्राणां च जपक्रियाम् ।
दर्भसंस्पर्शनं चैवं प्रति भागं समाचरेत् ॥

ततः प्रभाते शुद्धस्तु मूर्तिपैस्सह देशिकः ।
उद्धृत्य चण्डबिम्बं तु कुम्भानग्नींश्च तर्पयेत् ॥

प्रायश्चित्तं च पूर्णां च गुरुः कृत्वा समूर्तिपः ।
वस्त्रस्वर्णाङ्गुलीयाद्यैः पूजितः प्राप्तदक्षिणः ॥ 60

अधमा पञ्चनिष्का तु द्विगुणा मध्यमा भवेत् ।
त्रिगुणा चोत्तमा प्रोक्ता चान्येषां पूर्ववद् भवेत् ॥

प्रतिष्ठा कशिलादीनां प्राग्वत् कार्या द्विजोत्तमाः ।
सुमुहूर्ते प्रतिष्ठाप्य धाम्नि मन्त्रांस्तु विन्यसेत् ॥

देवाग्रस्थण्डिलस्थेभ्यः कुम्भेभ्यो देशिकोत्तमः ।
तत्तत्कुम्भगतैस्तोयैः स्नापयेच्चण्डविग्रहम् ॥

स्नपनं भूरि नैवेद्यमुत्सवं च चलं यदि ।
कारयेद्देवियुक्तं चेत् तस्याश्च स्थापनं नयेत् ॥



चण्डेश्वरप्रतिष्ठेयं बालस्थानान्विता न वा ।
चण्डेशस्थापनं ह्येवं यः कुर्यान्नरपुङ्गवः ॥ 65

आयुष्कामो लभेदायुर्धनार्थी चेद्वसूनि च ।
विद्याकामोऽमलां विद्यां पुत्रार्थी चेत्सुतं लभेत् ॥

लक्ष्मीकामो महालक्ष्मीं रतिकामो वरस्त्रियः ।
चण्डेश्वरं प्रपन्ना ये न तेषां भयकारणम् ॥

चण्डेशस्थापनं ख्यातं तस्य पूजा च कथ्यते ।
स्नानाद्यं पूर्ववत्कृत्वा सकलीकृतविग्रहः ॥

चण्डेशानस्य हृत्पूर्वं सामान्यार्घ्यं च हेतिना ।
द्वारपौ तेन गन्धाद्यैरिष्ट्वास्त्रद्वारमध्यमे ॥

आलयस्य प्रविश्यान्तर्भूतशुद्धिं विधाय च ।
सकलीकृतदेहस्तु कृत्वान्तश्चण्डपूजनम् ॥ 70

अस्त्रप्राकारदिग्बन्धैः स्थानशुद्धिं विधाय च ।
पाद्यमाचमनं दत्त्वा हृदार्घ्यं संहिताणुभिः ॥

अर्घ्यं वा केवलं तेन प्रोक्ष्य द्रव्यं हृदालभेत् ।
स्वस्त्रमिष्ट्वा हृदा मन्त्रानुच्चरेन्मन्त्रशुद्धये ॥

पूर्वपूजां समभ्यर्च्य चण्डेशानाय विद्महे ।
इत्युक्त्वा टङ्कहस्ताय धीमहीति पदं ततः ॥

तन्नश्चण्डः प्रदं पश्चात् पदमुक्त्वा प्रचोदयात् ।
दत्त्वा सामान्यमर्घ्यं च निर्माल्यमपनीय च ॥

संशोध्य चण्डमस्त्रेण सामान्यार्घ्योदकेन च ।
चण्डासनं च मूर्तिं च संकल्प्येशादिकान् क्रमात् ॥ 75

हृदादींश्च यथास्थानं न्यस्य मूलेन चण्डपम् ।
बिन्दोरावाह्य संस्थाप्य हृदा सन्निधिरोधनम् ॥

न्यासं च हृदयादीनामभ्यङ्गाभेदभावनम् ।
पाद्यमाचमनं चार्घ्यं दत्त्वा हृदयमन्त्रतः ॥

अभ्यङ्गोद्वर्तनाद्यैश्च पञ्चगव्यामृतैरपि ।
इष्ट्वा चण्डेश्वरं शक्तौ वस्त्रं गन्धं च पुष्पयुक् ॥

धूपदीपं हृदा दद्यादर्चनाङ्गविधानतः ।
हृदादीन् रुद्रभक्तादीन् सास्त्रानाशापतीनपि ॥

परितश्चण्डनाथस्य तानिष्ट्वार्घ्योपचारतः ।
नैवेद्यं तद्विधानोक्तं दत्त्वा ताम्बूलसंयुतम् ॥ 80

पराङ्गं चेच्छिवेनोपभुक्तं चापि निवेदयेत् ।
जपं कृत्वा निवेद्यास्मै परिवारे बलिं नयेत् ॥

पलाशसमिदाज्यान्नैर्होमं च विभवे सति ।
मूलेन तद्दशांशेन तदङ्गैर्होममाचरेत् ॥

नित्योत्सवं ततश्चण्डबेरस्यान्येन कारयेत् ।
पुष्पान्नाक्षतलिङ्गैश्च चण्डेशास्त्रेण पूजितैः ॥

प्रातर्मध्याह्नरात्रेषु चण्डबेरोज्झितेषु वा ।
पादुकाराधनोपेतं प्रविशेदालयं प्रति ॥

एकद्वित्रिचतुष्पञ्चषट्सप्ताष्टविभेदिषु ।
कालेष्विष्टेषु चण्डेशं यजेत्प्रत्यहमादरात् ॥ 85

पराङ्गचण्डनाथस्य विशेषः कथ्यतेऽर्चने ।
आदौ पर्युषितां पूजां पीठकादौ हृदाणुना ॥

चण्डेशायेति संकल्प्य यच्छिवाय निवेदितम् ।
नैवेद्याद्यं च पूजान्ते चण्डेशस्यार्चकोत्तमः ॥

गत्वा तदालयं शुद्धतोयगन्धस्रगादिभिः ।
संपूज्य शिवनिर्माल्यमपि पश्चान्निवेदयेत् ॥

आत्मार्थे च परार्थे च सामान्यमिदमीरितम् ।
नित्येऽप्येवं समादिष्टा भुक्तिमुक्तिफलप्रदा ॥

आयुः प्रज्ञां सदारोग्यं सौभाग्यमतुलां श्रियम्
अन्यच्च लभते नित्यं चण्डेशस्यार्चनेन तु ॥ १०

विशेषयजनं कुर्यात् स्नपनेनेष्टसिद्धये ।
स्नपनं पूर्ववत् किं तु मध्ये चण्डेश्वरं घटे ॥

देव्या युतस्स चेन्न्यस्या वर्धनीं तत्र तां यजेत् ।
अष्टमूर्तिंस्तु पूर्वादिदिक्स्थाः पञ्चप्रकल्पने ॥

रुद्रभक्तादयोऽष्टौ स्युर्नवकुम्भाभिषेचने ।
इन्द्राद्या वज्रपूर्वाः स्युस्तद्बाह्ये पञ्चविंशतौ ॥

पञ्चाशत्स्नपने बाह्ये चण्डेशास्त्रं तु केवलम् ।
शतस्नाने तु तद्बाह्ये हृदयं केवलं यजेत् ॥

उत्सवं दमनारोहं पवित्रारोहणं नयेत् ।
दीपावलीं वसन्तेऽप्यां मासे मासोत्सवक्रियाम् ॥ १५

नवनैवेद्यकर्माणि जीर्णोद्धारं च निष्कृतिम् ।
किं तूत्सवे ध्वजे टङ्कं वृषं वा केवलं लिखेत् ॥

शिवोत्सवेऽपि कर्तव्यश्चण्डनाथोत्सवस्त्विह ।
ध्वजहोमबलिं हित्वा केवलं यानमेव वा ॥

प्रतिमां चण्डवत् कुर्यात् तत्र टङ्काकृतिर्भवेत् ।
प्रतिष्ठोत्सवकर्मादावनुक्तं कर्म यद् द्विजाः ॥

तत्सर्वं पूर्ववद् प्राह्यं चण्डेशाणुसमन्वितम् ।

इति उत्तरकामिकाख्ये महातन्त्रे चण्डेशप्रतिष्ठाविधिः

## पञ्चषष्टितमः पटलः

## शिवभक्तप्रतिष्ठाविधिः

वक्ष्यामि शिवभक्तानां प्रतिष्ठां भोगमोक्षदाम् ।
ब्राह्मणाः क्षत्रिया वैश्याश्शूद्रा वा ह्यन्तरालजाः ॥

स्त्रियो वा गुरवश्चैवाप्यभिषिक्तो नृपोऽपि च ॥
शिवभक्तिसमोपेता जीवन्तो वा मृतास्तु वा ॥

तेषां प्रतिकृतिं कृत्वा प्रतिष्ठाप्य समर्चयेत् ।
शैवाः पाशुपताश्चैव महाव्रतधराश्च ये ॥

लकुला भैरवाद्याश्च येन मार्गेण दीक्षिताः ।
तेषां तेनैव मार्गेण स्थापनाय विधीयताम् ॥

शिवसिद्धान्तमार्गेण सर्वेषां स्थापनं परम् ।
स्वप्रधानं पराङ्गं च द्विविधं स्थापनं मतम् ॥ ५

ग्रामादौ वा नदीतीरे पुष्करिण्यास्तटेऽपि वा ।
वने चोपवने वापि पर्वते वा मनोरमे ॥

स्थानेऽन्यत्र च कर्तव्यं स्वप्रधानस्य मन्दिरम् ।
देवालयान्तरसालादौ तत्र कल्पितमन्दिरे ।

परिवारसमोपेतं स्वप्रधानं प्रकीर्तितम् ।
देवालयादौ सर्वत्र मालिकामण्टपादिषु ॥



परिवारविहीनं यत् कल्पितं तत्त्वङ्गमिष्यते ।
त्रिहस्तं तु समारभ्य द्विद्विहस्तविवर्धनात् ॥

एकविंशतिहस्तान्तो विमानव्यास इष्यते ।
आयामोत्सेधगर्भाद्यं मण्टपाद्यं तथापरम् ॥ 10

सालं च गोपुरं पुण्यमायादीनां निरीक्षणम् ।
आद्येष्टकाविधानं च गर्भसंस्थापनं तथा ॥

मूर्धेष्टकाविधानं च प्राग्वदेव समीरितम् ।
तदर्थं शिवलिङ्गं वा प्रतिमा वा शिवस्य तु ॥

स्कन्दनन्द्यादिरूपं वा मृतप्रतिकृतिं तु वा ।
कुर्यादायादिसंयुक्तं शिलाद्यैरुक्तवस्तुभिः ॥

शैलं लौहं तथा वार्क्षं मृण्मयं मणिजं तु वा ।
अर्धचित्रमथाभासं पटादिपरिकल्पितम् ॥

लिङ्गं चेत् प्रतिमा चेद्वा लिङ्गबेरोक्तवर्त्मना ।
मानं तयोश्च संग्राह्यं हर्म्याद् गर्भगृहादथ ॥ 15

द्वारात् पादोच्चमानाद्वा मानाङ्गुलवशेन तु ।
यव्यवादिप्रभेदेन कर्तुर्मात्राङ्गुलेन वा ॥

हर्म्यादिमाने नवधा कृते स्यादुत्तमादिकम् ।
त्र्यङ्गुलाद्व्यङ्गुलवृद्ध्या तु षण्णवत्यङ्गुलान्तकम् ।

मानमेतत्समाख्यातं जात्यायांशसमन्वितम् ।
वसुनन्दगुणवृद्ध्या तु भानुनाग्न्यष्टभिर्हृतम् ॥

आयो व्ययोऽथ योनिस्स्यादृक्षं भेदं दिनम् ।
नववेदहृतं सप्तनवसंख्याहृतं तु यत् ॥

वारो ह्यंशस्समाख्यातो यजमानानुकूलितम् ।
मृतनामाक्षरेणानुकूलितं च विधीयताम् । 20



लिङ्गं चेत्तद्विधानोक्त्या प्रतिमा च तथैव च ।
तदुक्ततालभेदेन कर्तव्यं स्याद् द्विजोत्तमाः ॥

मृतप्रतिकृतिं चोक्तामष्टतालेन कारयेत् ।
आसीनं स्थानकं वापि वाहनारूढमेव वा ॥

आसने स्थानके वाथ पद्मसिंहासनं तु वा ।
अधस्तात् कल्पयेद्विद्वानुभयं वा विधीयताम् ॥

यथेष्टासनयुक्तं वा समाङ्घ्रं वा यथाक्रमात् ।
आसनोन्मानविस्तारायामं तद्वदलंकृतिम् ॥

प्रतिमोक्तप्रकारेण प्रागुक्तविधिना नयेत् ।
शिखी वा बद्धकेशी वा मुण्डितो जटिलोऽथवा ॥ २५

अभिषिक्तो नृपश्चेत्तु किरीटमकुटान्वितः ।
यथेष्टायुधयुक्तो वा नमस्कारयुतोऽथवा ॥

सर्वलक्षणसम्पन्नस्सर्वाभरणभूषितः ।
गायका नृत्तयुक्ता वा पूजका वा यथेष्टकम् ॥

स्त्रियश्चेत्स्वानुरूपेण भूषणैरुपभूषिताः ।
एवं लक्षणमाख्यातं प्रतिष्ठार्थं निगद्यते ॥

मृत्संग्रहक्रियाद्यापि प्रतिमोक्तप्रकारतः ।
ततोऽङ्कुरार्पणं कुर्यात् प्रतिष्ठार्थं ततः पुरा ॥

रत्नन्यासं ततः कृत्वा नेत्रोन्मीलनमाचरेत् ।
स्थण्डिलं पूर्ववत्कृत्वा तदूर्ध्वं विन्यसेत्पटम् ॥ ३०

संकल्प्य प्रणवं पीठं तदूर्ध्वे, प्रतिमां न्यसेत् ।
हेमसूचिमहाराभिः कृष्णमण्डलमालिखेत् ॥

ज्योतिर्मण्डलमालिख्य दृष्टिं युक्तप्रमाणिकाम् ।
नेत्रमन्त्रं समुच्चार्य क्रियामेनां समाचरेत् ॥

तर्पयेन्मधुसर्पिर्भ्यां विद्वान्सौवर्णदर्व्या ।
मध्वाज्यपूरितं पात्रद्वयं तस्य प्रदर्शयेत् ॥

सौवर्णेन नलेनैव नेत्रमन्त्रेण संस्पृशेत् ।
धान्यानि गां सवत्सां च कन्यकां ब्राह्मणानपि ॥

दर्शयित्वा पटं छित्वा बेरशुद्धिमथाचरेत् ।
सर्वालंकारसंयुक्तं ग्रामादौ भ्रमणं नयेत् ॥ 35

जलेऽधिवासयेद्बिम्बं लोकपालघटान्वितम् ।
यागार्थं मण्टपं कुर्याद्धामेनाग्रेऽस्य पार्श्वयोः ॥

नवपञ्चैकसंख्यानि तत्र कुण्डानि कल्पयेत् ।
उद्वास्य शिल्पिनं पश्चाद्विप्रभोजनमाचरेत् ॥

वेद्यूर्ध्वे स्थण्डिलं कृत्वा शालिभिः पूर्वमानतः ।
प्राग्वच्छुद्धिं प्रकल्प्याथ ग्रामादीनां प्रदक्षिणम् ॥

जलाधिवासनं चैव मण्डपे कुण्डकल्पनम् ।
शाल्यादिस्थण्डिलं पञ्चशयनं चर्मनादिकम् ॥

आधाराद्यमनन्तं च धर्माद्यं च चतुष्टयम् ।
संकल्प्य मानुषं पीठं प्रणवेन प्रकल्पयेत् ॥ 40

स्नानवेदीं नयेद्बिम्बं शिल्पैरपि निर्मिते ।
पीठे संस्थाप्य बेरं तु प्रागुक्तविधिना गुरुः ॥

वस्त्रैरावेष्ट्य गन्धाद्यैर्माल्यैरुपभूषयेत् ।
बद्धप्रतिसरं बेरं शयनोपरि विन्यसेत् ॥

उपधानं न्यसेत्प्राच्यां तत्र बिम्बशिरो भवेत् ।
शिरसश्चोत्तरे भागे कुम्भं प्राधानिकं न्यसेत् ॥

अभितोऽष्टौ घटान्वस्त्रहेमसूत्रविभूषितान् ।
चन्दनोदकसंपूर्णान् फलपल्लवसंयुतान् ॥

तन्मध्यमे न्यसेन्मन्त्रांस्तद्विधानमिहोच्यते ।
सान्तमाद्यस्वरोपेतं बिन्दुयुक्तं यथा भवेत् ॥ 45

आत्ममन्त्रस्समाख्यातो हंसशब्दोऽथवा मतः ।
सान्तेनैव च वर्णेन ब्रह्माङ्गानि प्रकल्पयेत् ॥

विद्याङ्गानि च वा तस्य स्वाद्यायुक्तस्य वा मनुः ।
ह्रीङ्कारः स्त्रीप्रतिष्ठायां तेन ब्रह्माङ्गकल्पना ॥

स्वपत्नीसहिता यत्र प्रतिष्ठा प्रविधीयते ।
प्रधानघटसौम्ये तद्भार्यार्थं करकं न्यसेत् ॥

पत्नीद्वयं चेद्याम्येऽपि वर्धनीमपरां न्यसेत् ।
बह्व्यश्चेत् करका ग्राह्या बह्वः पार्श्वयोर्द्वयोः ॥

स्त्रीप्रतिष्ठासु सर्वासु वर्धन्यस्संप्रकीर्तिताः ।
पृथिव्यादीनि भूतानि मनोऽहङ्कारबुद्धयः ॥ 50

परिवारघटे पूज्या अष्टौ वा वसवो मताः ।
स्त्रीणां दिशस्तु पूर्वस्माद्देवताः परिकीर्तिताः ॥

पुरुषे लोकपाला वा पूर्वाद्यष्टघटेषु च ।
संपूज्य गन्धपुष्पाद्यैस्तत्त्वतत्त्वेश्वरान्न्यसेत् ॥

आत्मविद्याशिवाख्यं च तत्त्वत्रयमुदीरितम् ।
आत्मानमन्तरात्मानं परमात्मानमेव च ॥

तत्त्वतत्त्वाधिपत्वेन क्रमेण विनिवेशयेत् ।
स्त्रीणामप्येवमेवं स्यात् क्ष्मादयो मूर्तयो मताः ॥

अष्टौ स्युः पञ्चपक्षे तु क्ष्मादयः पञ्च एव हि ।
इन्द्राद्या मूर्तिपाः पक्षे निरृत्याद्यास्तु मूर्तिपाः ॥ 55

तत्तद्ब्रह्माणि विन्यस्य तत्तन्मूर्तिहृदि न्यसेत् ।
अकारादिक्षकारान्तं न्यस्त्वा मूर्धादिषु क्रमात् ॥



जीवन्यासं स्वमन्त्रेण न्यस्त्वाङ्गानि च विन्यसेत् ।
संपूज्य गन्धपुष्पाद्यैर्वस्त्रेणाच्छाद्य वर्मणा ॥

ततः कुण्डान्तिकं गत्वा होमकर्म समारभेत् ।
प्राग्वच्च कुण्डसंस्कारं शिवाग्न्याधानमेव वा ॥

तन्मध्ये भक्तमावाह्य साङ्गं संपूज्य तर्पयेत् ।
समिदाज्यचरूँल्लाजांस्तिलैर्द्रव्यैस्तु मूर्तिपैः ॥

पलाशोदुम्बराश्वत्थवटाः प्रागादिषु क्रमात् ।
शमीखदिरमायूरश्रीवृक्षास्त्वग्निकोणतः ॥ 60

प्रधानेऽपि पलाशस्स्यात् शतं वार्धं तदर्धकम् ।
हुत्वा पूर्णां ततो दत्वा तत्त्वतत्त्वेश्वरान् प्रति ॥

मूर्तिमूर्तीश्वरोपेतं प्रत्येकं चाहुतित्रयम् ।
कृत्वाघोराणुना होमं निश्छिद्रार्थं शतं द्विजाः ॥

स्पृष्ट्वा मूर्धादिपादान्तं शान्तितोयेन सेचयेत् ।
ततश्चान्तर्बलिं बाह्यबलिं दत्वा शुचिर्गुरुः ॥

रात्रिशेषं व्यपोह्याथ प्रभाते मूर्तिपैस्सह ।
स्नात्वा समाप्य सन्ध्यां तु कृतकृत्यो गुरूत्तमः ॥

पञ्चगोचरसंजातस्सोष्णीषस्सोत्तरीयकः ।
पञ्चाङ्गभूषणोपेतो दक्षिणातुष्टमानसः ॥ 65

तद्वत् संपूजितैर्मूर्तिधारकैरणुजापिभिः ।
अध्येतृभिश्च दैवज्ञैश्शिल्पिभिस्तोषितैर्युतः ॥

द्वारद्वाराधिपानिष्ट्वा कृतकुम्भार्चनो गुरुः ।
संपूज्य वह्निकुण्डस्थं पूर्णां दत्वा यथाक्रमात् ॥

उत्थाप्य शयनाद्बिम्बं यानमारोप्य युक्तितः ।
प्रासादादौ नयेद्बिम्बं स्नानश्वभ्रेऽथवा नयेत् ॥

रत्नन्यासं यथापूर्वं स्थापने परिकल्पयेत् ।
आसनं प्रणवं कृत्वा मूर्तिस्थाणुप्रकल्पिताम् ॥

मातृकां च ततो न्यस्त्वा जीवन्यासं समाचरेत् ।
संस्नाप्य कुम्भपानीयैः परितः स्थापितैरपि ॥ 70

वस्त्रैर्गन्धैश्च पुष्पैश्च धूपैर्दीपैर्निवेद्यकैः ।
उपचारैस्तथाचान्यैश्शिवभक्तं समर्चयेत् ॥

उत्सवं कारयेदन्ते यथाविभवविस्तरम् ।
ततः प्रभृति तं भक्तं प्रत्यहं पूजयेन्नरः ॥

आदिशैवकुलोद्भूतः पञ्चगोचरसंभवः ।
आवश्यकं तथा शौचस्नानसन्ध्यादिवन्दनम् ॥

कृत्वा प्रविश्य हर्म्यं तु सामान्यार्घ्यकरो गुरुः ।
पुरुषं प्रकृतिं चैव संपूज्य द्वारपार्श्वयोः ॥

प्रविश्य गर्भगेहं तु परमात्मानमव्ययम् ।
वास्तुं मध्ये समभ्यर्च्य भूतशुद्धिं विधाय च ॥ 75

कृतमन्त्रतनुः पश्चात् स्थानशुद्धिं विधाय च ।
परिकल्प्य विशेषार्घ्यं कुसुमाक्षततोययुक् ॥

प्रोक्षयेद् द्रव्यजालं तु प्रागुक्तविधिना नरः ।
प्रणवाद्यान् पठेन्मन्त्रान् नमोन्तान्मन्त्रशुद्धये ॥

अस्त्रतोयेन बेराद्यं स्नापयेद् बेरशुद्धये ।
षडुत्थमासनं कृत्वा पूर्वोक्तेन विधानतः ॥

तन्मध्ये कल्पयेन्मूर्तिं मूर्तिमन्त्रेण पूजितम् ।
तत्तद्रूपसमोपेतं तत्तन्मूलाणुना बुधः ॥

जीवन्यासं ततः कृत्वा हृदयादि यथा न्यसेत् ।
पाद्यमाचमनं चार्घ्यं हृदयेन निवेदयेत् ॥ 80

संस्नाप्य शुद्धतोयेन पञ्चगव्यादिभिस्तु वा ।
संमृज्य वाससा वस्त्रं गन्धं पुष्पं सधूपकम् ।

दीपेन सहितं दद्यान्नैवेद्यं सोपदंशकम् ।
ताम्बूलं च त्रिसन्ध्यासु दद्यात्संध्याद्वयेऽपि वा ॥

अथवा त्वेकसन्ध्यायां वस्तुरुत्सवयुतं न वा ।
दीपान्तं वा निवेद्यान्तं यजेच्छक्त्यनुरूपतः ॥

अयने विषुवे चैव संक्रान्तौ ग्रहणादिषु ।
स्नपनं विधिना कार्यं प्रागुक्तेन क्रमेण तु ॥

मध्यकुम्भे तु भक्तस्स्यात् क्ष्मादयः प्रथमावृतौ ।
स्वराष्षोडश तद्बाह्ये तद्बाह्ये कादयो मताः ॥

एवमुत्तमकल्पस्स्यादावृतिद्वययुक् समम् ।
एकावरणसंयुक्तमधमं त्विति कीर्तितम् ॥

प्रतिमासं ततः कुर्यादुत्सवं बिम्बे सति ।
भक्तजन्मदिने वापि कर्तुर्जन्मदिनेऽपि वा ॥

संवत्सरोत्सवः कार्यः सप्ताहं च विवाहकम् ।
नवाहं वाथ सप्ताहं पञ्चाहं त्रिदिनं तु वा ॥

अथवैकदिनं वापि बलिहोमसमन्वितम् ।
ध्वजारोहणपूर्वादि कर्तव्यं कर्तुरिच्छया ॥

ध्वजे तु वृषभः कार्यः सर्वेषामुत्सवादिषु ।
स्वस्वजातिवशेनोक्तमङ्गलाष्टकसंयुतम् ॥

भेरीसंताडनं रात्रौ भक्तास्त्रेण समन्वितम् ।
इन्द्रादीनां बलिं दद्याद् गन्धं पुष्पादिसंयुतम् ॥

यागाधिवासनं कुर्यादुत्सवस्यादिरात्रके ।
यागशालां विधानेन कृत्वा वेदिसमन्विताम् ॥

पूर्वादिकुण्डसंयुक्तं पञ्चकुण्डयुतं तु वा ।
सर्वमङ्गलसंयुक्तं मङ्गलाङ्कुरमाचरेत् ॥

बह्वर्थमुत्सवार्थं च भक्तप्रतिकृतिं द्विजाः ।
अपरां च महतीं कृत्वा प्रतिष्ठाप्य विधानतः ॥

तत्र प्रतिसरं बध्वा वेदिमध्ये विधानतः ।
स्थण्डिलं शालिभिश्च कृत्वा संस्थापयेद्घटान् ॥

प्रतिष्ठाविधिना तेन तत्रोक्तानेव तान्यजेत् ।
प्रत्यहं पूजयेद्देवान् सायं प्रातर्गुरूत्तमः ॥

गन्धपुष्पादिसंयुक्तमन्ते होमं समाचरेत् ।
द्रव्याण्यत्रापि विप्रेन्द्राः प्रतिष्ठोक्तप्रकारतः ॥

सायं प्रातर्बलिं दद्यात् क्षुद्रबिम्बसमन्वितम् ।
बल्यन्ते चोत्सवं कुर्यात् सर्वालङ्कारसंयुतम् ॥

परिवेषक्रमं कुर्याद् गेयनृत्तादिसंयुतम् ।
अन्ते चूर्णोत्सवं कृत्वा तीर्थकर्म समाचरेत् ॥

प्रत्यहं मूलबेरस्य पूजा वैशेषिकी भवेत् ।
शुद्धस्नपनमन्ते च मूले बेरादिके नयेत् ॥

ध्वजोत्थानविहीनं वा बलिहोमोज्झितं तु वा ।
केवलं तूत्सवं कुर्यादशक्तश्चेन्मुनीश्वराः ॥

शिवभक्तप्रतिष्ठां तु यः कुर्यान्नरसत्तमः ।
आयुरारोग्यविजयश्रीकीर्तिफलमाप्नुयात् ॥
अन्ते सायुज्यमाप्नोति नात्र कार्या विचारणा ।

इति उत्तरकामिकाख्ये महातन्त्रे शिवभक्तप्रतिष्ठाविधिः

षट्षष्टितमः पटलः ॥

---



## विद्यापीठप्रतिष्ठाविधिः

विद्यापीठप्रतिष्ठां तु प्रवक्ष्यामि समासतः ।
सा विद्या द्विविधा प्रोक्ता संस्कृताग्राम्यकेति च ॥

प्रासादादौ चतुर्दिक्षु तद्विदिक्ष्वन्तरालके ।
भक्तोक्तस्थानके वापि विद्यास्थानं प्रकल्पयेत् ।

अङ्गुलत्रयमारभ्य व्योमाङ्गुलविवृद्धितः ।
पञ्चविंशतिमात्रान्तं भवेत् पुस्तकदैर्घ्यकम् ॥

व्योमाङ्गुलपादवृद्ध्या रविमात्रावसानकम् ।
प्रमाणं तु विशाले स्यात् पक्षपट्टीयुतं तु वा ॥

भूर्जत्वक्कुलसं भूतं श्रीतालीदलमेव वा ।
तालसंभूतपत्रं वा सुवर्णादिविनिर्मितम् ॥

शैलदारुकृतं वापि लेखयेदक्षरैः शुभैः ।
मष्या वा कुङ्कुमाद्यैर्वा पुष्पाद्यैर्निर्मितेन वा ॥

लिखेत् तूलिकया वापि देशिकः शिष्य एव वा ।
शुभवारर्क्षयोगादावारभेदनुकूलभे ॥

पशुना लेखयेन्नैतच्छिवज्ञानं प्रयत्नतः ।
न समीपे पशूनां तु कुर्यादध्ययनं बुधः ॥

नानादेशसमुद्भूतैरक्षरैः कान्तिसंयुतैः ।
लेखयेच्छुपङ्क्त्या तं पत्रप्रान्ते न लेखयेत् ॥

गन्धाद्यैः शिवमभ्यर्च्य मातृकां शिवरूपिणीम् ।
वस्त्राद्यैर्देशिकश्रेष्ठ्वा पत्रिकामपि पूजयेत् ॥

गोमयालिप्तभूभागे रङ्गलेखसमन्विते ।
प्रकीर्णपुष्पप्रकरे सधूपेन च धूपिते ॥

स्थलदीपसमोपेते शुद्धशैवसमावृते ।
लिखेद्वा शृणुयाद्वापि पठेद्वादौ शुचिर्नरः ॥

नाशुद्धं लेखयेद्विद्वान्यथालिखितपाठकैः ।
शिवज्ञानस्य कालेन प्रणष्टस्य प्रमादतः ॥

ऊनातिरिक्तवर्णस्य लिखितस्य प्रमादिभिः ।
प्रमादीकृतपाठस्य नाशितस्याल्पबुद्धिभिः ॥

अल्पज्ञानसमोपेतैराचार्यैः शोधितस्य च ।
व्यर्थैः पदैरुपेतस्य पुनरुक्तस्य चार्थतः ॥

पूर्वोत्तरविरुद्धस्य स्वसिद्धान्तविरोधिनः ।
छन्दसाहीन नष्टस्य शब्दार्थरहितस्य च ॥

इत्येवमादिभिर्दोषैरुपेतस्य क्वचित् क्वचित् ।
यः करोति पुमान् सम्यक् संस्कारं देशिकः सुधीः ॥

शिवतत्त्वार्थविद्धान्यः स विद्याः पारमेश्वराः ।
अध्यापयेच्छनैश्शिष्याञ्शिवभक्तान् प्रबोधयेत् ॥

शिवविद्यानुसारेण विद्यादानं तदुच्यते ।
संस्कृतैर्द्राविडैर्वाक्यैर्देशभाषाप्रकारकैः ॥

प्राकृतप्रभवैः शब्दैर्विशुद्धैः संस्कृतैरपि ।
अत्र लौकिकशब्दैश्च यशिष्यमनुरूपतः ॥

देशभाषासुरायैश्च तथाभूतागमैरपि ।
प्रदेशवर्तिभिस्सर्वदेशस्थं बोधयेद्यथा ॥

यथा शिवस्य नैवान्तस्संपूर्णस्य महात्मनः ।
तथा विद्याप्रदानस्य नान्तस्सर्वगुणात्मनः ॥

शिवान्तगुणमैश्वर्यं विद्यादानस्य तत्फलम् ।
इह कीर्तिः श्रियो ब्राह्मी प्रज्ञा कान्तिर्धनं सुखम् ॥

योऽशुद्धमात्मनाधीत्य ज्ञानमध्यापयेत्परम् ।
स याति नरकं घोरं पापीयाञ्ज्ञाननाशकः ॥

शिववत् पूजयेद्भक्त्या शिवज्ञानप्रकाशकम् ।
प्रलब्धं लेखयेद्विद्वान् यथाशक्ति सुबुद्धिमान् ॥ 25

यावदक्षरसंख्याः स्युः शिवज्ञानस्य पुस्तके ।
तावद्युगसहस्राणि दाता शिवपुरे नरः ॥

दश पूर्वान् समुद्धृत्य दश वंश्यांश्च बुद्धिमान् ।
मातृः पितृन्धर्मपत्नीस्तैस्स्वर्गं समवाप्य च ॥

स्वर्गे संस्थाप्य तान् सर्वान् स्वयं शिवपुरं व्रजेत् ।
अपि श्लोकं तदर्धं वा शिवज्ञानस्य यः पठेत् ॥

वाचयेच्चिन्तयेद्वापि लिखेद्वा लेखयेत्तु वा ।
शृणुयादेकचित्तस्तु तदर्थं च विचारयेत् ॥

अन्येभ्यः श्रावयेद्यस्तु तस्य पुण्यफलं महत् ।
शिवज्ञानाभियुक्तस्य भोजनाच्छादनादिभिः ॥ 30

आसमाप्तेस्तु संरक्षेद्विद्यादानफलं लभेत् ।
मूल्येन कारयेद्वाथ तदेव फलमश्नुते ॥

यस्य राष्ट्रे शिवज्ञानव्याख्यानं वर्तते द्विजाः ।
स राजा वर्धते राष्ट्रे स राजाधिप ऊर्जितः ॥

राज्ये राजगुरुत्वेऽपि सैनापत्येऽन्यकर्मणि ।
पुरोहितत्वे सर्वेषां राजकार्येऽन्यदर्शने ॥

शुद्धशैवो भवेद्योग्यस्स चेत्सान्तानिको वरः ।
यत्सिद्धान्ताविरोधेन वेदं वेदाङ्गमेव च ॥

तथा पाशुपतादीनि गारुडादीन्यनेकधा ।
निश्चिनोति च शास्त्रार्थं स धर्मं वेत्ति नेतरः ॥ 35

निश्चिनोति च शास्त्रार्थं शुद्धशैवविरोधतः ।
बुद्धिस्स्यात्तामसी तस्य स च धर्मबहिष्कृतः ॥

तस्मात्सिद्धान्तशैवेन शुद्धशैवविदादरात् ।
शान्तिकं पौष्टिकं कर्म नेयं राज्ञा विशेषतः ॥

अन्येषामपि सर्वेषामभिचारादिकं तु वा ।
विधेयं धर्मनिष्ठेन सान्तानिकवरेण तु ॥

तेनैवानुष्ठितं कर्म फलदं सर्वदा नृणाम् ।
एवं विद्याप्रभावत्वात् स्थापनं वक्ष्यतेऽधुना ॥

त्रिहस्तं तु समारभ्य त्रयस्त्रिंशत्करान्तकम् ।
विद्याशालाविशालः स्यात् प्रासादो वाथ मण्टपः ॥ 40

एकशालादिभेदेन शाला वा लक्षणान्विता ।
विद्यापीठस्य विस्तारस्सप्ताङ्गुलविशालतः ॥

द्व्यङ्गुलविवृद्ध्या तु स्यादेकत्रिंशदङ्गुलः ।
तेनायामस्समाख्यातः पञ्चाशत्करजान्तकः ॥

चतुरश्रसमो वा स्यादायताश्रस्तु वा भवेत् ।
अन्यदासनविध्युक्तमार्गेण सकलं नयेत् ॥

संस्कारांश्च ततो विद्यात् प्रोक्षयेत्पञ्चगव्यतः ।
मण्डपे स्थण्डिलं कृत्वा वस्त्रोर्ध्वे तां निवेशयेत् ॥

आसनाद्यं शिवे यद्वन्मूर्तिमूर्तीशसंयुतम् ।
शिवभेदे शिवः पूज्यो रुद्रभेदे स एव हि ॥ 45

मध्यमे शिवकुम्भं तु पार्श्वयोर्वर्धनीद्वयम् ।
द्वयोरेकैव पूजा स्याद्विद्येशान् बहिरावृतान् ॥

संपूज्य गन्धपुष्पाद्यैर्होमं प्राग्वत्समाचरेत् ।
समिदाज्यतिलोपेतं हविषा च समन्वितम् ॥

यवेनाष्टोत्तरशतं हुत्वा पूर्णां समाचरेत् ।
संप्राप्तदक्षिणः कुर्यान्मन्त्रन्यासं गुरूत्तमः ॥

मध्यमे तु शिवं न्यस्त्वा देवीं पट्टिकयोर्न्यसेत् ।

इति उत्तरकामिकाख्ये महातन्त्रे विद्यापीठप्रतिष्ठाविधिः **सप्तषष्टितमः पटलः**



## दशायुधप्रतिष्ठाविधिः

दशायुधप्रतिष्ठां तु वक्ष्ये लक्षणपूर्वकम् ।
वज्रं शक्तिं च दण्डं च खड्गं पाशं तथाङ्कुशम् ॥

गदां त्रिशूलं पद्मं च चक्रं चेति दशायुधम् ।
एकवक्त्रं द्विनेत्रं च करण्डमकुटान्वितम् ॥

कृताञ्जलिपुटोपेतं द्विबाहुं सर्वलक्षणम् ।
प्रतिमालक्षणप्रोक्तमानेनैव समाचरेत् ॥

जाये शक्तिगदे शेषे चक्रपद्मे नपुंसके ।
शेषाः पुमांसो विज्ञेयास्त्वष्टतालविनिर्मिताः ॥

स्वमूर्ध्न्यायुधसंयुक्ताः स्वकीयादेकतालतः ।
तालार्धांशविवृद्ध्या तु चतुस्तालावसानकम् ॥

कल्पयेदायुधं विद्वानस्त्रवर्गोक्तमार्गतः ।
तेषां मूर्ध्न्यायुधं कार्यमथवा मकुटोपरि ॥

हस्तयोरन्तरे वापि वामेतरकरेऽपि वा ।
परित्यज्याङ्कुशं यद्वा तत्स्थाने कल्पयेद्ध्वजम् ॥

ततः प्रतिष्ठा कर्तव्या तद्विधानमिहोच्यते ।
रत्नन्यासं पुरा कुर्यान्नेत्रमोक्षणकं ततः ॥

तर्पणं नेत्रयोर्धान्यदर्शनं मधुसर्पिषा ।
गव्याभिषेचितं शस्त्रमलंकृत्य नयेत्ततः ॥

ग्रामप्रदक्षिणं नीत्वा शाययेज्जलमध्यमे ।
प्रागुक्तमण्डपं कृत्वा चतुर्द्वारसमन्वितम् ॥ 10

एकवेदिसमोपेतं पृथग्वेदियुतं तु वा ।
मण्डपं दशसंख्यातं प्रपाकुण्डसमन्वितम् ॥

पूर्वस्मिन् स्थलदिक्कुण्डसंस्थानैरन्वितं यथा ।
एकस्मिन्मण्टपे स्वष्टदिक्कुण्डं परितो भवेत् ॥

इन्द्रेशानान्तरे वृत्तं पितृवारुणमध्यमे ।
वृत्तकुण्डं भवेदेवं कुण्डानि दश संख्यया ॥

ब्राह्मणान् भोजयेद्वास्तुहोमं प्रत्येकमेव वा ।
पुण्याहप्रोक्षणान्ते तु स्थण्डिलं लक्षणान्वितम् ॥

शयनं कल्पयेद्वस्त्रैरनेकैरेकतोऽपि वा ।
आसनं प्रणवं कृत्वा दर्भैः पुष्पैः परिस्तरेत् ॥ 15

जलानीतं च सुस्नातं पूजितं कृतकौतुकम् ।
शयने शाययेद् बिम्बं प्रदक्षिणशिरोऽन्वितम् ॥

वस्त्रैराच्छादयेत्सर्वान् कुम्भान् संस्थापयेद् गुरुः ।
परितोऽष्टघटानापि कलशान् प्राग्दिगादितः ॥

स्वस्ववर्णैश्च मूलाणुं ब्रह्माण्यङ्गानि कल्पयेत् ।
मध्यकुम्भे च मूलाणुं दिक्षु ब्रह्माणि पूजयेत् ॥

विदिक्ष्वङ्गानि संपूज्य व्याप्तिं पुरुषगोचराम् ।
स्मृत्वा होमं स्वकैश्चैव समिदाज्यतिलान्वितम् ॥

हविषा पूर्णया युक्तं स्वाग्नौ स्वं होममाचरेत् ।
पलाशोदुम्बराश्वत्थवटा दिक्षु विदिक्षु च ॥ 20

शमीखदिरमायूरश्रीवृक्षास्संप्रकीर्तिताः ।
पलाशो ब्रह्मणो विष्णोश्श्रीवृक्षस्समिधो मताः ॥

प्रातः पूर्णाहुतिं दत्वा मन्त्रन्यासं समारभेत् ।
संपूज्य गन्धपुष्पाद्यैर्नैवेद्यसहितं यथा ।

स्नपनं कारयेन्नो वा तद्गुरुत्सव एव हि ।
एवं यः कारयेन्मर्त्यः सर्वारिष्टैर्विमुच्यते ॥

इति उत्तरकामिकाख्ये महातन्त्रे दशायुधप्रतिष्ठाविधिः **अष्टषष्टितमः पटलः** ॥

## त्रिशूलस्थापनविधिः

त्रिशूलस्थापनं वक्ष्ये तल्लक्षणपुरस्सरम् ।
हेमराजतताम्रैर्वायसेनाश्मादिभिस्तु वा ॥

गर्भगेहे नवांशे तु त्रिभागान्तं नवांशतः ।
महतामेकभागं तु शूलानां मानमिष्यते ॥

प्रत्येकमष्टधा भक्त्वानेकधा मानमेव च ।
द्वारस्तम्भोदयादेव मानं वा परिभाष्यताम् ॥

द्विहस्तादेकमात्रद्धर्या चतुर्हस्तान्तमेव वा ।
जात्यंशं पूर्ववन्नीत्वा कल्पयेद्देशिकोत्तमः ॥

यल्लब्धं त्रिंशदंशादि शतान्तादनुभाजयेत् ।
भागमेकं प्रयुञ्जीयाच्छुभायादिप्रसिद्धये ॥ 5

लौकिकं यौगिकं चेति द्विविधं शूलमिष्यते ।
यजमाननृपग्रामानुकूलं लौकिकं मतम् ॥

जात्यायांशोज्झितं रुद्राक्षानुकूलसमन्वितम् ।
अङ्गुलैर्निर्मितं यत्तु यौगिकं शूलमिष्यते ॥

लौकिकं चान्यधामस्थबेरसाधारणं मतम् ।
यौगिकं चान्यनगरस्थानकर्मानुरूपि यत् ॥

तदन्यत्रापि योज्यं वा प्रतिमास्वेवमेव वा ।
उत्सेधं दशधा कृत्वा व्योमद्वित्रिभिरेव वा ॥

तन्मध्याष्टांशमानं वा मध्यपत्रोच्चमानकम् ।
पादमानयुतं वाथ तन्मानं च पृथक् पृथक् ॥ 10

तद्विंशदंशं कृत्वैव द्वित्रिवेदशरांशकैः ।
रससप्ताष्टनवभिर्मध्यपत्रस्य विस्तरः ॥

संग्राह्य पत्रमानं तु चतुरश्रं समं नयेत् ।
पत्रमानं विसृज्याथ पार्श्वयोरुभयोरपि ॥

वृत्ताकारं नयेत्तत्र पत्रमानेन वोभयोः ।
मध्यपत्रततिर्यद्वत् पार्श्वपत्रततिस्तथा ॥

चतुष्पञ्चषडंशोनवृद्धिर्वा तारमिष्यते ।
मध्यपत्राद् बहिश्चान्तर्मध्यसूत्रसमाश्रयात् ॥

पार्श्वपत्रे प्रकर्तव्ये कृशमूलाग्रसंयुते ।
पत्रमूलफलार्धं च मूलतारं विवर्धयेत् ॥ 15

अधःपत्रं विचित्रं च पत्राग्रं तु कृशं भवेत् ।
पत्रतारेण चाग्रे तु तदर्धेनाथ पादतः ॥

अधिकं वाथ तत्पार्श्वपत्राग्राभ्यां मुनीश्वराः ।
पत्राग्रमध्यमं तद्द्विशिष्टं वा प्रकल्पयेत् ॥

तद्वन्मूलान्तरं प्रोक्तं पार्श्वपत्रद्वयोरपि ।
पत्रतारं चतुष्पञ्चरससप्ताष्टभागतः ॥

नवांशांशेन वा प्रोक्तं घनं पत्रेषु वान्यथा ।
यवार्धं तु समारभ्य यवपादविवर्धनात् ॥

अङ्गुलान्तप्रमाणं वा मध्यदेशे घनं भवेत् ।
मध्यपत्रस्य मध्यात्तु हीनं तत्पत्रपार्श्वकम् ॥ 20

मध्यपत्रस्य मूलेऽग्रमध्ये पार्श्वद्वयोरपि ।
एकद्वित्रियवैर्वापि निर्गतं मुकुलं नयेत् ॥

पत्रायामं त्रिपञ्चांशं कृत्वैकद्वित्रिभागतः ।
पादायामस्तु मूले स्यात्तदर्धं पार्श्वपत्रयोः ॥

तदर्धविस्तरस्तस्य पादो वा परिकीर्तितः ।
द्विगुणो मध्यपादस्य विस्तारः पार्श्वपादतः ॥

पत्राणां पादमूले तु कुर्याद्वा चित्रमण्डनम् ।
तस्याधः पालिका कार्या पत्रायामार्धभागतः ॥



हीनाधैकेन रुद्रांशी द्वित्रिभिर्वर्धिताथवा ।
फलकाविस्तृतिं भक्त्वा नवधैकेन वार्धतः ॥ 25

पादेन वा त्रिपादेन घनं चाधो द्विपङ्कजम् ।
एकेन कर्णविस्तार इष्टांशेन मतो द्विजाः ॥

पालिकाधो घटाकार उत्सेधः स्यात् त्रिपादतः ।
तदर्धं च गलं प्राग्वत् कर्तव्यं मुनिपुङ्गवाः ॥

पादोनकुम्भतारेण वार्धेनास्यं प्रकल्पितम् ।
घटफलादिकामानं युगधा विभजेच्च तत् ॥

एकभागान्तरं कुर्यात् तत्प्रमाणेन हीरिका ।
हीरिकाधःप्रकर्तव्यो दण्डस्तु विधिना द्विजाः ॥

आस्यतारचतुर्भागत्रिभागो दण्डविस्तरः ।
तदर्धं लोहदण्डश्चेद् यथाशोभांशतोऽथवा ॥ 30

दण्डमूले तु पद्मं वा मध्यपत्रसमं तु वा ।
तदर्धं वान्तरेऽष्टांशे नवधा मानमेव वा ॥

विस्तारस्तत्समं तूच्चं त्रिपादं वार्धमेव वा ।
पादं वान्तरमानं वा तदुच्चे दशधा कृते ॥

पट्टिकैका त्रिभिर्द्वाभ्यां द्वाभ्यां वांशैः कुशेशयम् ।
वृत्तं वा चतुरश्रं वा द्विमिश्रं वा प्रकल्पयेत् ॥

हीरिकासममानेन तस्योर्ध्वे पट्टिकाथवा ।
मध्यपत्रस्य मध्ये तु लिखेद्वाब्जं तु तन्मुखम् ॥

अथवा मध्यपत्रस्य मूले वृषभवाहनम् ।
पत्रोच्चनवभागैकद्वित्रिवेदशरोच्चकम् ॥ 35

देव्या समायुतं वाथ वृषभेण युतं न वा ।
देवान्तरं वा लोकेशानस्त्रान्वेष्टप्रमाणतः ॥

अथवा पालिकायास्तु विदिक्ष्वश्वत्थपत्रवत् ।
मालाचतुष्टयं कुर्याद् तद्विहीनं तु वा द्विजाः ॥

टङ्कास्ययुक्तं दण्डाग्रमथवा परिकल्पयेत् ।
पालिकोपरि कोणेषु कारयेद्वा वृषेश्वरम् ॥

शैलजे मृण्मये शूले विशेषः कश्चिदुच्यते ।
मध्यपत्रसमायामं त्रिपादेनार्धतोऽपि वा ॥

पादेन मध्यमेऽष्टांशमानाद्वा दण्डविस्तरः ।
विस्तारोच्चसमं तद्वद्विस्तारसममेव वा ॥ 40

यथा दण्डघनं प्रोक्तं पत्राणां वा घनं तथा ।
पादभूषणमण्ड्यादि पत्राधो वा प्रकल्पयेत् ॥

चतुरश्रशिलायां तु शूलाकारं तु वा लिखेत् ।
त्रिशूलापरभागे तु वृषभं वा समालिखेत् ॥

अथवा दण्डमानेन पुरुषं जटिलं तु वा ।
पूर्वभागे परे दण्डं तदूर्ध्वे शूलमाचरेत् ॥

वृषाग्रे वृषपृष्ठे वा बलिपीठाग्र एव वा ।
सुदृढं स्थापयेच्छूलं तत्प्रतिष्ठा निगद्यते ॥

तदर्थमाहरेद्वृक्षाञ्छूलार्थे ये प्रशंसिताः ।
प्रोक्तकाष्ठैर्वाराद्यं तद्वदेवाङ्कुरार्पणम् ॥

संघातमष्टबन्धाद्यैः कुर्यादष्टेन बुद्धिमान् ।
पत्रसंघातमार्गेण चोर्ध्वाधः खण्डयोरपि ॥

रत्नन्यासो न कर्तव्यस्तथा नयनमोक्षणम् ।
अचलस्थापनं चेत्तु रत्नन्यासं तु कारयेत् ॥

विद्यते प्रतिमाद्यं चेत् तस्य दृग्मोक्षणं नयेत् ।
शुद्धिं कृत्वा मृदाद्यैस्तु पुरादीनां प्रदक्षिणम् ॥

जलाधिवासनं कृत्वा ततो मण्टपमाश्रयेत् ।
पूर्वोक्तमानं भूतैकप्रहकुण्डसमन्वितम् ॥

सन्ध्यक्तलक्षकोपेतं विप्रभुक्त्वा च पावनम् ।
वास्तुहोमसमायुक्तं वेद्यां स्थण्डिलसंयुतम् ॥ 50

शयनेनापि संयुक्तं पञ्चकेनाण्डजादिना ।
ततो त्रिम्बं समानीय स्नापयेत्पूर्ववर्त्मना ॥

कौतुकं बन्धयेत्पश्चात् पद्मपत्रेषु वा त्रिषु ।
वेरे च वृषभे चैव बन्धयेत् कौतुकं गुरुः ॥

शयने शाययेत्पश्चात् प्राक्शिरश्चोर्ध्ववक्त्रकम् ।
आच्छाद्य श्वेतरक्ताभ्यां वासोभ्यामसमुच्चरन् ॥

त्रिशूलस्य शिरोदेशे वज्रहेमकमलान्वितम् ।
शिवाख्यं संयजेत्तत्र चतुर्बाह्विन्दुभूषितम् ॥

चतुर्वक्त्रं ज्वलत्केशं त्रिणेत्रपरिमण्डितम् ।
स्वास्ये दंष्ट्रान्वितं शक्तिशूलाभयवरान्वितम् ॥ 55

विद्युत्पुञ्जनिभं भीममशनिध्वनिसंयुतम् ।
द्विरष्टवर्षेणोपेतं सुभासं स्वस्तिकान्वितम् ॥

यत्रास्ति प्रतिमा शर्वे शिवकुम्भं च वर्धनीम् ।
वृषो यत्रास्ति तत्कुम्भं तेषु तानर्चयेत्क्रमात् ॥

वज्रादीन् वसुकुम्भेषु परितःसंस्थितेषु च ।
तत्त्वतत्त्वेश्वरोपेतं मूर्तिमूर्तीश्वरान्न्यसेत् ॥

पूर्ववत् प्रतिमायां च वृषे च गुरुपुङ्गवाः ।
दण्डमध्याग्रपत्रान्तं तत्त्वतत्त्वेश्वरान्न्यसेत् ॥

शूलस्य मूर्तयः प्राग्वद्गाद्या मूर्तिपा मताः ।
न्यस्त्वैवं मूर्तिमूर्तीशाञ्छिवाख्यं विन्यसेद्गुरुः ॥ 60

ततस्तद्व्यापकत्वेन सर्वान्देवमनून्न्यसेत् ।
मध्यपत्रे न्यसेद्रुद्रं ब्रह्माणं दक्षपत्रके ॥

वामे विष्णुं समावाह्य पालिकायां तु पार्वतीम् ।
षण्मुखं कुम्भदेशे तु कुम्भस्यास्ये विनायकम् ॥

दण्डस्याग्रे तु शास्तारमादित्यान्दण्डमध्यमे ।
तन्मूले चण्डराजं च लक्ष्मीं पूर्वदलाग्रके ॥

दक्षिणे मातरःसप्त ज्येष्ठां पश्चिमदिग्दले ।
दुर्गां वै सौम्यदेशे तु रुद्रानर्कान्वसूनपि ॥

दण्डमूलेऽश्विनौ चैव अष्टादशगणांस्तथा ।
होमं कुर्यात्तदन्ते तु कृत्वा कुण्डाग्निसंस्कृतिम् ॥ 65

समिदाज्यान्नलाजैश्च तिलसर्षेन्द्रसंयुतम् ।
पलाशोदुम्बराश्वत्थवटाः प्रागादिदिक्षु च ॥

पलाशस्त्वन्यकुण्डेषु स च सर्वत्र वा मतः ।
प्रधाने तर्पयेद्धीमाञ्छिवं साङ्गं गुरूत्तमः ॥

पूर्वस्मिन्पार्वतीं दक्षे ब्रह्माणं विष्णुमुत्तरे ।
सेनानीं पश्चिमे कुण्डे रवीनग्निदिशि स्थितौ ॥

विघ्नेशं नैर्ऋते वायौ मदनं चण्डरुद्रकम् ।
ईशानकुण्डे पूर्वस्मिँल्लक्ष्मीं दक्षे तु मातरः ॥

ज्येष्ठां तु पश्चिमे कुण्डे दुर्गामुत्तरतो दिशि ।
तद्दिङ्मूर्त्यादिसंयुक्तं पूर्वसंख्यासमन्वितम् ॥ 70

रुद्रार्कवसवोऽश्विन्यौ अष्टादश गणा अपि ।
एकैकाहुतिदानेन तर्प्याः कुण्डे प्रधानके ॥

वृषारूढादिदेवांश्च पूर्ववत् तर्पयेद्गुरुः ।
वज्रादीन् पङ्कजे सर्वान्देवान् प्राग्वन्निवेशयेत् ॥

तत्तत्कुम्भजलैश्चैव स्नापयेच्छूलमादरात् ।
स्नपनं भूरि नैवेद्यमुत्सवं कारयेद्बले ॥

अनुक्तमत्र संप्राह्यं सामान्यस्थापनोदितम् ।
त्रिशूलस्थापनं चेवं कुर्याद्यो नरसत्तमः ॥

भुक्त्वा भोगानिहैवान्ते मोक्षं चैव समाप्नुयात् ।

इति उत्तरकामिकाख्ये महातन्त्रे त्रिशूलस्थापनविधिः

एकोनसप्ततितमः पटलः ॥



## सिंहासनप्रतिष्ठाविधिः

सिंहासनविधिं वक्ष्ये श्रूयतां द्विजसत्तमाः ।
देवादीनां नृपादीनां मर्त्यानां च महात्मनाम् ॥

देवाद्याःशिवपूर्वाःस्युर्नृपाद्या बहवो मताः ।
चक्रवर्ती भवेदाद्यस्त्वधिराजो द्वितीयकः ॥

तृतीयःस्यान्नरेन्द्रस्तु तेषां लक्षणमुच्यते ।
चतुःसमुद्रपर्यन्तं पृथ्वीं यः परिपालयेत् ॥

चक्रवर्ती समाख्यातःसतराज्यं प्रपालयेत् ।
अधिराजस्समाख्यातस्त्रिराज्यं यस्तु पालयेत् ॥

नरेन्द्रःस तु विज्ञेयस्त्वन्येऽपि बहवो मताः ।
पार्ष्णेयप्रमुखास्तेषामासनानि बहून्यपि ॥ 5

द्वारोत्सेधत्रिभागेन उत्तमं हीनमर्धतः ।
अन्तरं त्वष्टधा कृत्वा नवोत्सेधाः प्रकीर्तिताः ॥

द्वारोदयसमं वाथ नवभागोनमेव वा ।
नरेन्द्रसदृशं तस्य बाहूरुनाभिदघ्नजम् ॥

प्रदेशमानमेतत् स्यान्नृपाणामेव कीर्तितम् ।
तिथ्यङ्गुलं समारभ्य द्व्यङ्गुलविवर्धनात् ॥

पञ्चपञ्चाशदंशान्तं तुङ्गानि कथितानि तु ।
उत्सेधसदृशो वाथ त्रिपादोऽर्धस्तु वा मतः ॥

विस्तारो ह्यन्तरं कृत्वा चतुर्धा नवमानकम् ।
हीनानां हीनमानं स्याच्छ्रेष्ठानां सर्वमिष्यते ॥ 10

चतुरश्रायताश्रं वा सिंहपीठं विधीयताम् ।
चतुरश्रं समं वृत्तं सुखदं चक्रवर्तिनाम् ॥

अष्टमांशं समारभ्य तद्वृद्ध्या द्विगुणाधिकम् ।
सिंहासनायतं कुर्यादङ्गुलैर्वाथ कारयेत् ॥

अङ्गुलद्वयमारभ्य द्व्यङ्गुलविवर्धनात् ।
द्विगुणान्तं विधेयं स्यादायामेऽप्येवमीरितम् ॥

पादबाह्यं तु देवानां तन्मध्ये चक्रवर्तिनाम् ।
अन्येषामपि सर्वेषां पादान्तं मानमिष्यते ॥

सर्वं सर्वेषु वा प्राह्यं पादविस्तार उच्यते ।
सार्धाङ्गुलं समारभ्य वर्धयेदर्धमात्रतः ॥ 15

पञ्चाङ्गुलान्तं तद्भित्तेः पादवेदांशनिर्गमात् ।
यथाबलं यथाशोभं भित्तिस्तत्र विधीयताम् ॥

एकलिङ्गत्रिमुनयो विस्तारे भक्तयो मताः ।
दैर्घ्येनैवाधिकाः प्रोक्ताः पूर्वोक्ता भक्तयो द्विजाः ॥

पादानामन्तरे पादा भवेयुरुपपीठके ।
पादे पादान्तरेऽन्यत्र सिंहरूपाणि कारयेत् ॥

मकरैर्नक्रकैः पत्रैर्नानाचित्रैर्विचित्रयेत् ।
सिंहासनत्रिभागेन चतुर्भागेन वा त्वधः ॥

एकद्वित्रिचतुर्मात्रैर्विस्ताराद्यधिकं ततः ।
उपपीठं विधेयं स्यात्तद्रूपमिह कथ्यते॥ 20

स्थावरं जङ्गमं चैव द्विविधं तदुदाहृतम् ।
मृत्पाषाणकुजैर्दन्तैर्लोहैर्वा सुधयाथवा ॥

शैलं नेष्टं नराणां स्यात् सर्वं देवेषु योग्यकम् ।
दन्तवृक्षकृतं यच्च स्वर्णरत्नैर्विचित्रितम् ॥

राज्ञां सिंहासनं श्रेष्ठं तल्लक्षणमिहोच्यते ।
त्रिनवांशे तदुत्सेधे क्षेपणं पङ्कजं गळम् ॥

वेत्रं गळं च पद्मं च कुमुदं पद्मपट्टिके ।
वेत्रं कर्णं च वेत्रं च कम्पं पद्मं कपोतकम् ॥

वेत्रं कर्णं च निद्रा च मसूराधारपट्टिका ।
सप्तैकार्धांशकार्धैर्वा व्योमवेदांशकार्धतः ॥ 25

अर्धांशार्धार्धपादैश्च अर्धार्धार्धैश्च सार्धकैः ।
अर्धेनैकोनविंशांशं भद्रकं परिकीर्तितम् ॥

त्रिंशदंशे तदुत्सेधे वेदार्धे द्वन्द्वसार्धके ।
सार्धार्धांशत्रिभागार्धैरेकार्धाष्टांशसार्धकैः ॥

अर्धार्धद्व्यर्धकार्धैश्च व्योमार्धैरनुपूर्वशः ।
पद्मं कम्पं च कर्णं च कम्पं पद्मं च वाजनम् ॥

पद्मं कम्पं च कर्णं च कण्ठं निद्रा च पट्टिका।
अङ्घ्रिरुत्तरपट्टी च निद्रा पद्मं कपोतकम् ॥

आलिङ्गान्तरिते चैव प्रतिवाजनमूर्ध्वतः ।
एतत्सौम्यं समाख्यातं त्रिसप्ताङ्गैस्समायुतम् ॥ 30

एतदेव मुखे पृष्ठे सौभद्रं भद्रसंयुतम् ।
पार्श्वयोर्भद्रयुग्मं चेच्छ्रीबद्धं परिकीर्तितम् ॥

पद्मानामासनानां तु विजिः पृष्ठे विधीयताम् ।
आसनव्यासतुङ्गाढ्या मसूराधारवेशिनी ॥

यथेष्टोन्नतविस्तारा विधेया वा द्विजोत्तमाः ।
तद्विस्तारविभागेन मध्ये मकरतोरणम् ॥

पद्माभिषेकसंपन्ना कार्या तोरणमध्यमे ।
तोरणाङ्घ्रिः स्वविस्तारनिर्गता नक्रपट्टिका ॥

मुष्टिबन्धोपरिक्षिप्तव्यालमातकसंस्थिता ।
कम्पक्षेपकपोताद्यैर्बहुभिर्भूषयेद्द्विजाः ॥ 35

मकरैर्नक्रकाद्यैश्च नानाचित्रैर्विचित्रयेत् ।
अयोमयांस्तु नाराचान् कीलान् पट्टांश्च योजयेत् ॥

स्वर्णनिर्मितपट्टाद्यै रत्नैर्वाथ विचित्रयेत् ।
कुर्यात्तोरणपृष्ठे तु कल्पवृक्षं सुवर्णजम् ॥

नानारत्नसमोपेतमनन्तफणसंयुतम् ।
विजिं हित्वाथवा कुर्यात् कल्पवृक्षं तु केवलम् ॥

वितोरणा विजिर्वाथ आसनं केवलं तु वा ।
पञ्चाङ्गमुपपीठं यत् पद्मकाधो नियोजयेत् ॥

पद्मकादिचतुर्णां स्याद् द्वादशाङ्गमुपासनम् ।
उपपीठदशांशे तु वेदांशैः कण्ठ उच्यते ॥ 40

क्षुद्रकम्पौ तदूर्ध्वाधोभागेन द्व्यंशमानतः ।
महाकम्पौ विधातव्यौ पञ्चाङ्गमुपपीठकम् ॥

चतुर्दशांशके तुङ्गे द्व्येकार्धार्धचतुष्टयैः ।
अर्धार्धैकद्विचन्द्रैश्च अर्धार्धाभ्यामनुक्रमात् ॥

पादुकं पङ्कजं वेत्रं कम्पं कण्ठं च वेत्रकम् ।
वेत्राब्जवाजनं पद्मं कम्पं वेत्रमनुक्रमात् ॥

द्वादशाङ्गमिदं कुर्यादुपपीठं मनोहरम् ।
चतुस्सप्तांशके तुङ्गे जगती पङ्कजं गळम् ॥

वेत्रं गळं च पद्मं च कुमुदं पद्मकम्पके ।
वेत्रं गळं च वेत्रं च कम्पं निद्रा कपोतकम् ॥ 45

आलिङ्गान्तरिते चोर्ध्वे प्रतिवाजनमेव च ।
ऊर्ध्वे मसूरकाधारपट्टिका मूलतःक्रमात् ॥



सार्धांशकैस्तथैकेन अर्धकार्धार्धकार्धकैः ।
द्व्यर्धार्धार्धकसप्तांशैरर्धार्धार्धत्रिभागतः ॥

अर्धार्धैकार्धकैश्चैव श्रीकान्तमिति कीर्तितम्
एतदेव गळाधस्तान्नेत्रार्धैकार्धभागतः ॥

कर्णं च वाजनं निद्रा वेदिका पद्मकम्पकम् ।
योजयेद्वृत्तकान्तं स्याद् द्वात्रिंशद्भागनिर्मितम् ॥

उच्चे नवदशांशेऽर्धे सार्धैर्वेदार्धकार्धकैः ।
त्रिभागार्धार्धवेदार्धैरर्धद्व्यर्धार्धकांशकैः ॥ 50

पादुकं पङ्कजं दक् च पङ्कजं कुमुदपङ्कजम् ।
वाजनं पद्मवेत्रं च पङ्कजं वाजनं कजम् ॥

वेत्रं च वाजनं मूलाद् द्विसप्ताङ्गमुदाहृतम् ।
श्रीकान्तादिचतुर्णां स्यादष्टाङ्गमुपपीठकम् ॥

नेत्रैकार्धचतुर्भागैरर्धार्धनयनार्धकैः ।
पादुकं पङ्कजं वेत्रं पद्मवेत्रं च वाजनम् ॥

पट्टिका वाजनं चैव तत्तुङ्गे रुद्रभाजिते ।
अष्टाङ्गमुपपीठं स्यात् सर्वं सर्वत्र वा मतम् ॥

प्रासादलक्षणे पूर्वं कथितानि बहूनि च ।
अधिष्ठानानि सर्वाणि सोपपीठानि यानि च ॥ 55

संग्राह्याणि च तानीह देशिकैर्नियमादृते ।
अवलम्बितपादस्याद्देवादीनां विशेषतः ॥

सिंहासनाङ्गसंश्लिष्टं पादपीठं विधीयताम् ।
सिंहासनविशालोच्चचतुर्थांशप्रमाणतः ॥

कण्ठोर्ध्वाधःकृतैः कम्पपद्मकम्पैर्विचित्रकम् ।
यथाशोभांशमानेन सप्ताङ्गैर्वृत्तसन्निभम् ॥

यवादारभ्य मात्रान्तं वृद्धिर्हानिर्विधीयताम् ।
आसनानि च सर्वाणि सभद्राण्यथवा नयेत् ॥

पादमर्धं त्रिपादं वा समं तस्याङ्घ्रिनिर्गमम् ।
प्रवेशं च तथा कुर्याच्छोभावलवशेन वा ॥ 60

आसनानां च सर्वेषामायादिविधिरुच्यते ।
परिधिं विपुलं दैर्घ्यं तुङ्गं सकलमेव च ॥

वन्धवेदचतुर्बन्धग्रहैश्च गुणयेत्क्रमात् ।
सप्तभूतर्क्षमूर्त्यब्धिसंख्यैर्भागान् हरेद्गुरुः ॥

आयो व्ययश्च नक्षत्रं योनिर्वारो विशेषतः ।
शाकस्सालश्च पनसः शिंशपश्चन्दनासने ॥

तिन्दुकोऽर्जुनताळौ च निम्बश्च सुरभूरुहः ।
त्रिकुचस्सहकारश्च कुटजः कट्फलस्तथा ॥

श्रीपर्णी जातिवृक्षा ये क्षीरवृक्षाश्चतुर्विधाः ।
जम्बूश्चैव मधूकश्च वैकङ्कतसमाह्वयः ॥ 65

आसनार्थं च संग्राह्या द्रव्यग्रहणमार्गतः ।
एवं सिंहासनं कृत्वा संस्कुर्यात् तदनन्तरम् ॥

कालश्च पूर्ववत् प्रोक्तो यजमानानुकूलतः ।
शिल्पिनं च विसृज्याथ पुण्याहप्रोक्षणान्तरम् ॥

पञ्चगव्येन संप्रोक्ष्य हृन्मन्त्रं समुदीरयन् ।
अष्टमृत्सलिलेनैव क्षाळयेत् कुशवारिणा ॥

शुद्धोदकेन संस्नाप्य ब्रह्मपञ्चकमुच्चरन् ।
पुनर्गन्धोदकेनैव स्नापयेत्तदनन्तरम् ॥

स्थण्डिलोर्ध्वे च तन्न्यस्वा वस्त्रैराच्छादयेत्कुशैः ।
गन्धैःपुष्पैश्च धूपैश्च तन्मन्त्रेण समर्चयेत् ॥ 70

सिंहासनपदं चोक्त्वा चतुर्थ्यन्तं सदीपकम् ।
नमस्कारसमोपेतं स्वबीजेन समन्वितम् ॥

मन्त्रमेवं समुच्चार्य पूजयेद्देशिकोत्तमः ।
तस्याग्रे स्थण्डिलं कृत्वा जुहुयात्समिदादिभिः ॥

समिदाज्यचरूंश्चैव तिललाजसमन्वितम् ।
शतमष्टोत्तरं हुत्वा तन्मन्त्रं समुदीरयन् ॥

पूर्णाहुतिं ततः कृत्वा शान्तिकुम्भाम्भसा ततः ।
सिंहासनं समभ्युक्ष्य गन्धाद्यैः पूजयेत्पुनः ॥

स्नातं शुक्लाम्बरधरं मकुटेन विभूषितम् ।
सर्वाभरणसंयुक्तं छत्रचामरसंयुतम् ॥ 75

सुमुहूर्ते सुलग्ने च राजानमधिरोपयेत् ।
नरेन्द्रासनसंस्कारस्त्वेवं देवे विशिष्यते ॥

मूर्तिमूर्तीशविन्यासं तत्त्वतत्त्वेश्वरान्वितम् ।
तदेवहोमसंयुक्तमासनाणुभिरन्वितम् ॥

आधारशक्तिपूर्वैस्तु शिवासनपदान्तकैः ।
अष्टदिक्ष्वष्ट कुम्भांश्च मध्यमे शक्रशर्वयोः ॥

प्रधानकुम्भं संस्थाप्य स्वर्णवस्त्रादिभिर्युतम् ।
शिवासनाणु मध्ये च लोकपान् परितो यजेत् ॥

एवमादौ च संपूज्य ततो होमं समारभेत् ।
संतर्प्यासनमन्त्रांस्तु पूर्णान्ते देशिकोत्तमः ॥ 80

सर्वानासनमन्त्रांस्तु न्यस्त्वा सिंहासने गुरुः ।
शिवासनाणुं तन्मध्ये कुम्भस्थं विनिवेशयेत् ॥

संस्नाप्य कुम्भतोयैश्च लोकपान्परितो न्यसेत् ।
संपूज्य गन्धपुष्पाद्यैस्तैर्मन्त्रैश्च गुरूत्तमः ॥

संस्नाप्य देवदेवेशं विशेषार्चनसंयुतम् ।
सुमुहूर्ते सुलग्ने तु देवेशमधिरोपयेत् ॥

आचार्यं पूजयेत्तत्र वस्त्रहेमाङ्गुलीयकैः ।
दक्षिणां च यथाशक्ति दापयेद्गुरुमूर्तये ॥

अन्येषामासनानां च प्रमाणमभिधीयते ।
सुवर्णं रजतं ताम्रमारकूटं च कांस्यकम् ॥ 85

मिश्रलोहशिलावृक्षमृत्सुधारत्नसंभवम् ।
दन्तजं क्षुद्रसिध्यर्थं त्रपुसीसायसादिकम् ॥

पीठार्थं द्रव्यमुद्दिष्टमेवं चेत्तद्वशेन तु ।
द्वित्र्यङ्गुलं समारभ्य चैकाङ्गुलविवर्धनात् ॥

पञ्चाशन्मानजातं तु विस्तारे मानमीरितम् ।
सपादं सार्धमध्यंशाधिकं पादत्रयाधिकम् ॥

द्व्यङ्गुलं चाङ्गुलवृद्ध्या तु शताङ्गुलसमावधि ।
आयामे मानमुद्दिष्टं पादानां मानमुच्यते ॥

एकमात्रं समारभ्य व्योममात्रविवृद्धितः ।
पञ्चाशत्करजान्तं तु पादायामः प्रकीर्तितः ॥ 90

अर्धाङ्गुलं समारभ्य पादाङ्गुलविवृद्धितः ।
विस्तारे विश्वमात्रान्तः पादायामः प्रकीर्तितः ॥

पादाश्च ऋजवो ये स्युस्सिंहव्यालवृषात्मकाः ।
भूताभाः खरपादाभास्सचक्रास्सहजा न वा ॥

पद्माभा मनुजाभा वा शेषसत्त्वाकृतिस्तु वा ।
ते च सिंहासनाः कार्याः पद्मपीठोपरि स्थिताः ॥

केवला वाथवा कार्याः सशिरःपादसंयुताः ।
अन्तर्वक्त्रा बहिर्वक्त्राः पादभूषायुता न वा ॥



नानापट्टैश्च वेत्रैश्च वाजनैर्हीरिकादिभिः ।
पत्रैः पद्मदलैश्चैव रत्नाद्यैरुपशोभिताः ॥ 95

तदाननेलिकां वाथ फलकां वाथ योजयेत् ।
तत्पादैश्छेदसंयुक्तैरूर्ध्वाधःस्थोष्ठसंयुतैः ॥

पादोर्ध्वफलका वाथ योजनीया यथेष्टतः ।
यवायवार्धवृद्ध्या तु रुद्रमात्रसमावधि ॥

फलकासनमाख्यातं स्वर्णादीनां यथार्हकम् ।
वाजनैः पद्मपत्रैश्च क्षेपणैर्हीरिकादिभिः ॥

रत्नबन्धसरोजैश्च नानावेत्रदलैरपि ।
फलकां भूषयेद्वाथ केवला फलकाथवा ॥

तदूर्ध्वे गुलिकापादान् नानाकम्पसमन्वितान् ।
नानानाटकसंयुक्तानयःकीलसमन्वितान् ॥ 100

नानापट्टैश्च पुष्पैश्च योजयेत्सुदृढं न वा ।
चतुरश्रं सुवृत्तं वा तत्तदायतमेव वा ॥

अष्टाश्रं षोडशाश्रं वा त्रिपञ्चाश्रादिसन्निभम् ।
आसनं सुविधेयं स्यात्तत्पादाश्चापि तादृशाः ॥

त्रिचतुष्पञ्चपादाद्या योजनीया यथेष्टतः ।
चतुष्पादशिरःपुच्छयुक्तकूर्मो यथा भवेत् ॥

तथा कूर्मासनं कुर्यादन्यदप्येवमूह्यताम् ।
स्वर्णैश्शार्दूलचर्माद्यैःसमन्ताच्छादयेन्न वा ॥

सिंहासनोक्तमार्गेण भवेदायादिलक्षणम् ।
फलकान्तं भवेन्मानं परित्यक्तोर्ध्वकर्मणाम् ॥ 105

तद्युक्तानां तु तद्बाह्ये पादबाह्यानां तु मानकम् ।
एतेषामासनानां तु संस्कारः प्रागुदीरितः ॥

पूर्वोक्तविधिना कुर्यादापादीनां च लक्षणम् ।

इति उत्तरकामिकाख्ये महातन्त्रे सिंहासनप्रतिष्ठाविधिः

सप्ततितमः पटलः ॥

## रथादिस्थापनविधिः

रथादिस्थापनं वक्ष्ये तल्लक्षणपुरस्सरम् ।
रथोऽनेकविधः प्रोक्तस्स च चक्रविभेदतः ॥

त्रिचक्रो वा चतुश्चक्रो पञ्चषट्सप्तचक्रयुक् ।
नवाष्टचक्रयुक्तो वा द्विचक्रश्शकटाह्वयः ॥

त्रिचतुष्पञ्चषट्सप्तवसुप्रहवितस्तयः ।
भारवाह्यविशालं स्यात्तदायामश्च कथ्यते ॥

अक्षोत्तरं समाख्यातमुपधानं द्विजोत्तमाः ।
पोतिकाकारवत् ख्यातं भारतारवनान्वितम् ॥

भारवाह्यविशालार्धदैर्घ्यं पादाधिकं तु वा ।
पादहीनोपयुक्तं वा तदन्तर्मानषट्कयुक् ॥ 5

इदमक्षोत्तरं कार्यं भाराधो द्विजसत्तमाः ।
यत्र यत्र च भाराक्षसंयोगस्तत्र कथ्यते ॥

अयःपट्टैश्च कीलैश्च स्वाग्रकीलैर्महत्तरैः ।
बन्धयेत्स्वस्वरक्षार्थं यथा दृढतरं भवेत् ॥

तदधस्त्वक्षरक्षार्थं स्वस्वमध्यमपार्श्वयोः ।
स्वस्वतारसमाः कार्याः शिखास्तारार्धबाहुलाः ॥

अक्षावधिविलम्बिन्यस्त्वयं पट्टैर्दृढीकृताः ।
प्रतिचक्रं विधेयास्स्युस्समा वा विषमास्तु वा ॥

शिखां विहाय वा रथ्यः स्वल्पच्छेदसमन्वितम् ।
अक्षोर्ध्वसंप्रवेशार्थमुपधानं तु वा नयेत् ॥

अक्षेष्वप्युपधानार्थं प्रवेशार्थं तु ह्रासयेत् ।
भारबाह्यविशालं तु षष्ठिभागं विभाजयेत् ॥

तत्समं वाधिकं षष्ठ्या व्योमभागविवर्धनात् ।
पादोनद्विगुणं दैर्घ्यं मूलमेतदुदाहृतम् ॥

तदग्रपृष्ठभागार्थं वसुभागाद्विवर्धयेत् ।
भागैकेन त्रिपादार्धमायामे परिकल्पयेत् ॥

समोपभद्रे कर्तव्ये तदग्रे वाथवाश्रिते ।
तयोरपि प्रमाणं तु पादोक्तविधिना मतम् ॥

अधिकं वाग्रभद्रं तु पृष्ठभद्राच्छिवाग्रजाः ।
केवलं भद्रमिष्टं वा भद्राग्रेऽप्यिष्टमानतः ॥

भद्रासनं विधेयं वा रहितं वा समाचरेत् ।
भद्रोपभद्रयोर्मानं समं वाप्यधिकं तु वा ॥

रथभद्रोपभद्राणां मानं यन्मिलितं भवेत् ।
तत्सर्वं भारदैर्घ्यं स्याद् भारे सन्धिं न कारयेत् ॥

त्रिचतुष्पञ्चषट्सप्तभागबाहुल्यसंयुताः ।
द्वित्रिवेदमहाभूतभागविस्तारसंयुताः ।

द्विसंख्यादिनवान्ताश्च भारास्त्वक्षोत्तरोपरि ।
त्रिचतुष्पञ्चषट्सप्तविस्तारानर्धनीव्रकान् ॥

योजयेदन्तरे चैषामन्यान्विष्टान् बलार्थकान् ।
भारेषु योजयेदिष्टानग्रे पृष्ठेऽन्तरे यदि ॥

प्रत्यक्षमूर्ध्वैस्त्वच्छिद्रबन्धपञ्चकसंयुतान् ।
चतुर्भागं समारभ्य भागस्याष्टादशावधि ॥

विस्तारं बहुलं कुर्यादक्षाणां भारवाहिनाम् ।
चक्रनेम्यन्तरं व्योमभागाद्भागविवृद्धितः ॥

दशभागावसानं तु चक्रनेमिघनं तु यत् ।
तद्वृद्धिश्च शिखामानं भारनेम्यन्तरं समम् ॥

एतत्सर्वं च दैर्घ्यं स्यादक्षाणां गुरुसत्तमाः ।
वृत्तान्यश्राणि वा कुर्यादश्राणि गुरुसत्तमाः ॥

पञ्चमाहिसमाविद्धस्त्वमण्यमयुतानि वा
पञ्चाङ्गमिति कार्याणि दारुणा वायसादिभिः ॥

यथाबलविशालानि तथाविधघनानि च ।
चक्राणां तु प्रमाणं तु बाह्ये भारान्तरं मतम् ॥

एकद्वित्रिचतुष्पञ्चषड्भागोनं तु वाधिकम् ।
द्विभागाद्वसुभागान्तं चक्राणां घनमीरितम् ॥

एकद्वित्र्यङ्गुलाधिक्यं नाभिदेशे भवेद्द्विजाः ।
तथैव बाह्यनेम्याश्च तयोर्मध्येऽरकाणि च ॥

मूलाग्रकृशयुक्तानि व्योमद्वित्र्यंशकानि च ।
त्रिरष्टभ्योऽष्टवृद्ध्या तु चतुष्षष्ट्यन्तकानि च ॥

सारथिःषण्मुखो वा स्यादथ नन्दीश्वरोऽथवा ।
ब्रह्मा रथाङ्गपाणिर्वा शक्रो वा मुनिपुङ्गवाः ॥

भारोर्ध्वमुपपीठं स्यात्तन्मानमिह कथ्यते ।
एकभागाद्विकारान्तमेकभागविवर्धनात् ॥

तदुपानाद्विनिष्क्रान्तिर्भारबाह्यादथांशतः ।
भागवाह्यविवृद्ध्या तु रसभागावसानकाः ॥



एकोनत्रिंशदंशं वा तदुच्चं विभजेद्गुरुः ।
गुणचन्द्रमहाभूतव्योमनन्दवियद्गुणैः ॥

त्रिभागैनैकभागेन मूलादारभ्य कारयेत् ।
उपानपद्मकम्पानि कम्पं कर्णं च कम्पकम् ॥

पद्मं च वाजनं कम्पं दृष्टान्तार्थमुदाहृतम् ।
पादेनार्धेन भागेन त्रिभागेन द्विभागतः ॥

त्रिभागेन चतुर्भागैरूनं वाप्यधिकं नयेत् ।
एषां प्रवेशो निष्क्रान्तिश्शोभावलवशाद्भवेत् ॥

भामोक्तमुपपीठं यत् सर्वमत्र विधीयताम् ।
चतुष्कोणेषु मध्येषु तथा भद्रोपभद्रयोः ॥

गुलिकापादपादैश्च नाटकैर्भूषयेद्गलम् ।
उपपीठोच्छ्रयान्तं वा कर्तव्यमुपभद्रकम् ॥

उपभद्रोर्ध्वतः कुर्यात्फलकाच्छादनं दृढम् ।
फलकाभारमध्यं तु पादाद्यैः परिभूषयेत् ॥

फलकामध्यभारान्तं योजयेत्पद्मकुड्मलम् ।
सनालं नालमानं तु द्विसप्तम्यङ्गुलोर्ध्वतः ॥

शतांशान्तं समुद्दिष्टं तन्मूलं वेदभागतः ।
वस्वंशान्तघनोपेतं वृत्तं वाष्टाश्रमेव वा ॥

पङ्क्तिभागपर्यन्तहीनाग्रं तत्र वक्रयुक् ।
कुम्भमण्डिसमायुक्तं युक्तं वा गण्डिकाद्वयोः ॥

पद्मं फलकया युक्तं तदूर्ध्वं पद्मकुड्मलम् ।
तच्च वेदांशमारभ्य व्योमभागविवृद्धितः ॥

वस्वंशान्तायसंयुक्तं तद्विस्तारोदरान्वितम् ।
तत्त्रिपादविशालं वा तदन्तस्समभानकम् ॥

कृशाग्रं वृत्तमष्टाश्रं फुल्लवाब्जदलं तु वा ।
बहिःकरणमेवं स्यादत्रान्तःकरणं द्विजाः ॥

भारोर्ध्वे वाजनं कुर्यादल्पनिर्गमनान्वितम् ।
यथेष्टबहुकोपेतं तदूर्ध्वे वाजनान्तरम् ॥

तद्विनिर्गमनोपेतमुपपीठं गलावधि ।
द्वाभ्यामेकेन वा कुर्याद्दारुभ्यां दारुणा द्विजाः ॥

तत्संबन्धे विधातव्ये विष्टकेऽक्षोर्ध्वदेशतः ।
पञ्चमाहिनिबन्धे द्वे विधातव्ये विचक्षणैः ॥

यथेष्टघनविस्तारे तत्संबन्धेऽपरेऽपि वा ।
भद्रमूले तदग्रे च समभद्रे तथा नयेत् ॥

अन्तर्वाजनकोर्ध्वे स्यादुपपीठं गलावधि ।
तत्र पादा विधेयास्स्युरुपपीठावसानके ॥

फलके द्वे विधातव्ये तत्पादोपरि संस्थिते ।
तत्र सन्नद्धविष्टे द्वे पञ्चमाहिगते च ते ॥

भद्राग्रयोस्तथा कार्यं त्वेवमन्तरुदाहृतम् ।
उपपीठोर्ध्वतः कुर्यादधिष्ठानं तदुच्यते ॥

उपपीठसमं वा स्यात्तदर्धं वाथ सार्धकम् ।
तन्मध्ये षट्कमानं यत् पूर्ववत् परिगृह्यताम् ॥

अष्टाविंशतिभागं तु तदुच्चं तु समं भवेत् ।
पङ्क्तिनेत्रैकसप्तैकव्योमद्वयेकैकलोचनैः ॥

पद्मं कर्णं च पद्मं च कुमुदं पद्मवाजने ।
सदन्तगलकम्पौ च महावाजनमाचरेत् ॥

उपपीठोक्तरीत्यैतदूनाधिक्ये समाचरेत् ।
प्रवेशनिर्गमौ वापि तद्वदेव समाचरेत् ॥

एतदन्तर्विधेयं चोपभद्रं भद्रमेवऽथवा ।
अधिष्ठानोर्ध्वतः कार्यः पादवर्गो द्विजोत्तमाः ॥

अधिष्ठानसमो वा स्याद् द्विगुणो वा समीरितः ।
तदन्तर्नवमाने वा पादाष्टांशान्वितोऽथवा ॥

गुलिकापादपादैश्च नाटकैर्व्यालराजिभिः ।
सिंहभूतगजैःपादैर्वर्गं सर्वत्र भूषयेत् ॥

तदन्तःक्षुद्रपादैश्च नाराचैस्सुदृढं नयेत् ।
प्रस्तरः पादवर्गोर्ध्वे मानं चास्य निगद्यते ॥ 60

त्रिभागं तु समारभ्य भागभागविवर्धनात् ।
नवभागावसानं स्यादलङ्कारश्च कथ्यते ॥

तदुच्चे षोडशांशे तु गुणैकनयनाब्धिभिः ।
व्योमैकचन्द्रचन्द्रांशैरुत्तरं वाजनं ततः ॥

निद्रा कपोतमालिङ्गं वाजनं प्रतिवाजनम् ।
प्रवेशो निर्गमश्चैषां धामोक्तन्यायतो भवेत् ॥

एतदायतकं प्रोक्तं भद्रमेतत् समोदयम् ।
पादान्तं वाथ भद्रान्तं हंसयुक्तं च मूलतः ॥

एकादिरसभागान्तं पार्श्वयोरुभयोरपि ।
प्रवेशरहितं वा स्यादेवमेवोपभद्रकम् ॥ 65

रथस्त्वेकतलः प्रोक्तो द्वितलाद्यन्वितो न वा ।
षडादि त्रिंशदंशान्तं समं वा मूलपादतः ॥

प्रस्तरोच्चं भवेन्मानं द्वितलाद्यिकपोतयोः ।
अनेनैव प्रकारेण कारयेत् त्रितलादिकम् ॥

छादयेत् फलकैरूर्ध्वतलं सारतरुद्भवैः ।
एकाङ्गुलघनैरिष्टघनैर्वा सुदृढं यथा ॥

भद्रं चैवोपभद्रं च छादयेदेवमेव तु ।
न्यायेनानेन कर्तव्यः प्रवेशो निर्गमोऽपि वा ॥

पादानां पादतः कार्यः प्रस्तराणां च मध्यतः ।
प्रवेशनिर्गमौ हित्वा कुर्याद्वा रज्जुसूत्रकम् ॥ 70

अनेकतलयुक्तं चेद्विशेषः कश्चिदिष्यते ।
रथस्यारोहणार्थं तु सोपानाकृतिसन्निभम् ॥

भद्रोक्तायामविस्तारं मुखे पृष्ठे द्वयोस्तु वा ।
प्रतिलोमं प्रवेशस्स्याद् भद्रस्य मुनिपुङ्गवाः ॥

सोपानं वा प्रकर्तव्यं तद्विधानसमन्वितम् ।
उपभद्रविहीनं वा भद्रं भारान्तमेव वा ॥

एतत्सर्वं विहायाथ केवलं तूपपीठकम् ।
भारोपरि विधातव्यं तदूर्ध्वे देवसंस्थितिः ॥

उपपीठं विहायास्मिन् केवलं वा मसूरकम् ।
बहिःकरणमेवं स्यादन्तरत्र निगद्यते ॥ 75

पादवर्गेऽन्तरे क्षुद्रपादाः कम्पोपरि स्थिताः ।
ऊर्ध्वकम्पनिबद्धाश्च विधातव्या विचक्षणैः ॥

तदूर्ध्वे प्रस्तरामस्याः पञ्चमादियुता न वा ।
विष्टरा बहवः कार्यास्तलं प्रत्येकमाचरेत् ॥

तुलामुलानुगाः कार्या ओजा युग्मा यथेष्टतः ।
जयन्त्यस्स्युस्तदूर्ध्वे तु तदूर्ध्वे छादनं मतम् ॥

तदूर्ध्वे च विञ्जिः कार्या यथेष्टघनतुङ्गतः ।
नानाकीलकपट्टैश्च पञ्चमादिभिरेव च ॥

नाराचैः क्षुद्रकीलैश्च माहकैः पुलकादिभिः ।
कोटिकैर्वेकपट्टैश्च बन्धयेत्सुदृढं यथा ॥ 80



एतदङ्गं समाख्यातं तोरणेन युतं न वा ।
पादकूटयुतं तच्चेदधस्तन्मानमुच्यते ॥

वेदतालं समारभ्य तालार्धेन विवर्धयेत् ।
यावदष्टयवं पाददैर्घ्यमन्यच्छुलादिकम् ॥

पादपादविवृद्धया तु तत्त्वाङ्गुलसमावधि ।
पादविस्तार आख्यातो धामपादाकृतिर्यथा ॥

समसूलशिखोपेताः पादाः कुम्भादिसंयुताः ।
बहुनीव्रसमायुक्ताः फलकासु निवेशिताः ॥

तालाधस्संस्थितैर्विष्टैः पादमूलं च बन्धयेत् ।
तथैवायसनालैश्च धारैस्सुदृढं यथा ॥ 85

पादोर्ध्वे प्रस्तरं कुर्याल्लुपारोहणयोग्यकम् ।
शिलाकरणमार्गेण लुपारोहक्रियान्विता ॥

सौवर्णैस्तारजैर्लौहैस्ताम्रजैर्वृक्षजैर्दृढम् ।
छादयेदन्यदेशं च ओजस्तूपिसमन्वितम् ॥

रथस्त्वेवं समादिष्टस्शुभायादिसमन्वितः ।
कथ्यते स च लेशेन विस्तारादायतोऽपि वा ॥

उभाभ्यां सकलस्याथ नादेनोत्सङ्गतोऽथवा ।
वर्धयेद् द्वित्रिवेदैश्च गुणिते क्रमशो हृते ॥

सप्तमूलर्क्षपातालैरायोऽव्यस्तारवारकौ ।
तिथिस्स्यात् त्रिगुणं त्रिंशद्धस्तमेतद्रथे मतम् ॥ 90

शकटे शिबिकादौ च शुभे शुभमुदाहृतम् ।
रथस्य स्थापनं यच्च कथ्यते विप्रपुङ्गवाः ॥

उद्वास्य तक्षकं शुद्धतोयेन क्षालयेद् दृढम् ।
गोमूत्रगोमयाम्भोभिः कुशोदैस्तज्जलैरपि ॥

गव्येन प्रोक्ष्य पुण्याहतोयसेचनमाचरेत् ।
अस्त्रोदेनापि संप्रोक्ष्य गन्धपुष्पादिभिर्यजेत् ॥

कौतुकं बन्धयेत् पद्ममुकुळे हृदयेन तु ।
वस्त्रेणाच्छाद्य धामोक्तया तत्त्वतत्त्वेश्वरान्वितम् ॥

मूर्तिमूर्तीश्वरोपेतं चक्रेऽग्निन्दुदिवाकरौ ।
दक्षिणोत्तरसंस्थेषु क्रमशः परिकल्पयेत् ॥ 95

हरिमक्षेषु भारेषु यजेदाधारसंज्ञिताम् ।
उपपीठे वृषं यष्ट्वाधारेऽनन्तं प्रपूजयेत् ॥

धर्मादीश्वरणेष्वेवमधर्मादींस्तदूर्ध्वतः ।
अधश्चोर्ध्वच्छदे विद्वान् क्रमेण विनिवेशयेत् ॥

फलकाप्रस्तरस्याधश्चोर्ध्वे तत्रैव पङ्कजम् ।
कर्णिकां नवशक्तीश्च शिवासनमनुस्मरेत् ॥

ब्रह्मा विष्णुश्च रुद्रश्च ईश्वरश्च रथाधिपाः ।
शिखरे च सदेशानश्शिवस्स्यात् स्तूपिनायकः ॥

पद्मकुड्मलकेऽनन्तो व्याप्तिं प्रासादवर्त्मना ।
तदग्रे स्थण्डिलं कृत्वा तस्मिन् सूत्राम्बरान्वितान् ॥ 100

हेमकूर्चादिसंयुक्तान्नवकुम्भान्निवेशयेत् ।
तत्र मध्ये शिवं पूर्वे भानुमिन्दुं तथानले ॥

दक्षिणे हरिमाधारशक्तिं निर्ऋते घटे ।
वारुणे वृषभं वायावनन्तं विनिवेशयेत् ॥

धर्माद्युत्तरे कुम्भे शेषमीशानगोचरे ।
गन्धाद्यैरर्चयित्वा तु होमकर्म समाचरेत् ॥

संस्थापितघटानां वा समन्ताद्वा रथस्य तु ।
नव वा पञ्च कुण्डानि एकं वा पूर्वतः स्थितम् ॥

आवाह्य स्थण्डिलं वाथ कृत्वा कुण्डाग्निसंस्कृतिम् ।
शिवं साङ्गं प्रधाने तु तर्पयेच्छतसंख्यया ॥ 105

आन्वाधीन् स्वस्वदिक्कुण्डे पञ्चकल्पे द्वयं द्वयम् ।
एककल्पे गुरुः स्वस्मिन् कुण्डे सर्वं च तर्पयेत् ॥

समिदाज्यान्नलाजैश्च तिलैर्होमं समाचरेत् ।
तत्त्वमूर्तितदीशैश्च गुरुर्होमं समाचरेत् ॥

पलाशोदुम्बराश्वत्थवटाः प्रागादिदिग्गताः ।
शम्यपामार्गश्रीवृक्षपिप्पलास्स्युर्विदिग्गताः ॥

पलाशश्च प्रधानस्य समिधस्संप्रकीर्तिताः ।
पूर्णां दत्त्वा द्वितीयेऽह्नि कृतकुम्भाग्निपूजनः ॥

संप्राप्तदक्षिणो मूर्तिधारदैवज्ञशिल्पिभिः ।
मुहूर्ते समनुप्राप्ते मन्त्रन्यासं समाचरेत् ॥ 110

तत्रत्कुम्भस्थपानीयैस्तत्प्रदेशं सुसेचयेत् ।
अनुक्तमत्र सामान्यस्थापनोक्तवदाचरेत् ॥

एवं रथं समापाद्य यः कुर्यात्प्रोक्षणं नरः ।
इहैव धनवान्श्रीमान् वाञ्छितं फलमाप्नुयात् ॥

रथमेवं सुसंस्कृत्य रथयात्रां समाचरेत् ।
पैठी च शेखरी मण्डी त्रिविधा परिकीर्तिता ॥

तिथ्यङ्गुलं समारभ्य व्योममात्रविवृद्धितः ।
षण्णवत्यंशकान्तस्तु शिबिकाविस्तरो मतः ॥

त्रिस्सप्ताङ्गुलमारभ्य वर्धयेदेकमात्रतः ।
एकोनत्रिंशतं यावदायामं परिकल्पयेत् ॥ 115

इषिकाबाह्यमध्यान्तर्मानमेतदुदाहृतम् ।
पादबाह्यं तु देवानां राज्ञामपि विशिष्यते ॥

पादमध्यस्तु सामान्यो व्यासायामावधिर्मतः ।
एवमेवेषिकाबाह्यमध्यमं परिकीर्तितम् ॥

पादेषिकान्तर्मानं यत् सर्वेषां परिकीर्तितम् ।
त्रिचतुर्भूतषट्सप्तनवभिर्विस्तरो भवेत् ॥

दैर्घ्यं तेन च मन्वन्तवितस्तिरिति कीर्तितम् ।
वितस्तिरङ्गुलैर्वापि ज्ञेयमायादिशोभनम् ॥

विस्तारेणाथवा दैर्घ्यात् सकला बाथवा नयेत् ।
अष्टत्रित्रिवसुघ्नं च सूर्यैश्च मनुभिर्भजेत् ॥ 120

वसुभिश्चोडुभिश्छिन्नः पर्यन्तं केवलं तु तत् ।
त्रिंशद्भिर्मुनिभिर्विप्राः क्रमादायादयो मताः ॥

आयो व्ययश्च योनिश्च नक्षत्रं तिथिवारकौ ।
विस्तारेणाथवा यस्स्यादायामेन व्ययो भवेत् ॥

योनिस्तेनैव नक्षत्रं विशालेन प्रकीर्तितम् ।
विस्तारायामसंयोगात्तिथिर्वारस्तु तुङ्गतः ॥

त्रिमात्रमेकमात्राभ्यां स्वव्यासार्धान्तमीरितम् ।
हस्तान्तं तुङ्गमानं स्यादलङ्कारस्तु कथ्यते ॥

त्रिमात्रं तु समारभ्य पादमात्रविवृद्धितः ।
त्रिपडङ्गुलपर्यन्तमिषिकाविस्तरो मतः ॥ 125

व्योममात्रं समारभ्य पादमात्रविवृद्धितः ।
सप्तमात्रान्तमुद्दिष्टमिषिकाबहलं द्विजाः ॥

व्योममात्रात्तु पादद्वयो सप्तमात्रसमावधि ।
हस्तमानं समुद्दिष्टं वृत्तं वा चतुरश्रकम् ॥

वृत्ताश्रमायताश्रं वा हस्तरूपं प्रकीर्तितम् ।
अष्टांशावंशवृद्ध्या तु स्वन्यासद्विगुणावधि ॥



इषिकाहस्तयोः कर्णनिर्गमः परिकीर्तितः ।
किं तु हस्ते विशेषोऽयं स्वव्यासाष्टगुणावधि ॥

पादमात्रं तु पादद्वयो चतुर्मात्रसमावधि ।
पट्टिकाघनविस्तारो यथायोग्यं विधीयते ॥ 130

व्यालैस्सिंहैर्गजैरश्वैर्नरैर्विद्याधरादिभिः ।
गुलिकापादपादैश्च पट्टैर्हारैश्च वाजनैः ॥

क्षुद्रकम्पैश्च वल्लीभिर्नाराचैः कोणबन्धनैः ।
यथाशोभांशमानैश्च कपोतप्रतिवाजनैः ॥

कर्णैश्च वलयैः क्षुद्रगुलिकापादबन्धनैः ।
स्वर्णादिताम्रलोहोत्थैर्दन्तजैर्वृक्षजैस्तु वा ॥

शिबिकालङ्कृतिं कुर्याद्यथाशोभं यथाबलम् ।
एषा पैठी समाख्याता शेखरी शिखरान्विता ॥

पादैर्मञ्चैश्च मण्डी चेन्मण्डपाकारशोभिता ।
शाकस्तालश्च तिमिरः पनसो निम्बकार्जुनौ ॥ 135

मधूकः खदिरो येऽन्ये सारवृक्षास्समीरिताः ।
वृक्षैरेतैः प्रकर्तव्या शिबिका लक्षणान्विता ॥

अस्याश्च प्रोक्षणं कार्यं सिंहासनविधानतः ।
वक्ष्ये पर्यङ्कमानं तु शिबिकाविस्तरो यथा ॥

तद्वद्विस्तारसंयुक्तं त्रिगुणान्तरसंयुतम् ।
चतुष्पदादिसंयुक्तं पादमानं च कथ्यते ॥

त्र्यङ्गुलादङ्गुलद्वयां तु पञ्चाशत्करजावधि ।
पाददैर्घ्यं समाख्यातं त्र्यङ्गुलात्पादवृद्धितः ॥

तिथिमात्रविशालं स्यात्पादमूले द्विजोत्तमाः ।
अनेकगण्डिकोपेतं नानाहीरसमन्वितम् ॥ 140

अनेककर्णसंयुक्तं त्रिगुणान्तायसा युतम् ।
तत्पार्श्वे स्विषिकां कुर्यात् फलकां वा द्विजोत्तमाः ॥

फलकानां च बाहुल्यं यथाशोभं यथाबलम् ।
नानाङ्गसमायुक्तं नानावेत्रसमायुतम् ॥

नानानाराचसंबद्धं पुलकाद्यैश्च शोभितम् ।
लोहजं दन्तजं वाथ दारुजं मिश्रमेव वा ॥

शिबिकायव्ययाद्यैस्तु संयुक्तं सम्पदे भवेत् ।
पर्यङ्कमेतत्कथितं बालपर्यङ्कमप्यथ ॥

प्रोच्यते शिबिका यद्वत् कर्णनिर्गमवर्जितम् ।
खट्वापादसमायुक्तं पट्टिकानेकसंयुतम् ॥ 145

पादमूलविनिक्षिप्तक्षुद्रचक्रसमन्वितम् ।
निम्बादितरुसंसिद्धं बालपर्यङ्कमीरितम् ॥ 146

इति उत्तरकामिकाख्ये महातन्त्रे
रथादिस्थापनविधिरेकसप्ततितमः पटलः

## करणलक्षणविधिः

लक्षणं करणानां च वक्ष्ये संक्षेपतः क्रमात् ।
याज्ञीयवृक्षजाश्शस्तास्समिधो द्वादशाङ्गुलाः ॥

सत्वचस्तास्समच्छेदा वक्रग्रन्थ्यादिवर्जिताः ।
त्रिंशद्दर्भदलैर्गाढं ग्रथिता बाहुमात्रकाः ॥

वेणिका वर्तुला वापि विष्टरा दर्भनिर्मिताः ।
तन्माना ऋजवस्साग्रास्तत्कुण्डसमिदुद्भवाः ॥

निर्व्रणाश्च समच्छेदाः प्रोक्ताः परिधयस्समाः ।
चत्वारो विष्टरास्तद्वन्मताः परिधयोऽपि च ॥

दर्भत्रयं समारभ्य व्योमदर्भविवृद्धितः ।
षट्त्रिंशद्दर्भपर्यन्तं कूर्चार्थं दर्भमाहरेत् ॥ 5

तत्संख्यामात्रदैर्घ्यं स्यात् किंचैकादशमात्रतः ।
ग्रन्थिरर्धाङ्गुलात्पादवृद्ध्या स्याद् व्यङ्गुलावधि ॥

ग्रन्थेः प्रदक्षिणावर्तशिखामानं द्विमात्रतः ।
वृद्ध्यैकमात्रया प्रोक्तं नवमात्रावसानकम् ॥

ग्रन्थ्यग्ररहिता वाथ कूर्चास्स्युस्त्वितरे मताः ।
ब्रह्मविष्ण्वीश्वराः कूर्चमूलमध्याग्रगा मताः ॥

उत्कूर्चन्यासपक्षोऽयमधःकूर्चे विलोमगाः ।
उत्कूर्चश्शान्तिदः प्रोक्तस्त्वधःकूर्चस्तु पुष्टिदः ॥

अन्तःकूर्चो न कर्तव्यः स विधेयोऽभिचारके ।
द्वित्रिवेदशरैर्दर्भैर्मूलाग्रसहितैस्तु वा ॥ 10

पवित्रं दक्षिणावर्तग्रथितं तद्विवर्जितम् ।
अनामिकाङ्गुलीयोगयोग्यरन्ध्रसमन्वितम् ॥

प्रागुक्तग्रन्थिशिखरं पवित्रमतिसुन्दरम् ।
ईश्वराधिष्ठितं प्राग्वद्दक्षिणे चोभयत्र च ॥

करे संयोजनीयं स्यात् काले देवार्चनादिके ।
अङ्गुलीयकमिष्टं स्यात्तदर्थं स्वर्णनिर्मितम् ॥

त्रयोविंशतिसंख्यातदर्भैस्स्यान्निर्मितेन च ।
अर्कमात्रादिषट्त्रिंशदङ्गुलावनतेन च ॥

यथेष्टान्तरयुक्तेन लम्बनेन समन्विता ।
दर्भमाला विधेया स्यात् कनिष्ठाङ्गुलिनाहया ॥ 15

रज्ज्वा चैव विधेया स्यात् साश्वत्थदलरञ्जिता ।
आरभ्य हस्तत्रितयं व्यङ्गुलेन विवर्धनात् ॥

तिथिहस्तान्तदैर्घ्यं स्यात्तदर्धा विस्तृतिर्भवेत् ।
सदृशे वान्तरेऽष्टांशे नवमानं प्रकीर्तितम् ॥

द्वारमानोक्ततत्प्रोक्तविस्ताराद्दैर्घ्यतोऽपि वा ।
स्तम्भयोर्विष्टरस्यापि प्रमाणं व्यङ्गुलादितः ॥

पादाङ्गुलविवृद्ध्या तु त्रिंशन्मात्रान्तमीरितम् ।
याज्ञिकैस्तरुभिः कुर्यात् प्रतिष्ठादौ च तोरणम् ॥

शिलयेष्टकयाऽन्यत्र दारुभिस्तोरणं नयेत् ।
इष्टमानेन खातं स्याच्छिखामानं तथैव च ॥ 20

विष्टरोर्ध्वे त्रिशूलानि नवशूलानि पञ्च वा ।
सप्ताङ्गुलं समारभ्य व्योममात्रविवृद्धितः ॥

पक्षमात्रावसानं तु शूलदैर्घ्यं प्रकल्पयेत् ।
विस्तारात् पादवृद्ध्या तु व्यङ्गुलादर्कमात्रकम् ॥

यावद्यावद् घनं तेषामिष्टमानेन कारयेत् ।
एवं तोरणमाख्यातं मङ्गलाष्टकमुच्यते ॥

नवाङ्गुलं समारभ्य वृद्ध्या व्योमाङ्गुलेन च ।
षट्त्रिंशन्मात्रपर्यन्तं दैर्घ्यं तेषु प्रकल्पयेत् ॥



पादमर्धं त्रिपादं वा विशालं तेषु कल्पितम् ।
अन्तरेऽष्टविभागे तु नवमानमुदाहृतम् ॥ 25

घनमेकाङ्गुलात्पादवृद्ध्या सप्ताङ्गुलावधि ।
याज्ञीयवृक्षैर्लोहैर्वा मङ्गलाष्टकमाचरेत् ।

दर्पणं पूर्णकुम्भं च वृषभो युग्मचामरम् ।
श्रीवत्सं स्वस्तिकं शङ्खो दीपश्शैवाष्टमङ्गलम् ॥

अन्येषामपि देवानां देवीनां चाष्टमङ्गले ।
वृषं त्यक्त्वा तदर्थं तु स्वस्ववाहनमाचरेत् ॥

शैवाष्टमङ्गलं कुर्याद्देवानां वाथ वर्णिनाम् ।
ग्रामादौ स्वगृहे वापि यजमानानुरूपतः ॥

विलिखेद्दर्पणादीनि तन्मानमधुनोच्यते ।
पञ्चाङ्गुलं समारभ्य व्योमाङ्गुलविवृद्धितः ॥ 30

पञ्चविंशतिमात्रान्तं तेषां दैर्घ्यं समाचरेत् ।
विस्तारस्तद्द्वशाज्ज्ञेयस्सपादं वाथ दर्पणम् ॥

पादोनार्धेन वा तस्मिन् पादं तस्य प्रकल्पयेत् ।
तथैव पूर्णकुम्भे तु पादमानं प्रकीर्तितम् ॥

स्यात्तिर्यग्लतोपेतं लतामानं ततो बहिः ।
तथैव पादमुक्षे स्यात् स्थितो वा शयितोऽथवा ॥

पादपद्मसमायुक्तं तूर्ध्वे छत्रसमायुतम् ।
श्रीवत्सस्तु यथोद्दिष्टः स्वस्तिको ग्रामवेशने ॥

शङ्खश्चोर्ध्वमुखो ज्ञेयस्तद्वौ मुक्तौ विपर्ययात् ।
श्रीवत्से पादपद्मं च छत्रं च विनिवेशयेत् ॥ 35

श्रीणां मूर्धनि वा कुर्याद्देवताः शृणुत द्विजाः ।
दर्पणे पूजयेत्सूर्यं पूर्णकुम्भे जलेश्वरम् ॥

चामरे मातरिश्वानं स्वस्तिके तु सरस्वतीम् ।
शङ्खे तु विमलं दीपे पूजयेद्धव्यवाहनम् ॥

लक्ष्म्यां लक्ष्मीं वृषं चोक्षे विन्यसेत्स्वाणुना गुरुः ।
पूर्वस्मिन् पश्चिमे भागे चामरद्वितयं न्यसेत् ॥

एकैकं दक्षिणे वामे वेदिकायां च विन्यसेत् ।
हित्वाष्टमङ्गलं वाथ तत्स्थाने तान् प्रपूजयेत् ॥

वज्रं शक्तिं च दण्डं च खड्गं पाशं तथाङ्कुशम् ।
ध्वजं वाथ गदां शूलं पद्मं चक्रं च कारयेत् ॥ 40

ध्वजाङ्कुशौ वा कर्तव्यौ दण्डं हित्वा द्विजोत्तमाः ।
कोद्दैर्वा याज्ञिकैर्वृक्षैर्लोहश्चेद् बेरमानतः ॥

देवान् कृत्वा तु हस्ताभ्यां कृताञ्जलिपुटान्वितान् ।
जाये शक्तिगदे ज्ञेये शेषाः पुरुषलक्षणाः ॥

नवतालप्रमाणेन तेषां लक्षणमुच्यते ।
तन्मूर्ध्नि मकुटोर्ध्वे वा हस्ते वज्रादिकान्न्यसेत् ॥

देहलब्धेन तेषां तु प्रमाणं प्रविधीयते ।
षट्त्रिंशदङ्गुलायाममष्टाङ्गुलमुविस्तरम् ॥

तिथ्यङ्गुलं समारभ्य द्व्यङ्गुलविवर्धनात् ।
मात्रैरेकोनपञ्चाशत्पर्यन्तंदीर्घमुच्यते ॥ 45

लोहजं यदि दारूत्थं नयेन्मात्राङ्गुलेन तु ।
इष्टमानेन चैतेषां विस्तार इह कथ्यते ॥

स्रुक्स्रुवौ विधिना कार्यौ तद्विधानमिहोच्यते ।
तत्पार्श्वे वान्तरे वापि तद्द्विकं विधिनाचरेत् ॥

षट्त्रिंशदङ्गुलं पञ्चत्रिंशन्मात्रमथापि वा ।
दैर्घ्यं तस्य रसाङ्गेषुवेदिकाङ्गुष्ठकर्णिका ॥

त्रिगम्भीरा चतुष्पञ्चषट्कृतावटमण्डला ।
सप्ताङ्गुलार्धविच्छिन्नचतुस्संवर्तिताननाः ॥

कनिष्ठपर्वनिर्याला पुरोनिम्नाज्यनिर्गमा ।
कलशोद्गतपण्णाहदण्डाग्रश्रुतिवेदिका ॥

यथेष्टं कलशे मानं त्र्यङ्गुला वेदिका यदि ।
नानाव्यञ्जनवेत्रैश्च पद्मपत्रैर्विचित्रिता ॥

शुभा या स्रुक् शरावस्य यथापृष्ठाकृतिर्भवेत् ।
कर्णपार्श्वैकमात्रोनशरावादास्रुस्वावधेः ॥

कनिष्ठानाहसंयुक्ततिर्यग्वेत्रयुता च स्रुक् ।
अथवा त्रिंशदायाममष्टाङ्गुलसुविस्तरम् ॥

तदर्धं तु घनं प्रोक्तमास्यं कौशिकमात्रकम् ।
आस्यं त्रिकोणवत्कार्यं मध्ये बिलसमन्वितम् ॥

कर्णे द्व्यङ्गुल इष्टस्याद्वेदिकाष्टाङ्गुला मता ।
तदधो गण्डिका कार्या मात्रार्धार्धवृद्धितः ॥

दण्डो नवाङ्गुलः प्रोक्तस्तन्नाहस्स्यात् षडङ्गुलः ।
मुष्टयष्टाङ्गुलमानेन तन्नाहोऽष्टाङ्गुलेन च ॥

अथवान्यप्रकारेण स्रुङ्मानमिह कथ्यते ।
द्वात्रिंशदङ्गुलायामं सप्ताङ्गुलसुविस्तरम् ॥

तदर्धघनं तु चतुर्मात्रमास्यायामः षडङ्गुलः ।
कर्णः पञ्चाङ्गुलायामो विस्तारश्शरमात्रकः ॥

सप्ताङ्गुलायता वेदी पद्मं पञ्चाङ्गुलं भवेत् ।
गण्डिकैकाङ्गुला प्रोक्ता तन्नाहस्त्वक्षिमात्रकः ॥

रव्यङ्गुलेन दण्डस्स्यान्नाहं भागार्धतो भवेत् ।
तन्मूले कलशाकारो द्व्यङ्गुलो दशनाहकः ॥

पादं कलशमूले स्यादन्यथा वा निगद्यते ।
षट्त्रिंशदङ्गुलायाममष्टाङ्गुलसुविस्तरम् ॥

विस्तारार्धघनोपेतमास्यं सप्ताङ्गुलं भवेत् ।
विस्तारेण च दैर्घ्येण सूकराननसन्निभम् ॥

त्रिभागेन भवेदग्रं कृत्वा शेषं परित्यजेत् ।
कर्णदैर्घ्यं द्विमात्रं स्याद्विस्तारं चतुरङ्गुलम् ॥

वेदिकाष्टाङ्गुलायामा विस्तारस्सदृशो भवेत् ।
त्रिमात्रं वा चतुर्मात्रं तन्मध्ये बिलमुच्यते ॥

दण्डःषडङ्गुलः कार्यस्तन्मध्ये गण्डिकात्रयम् ।
अर्धार्धाङ्गुलवृद्ध्या तु कर्तव्यं चतुरङ्गुलम् ॥

त्रयोदशाङ्गुलो दण्डस्तन्मूले पूर्ववद्दृढः ।
स्रुक् स्यात् स्रुवोऽपि तयोनिस्तन्मानं हस्ततो भवेत् ॥

एकद्वित्र्यङ्गुलैर्हीनं दीर्घं वा परिकल्पयेत् ।
षडङ्गुलपरीणाहो दण्डमूले च पुष्करे ॥

तदर्धमानकण्ठस्स्यात् क्रमेणैव कृशो भवेत् ।
गोपुराकारवत् कार्यमाज्यस्थानं तदग्रके ॥

पृष्ठे कुम्भद्वयोपेतं कर्णपूरस्तु पुष्करः ।
नूतनं करणं श्रेष्ठं पुराणं तदभावतः ॥

पुराणकरणं ग्राह्यं वित्तं दत्त्वा गुरोर्द्विजाः ।
तदाज्ञापूर्वकं स स्यात्तद्भोग्यकरणं ततः ॥

सहस्राघोरजापस्स्यात् पुराणकरणग्रहे ।
येन शास्त्रेण यत्स्थाने क्रिया पूर्वं प्रवर्तते ॥

तत्र तच्छास्त्रसंसिद्धं करणं विहितं बुधाः ।
अनुक्तमन्यतो ग्राह्यमुत्सवादिषु कर्मसु ॥



अस्त्रं वा प्रतिमा वापि देवोपकरणादिकम् ।
श्रेष्ठस्तद्धामसंसिद्धो न ग्राह्योऽन्यालयस्थितः ॥

तल्लिङ्गादेर्विरुद्धत्वादायाद्यैरशुभैर्युतः ।
तल्लिङ्गाद्यनुकूलं चेद्देशाद्यं यत् प्रतिष्ठितम् ॥

तेनैवोत्सवकर्माद्यं विहितं मुनिपुंगवाः ।
स्थानात् स्थानान्तरप्राप्तिदोषशुद्ध्यर्थमाचरेत् ॥

समिदाज्यान्नकैश्शान्तिहोमं दशशतेन च ।
हृस्वप्रासादमन्त्रेण प्रभूतयजनान्वितम् ॥

तोरणानि पयोवृक्षजातिलक्षणवन्ति च ।
पञ्चषट्सप्तहस्तानि कन्यसानां समुच्छ्रयः ॥

वसुवेदाङ्गुलप्राणि परेषां परिकल्पयेत् ।
तेषु हस्तात् परः ख्यातः स्वधृद्वयर्धोरलक्षितः ॥

शाखयोरन्तरं तुल्यमुच्छ्रायेणान्यथा क्षयेत् ।
कल्पयत्स्वङ्गुलान्याथ परेषां षोडशाङ्गुलात् ॥

एकादिवेदहस्तान्ततोरणे क्षुद्रमानके ।
उदयार्धप्रमाणं वा यागादौ परिपठ्यते ॥

इति उत्तरकामिकाख्ये महातन्त्रे
करणलक्षणविधिर्द्विसप्ततितमः पटलः ॥

## सौख्यकर्मविधिः

प्रतिष्ठोत्सवकर्मादावन्ते नित्योत्सवस्य च ।
सौख्यकर्म प्रकर्तव्यं यथावच्छृणुत द्विजाः ॥

सौख्यं च रुद्रकन्याभिः कर्तव्यं तद् द्विधा मतम् ।
सप्तर्ज्यप्सरसो रुद्रः कौशिकप्रीतिकारणात् ॥

तासां चिरन्तने वंशे तद्रुद्रगणिकाकुलम् ।
अस्पृश्यं प्रतिलोमाद्यैरजायत सनातनम् ॥

ता एव रुद्रकन्यास्स्युः कथ्यन्तेऽन्यैर्द्विजोत्तमाः ।
देवदारुवने पूर्वं विनोदार्थं मया पुरा ॥

कल्याणं वपुरास्थाय प्रविष्टं द्विजसत्तमाः ।
तत्रस्था मुनिपत्न्यो मां दृष्ट्वा सादरमक्षमाः ॥

विश्लिष्टकेशवस्त्राद्या जायन्ते मदनातुराः ।
तथाविधाश्च तास्सर्वा दृष्टाः खलु मयादरात् ॥

मदालोकनमात्रेण दधते गर्भमक्षयम् ।
तद्गर्भभवा याश्च ता रुद्रगणिका मताः ॥

तास्सर्वास्तत्र संभूय का नो वृत्तिर्भविष्यति ।
एवं पृष्टो ब्रवीम्येवं शृणुध्वं यन्मयोदितम् ॥

मदर्चनं तु यच्छ्रेष्ठं तत् सौख्यसहितं यदि ।
तदेव शुद्धनृत्तं तु लक्षणं भरतोदितम् ॥

तत्पूजायां नियोज्यं तन्मत्प्रीत्यर्थं दिने दिने ।
स्त्रीभिस्तद्वंशजाताभिः पञ्चाचार्यसमन्वितम् ॥

इत्येवं तु क्रमेणोक्ते प्रणेमुस्ते महीतले ।
मया तुष्टेन तास्सर्वा दीक्षिता दीक्षया खलु ॥

आहूय नन्दिनं तस्य चादाय करमध्यगम् ।
वेत्रं तस्माच्छिरांस्यासां स्पृष्टानि द्विजसत्तमाः ॥

ततः प्रभृति वर्तन्ते भुवि नन्द्याख्यसंज्ञया ।
यतो दण्डेन संस्पृष्टं शिरो दण्डिन्य इत्यपि ॥

विख्यातास्तत्कुलोत्थाभिश्शुद्धनृत्तं प्रवर्त्यताम् ।
नर्तको मर्दकश्चैव गायको वांशिकस्तथा ॥

तथा मौरविकश्चैव पञ्चाचार्याः प्रकीर्तिताः ।
चतुर्वर्णानुलोमोत्था नाट्यवेदकृतश्रमाः ॥ 15

भावनागेयनृत्तज्ञा वाद्यज्ञानविशारदाः ।
नवनाट्यरसज्ञाश्च मद्भक्ता वीतकल्मषाः ॥

तेषु श्रेष्ठ इति प्रोक्तो नर्तको नृत्तशास्त्रवित् ।
नर्तने च स्वयं शक्तो मात्रागणनतत्परः ॥

मर्दको मल्लविद्यायां सम्यक्कृतपरिश्रमः ।
प्रवृत्ते शुद्धनृत्ते तु तदङ्गेक्षणतत्परः ॥

गायको गानविद्याज्ञस्सप्तस्वरविशारदः ।
सप्तस्वरविभेदेन गायको गानगायकः ॥

वांशिकस्तद्वदेव स्यात् किं तु वंशकृतश्रमः ।
सौख्ये तु वादयेद्वंशमुदात्तादिविभेदतः ॥ 20

वादयेन्मुरवं सौख्यकाले मौरविको मतः ।
नर्तको मर्दकोऽन्यश्च दक्षिणे तु व्यवस्थितौ ॥

गायको वांशिकाख्यश्च वामभागे व्यवस्थितौ ।
अग्रे मौरविकस्सौख्ये वादयेन्मुरवं तथा ॥

ताः पूर्वसंस्कृतास्सर्वा यद्यप्यासां पुनर्भवात् ।
पुनर्दीक्षा विधेया स्यात् सा च लेशाभिगद्यते ॥

अनुकूलदिने स्वस्थाः पञ्चसंवत्सराधिकाः ।
पञ्चाशद्वत्सरान्तास्ता योग्या नैवेतराः क्वचित् ॥

मण्डपं सौख्यनृत्तार्थं कारयेल्लक्षणान्वितम् ।
त्रयस्त्रिंशत्करात् द्विद्विहस्ताभ्यां ह्रासयेद् द्विजाः ॥ 25

देवादिशूद्रपर्यन्तं श्रेष्ठमध्याधमक्रमात् ।
प्रत्येकं त्रिविमानानि तेष्विष्टं परिगृह्यताम् ॥

युग्मेष्वेवं परिग्राह्यं देवादिप्रक्रमादिदम् ।
अथवा सर्वसामान्या मण्डपाः प्राग्विनिर्मिताः ॥

पङ्क्तिहस्तादिभेदेन तेन ग्राह्यास्तु नर्तने ।
सर्वे च मण्डपाः कार्या निवृत्त्यादिकलामयाः ॥

तन्मध्ये च विधातव्यं शुद्धनृत्तं यथाविधि ।
नटेशं मण्डपेऽभ्यर्च्य साङ्गं गन्धादिभिस्ततः ॥

आहूय रुद्रगणिकाः प्रोक्षयेच्छङ्खवारिणा ।
पञ्चाक्षरादिजप्तेन देवाग्रे लेपिते पुनः ॥ 30

आसनं प्रणवं तत्र कल्पयेत्तस्य मध्यमे ।
स्थाप्तिं वेत्रमादाय हेतितो येन देशिकः ॥

संस्थाप्य वेत्रं पूर्वाभिमुखःप्राङ्मुखोऽपि वा ।
नन्दिनं तत्र संपूज्य गन्धपुष्पादिभिर्गुरुः ॥

नववस्त्रसगुष्णीषस्सोत्तरीयस्सुमाल्यकः ।
श्वेतचन्दनलिप्ताङ्गस्स्वादिशेवोऽङ्गुलीयधृक् ॥

संप्राप्तदक्षिणः पञ्चनिष्काद्या दक्षिणा अपि ।
तच्छिष्यो वा तदादाय मूर्धादि क्रमशो न्यसेत् ॥



शिवायनम इत्येवं समस्तं शिरसि न्यसेत् ।
गन्धादिना समभ्यर्च्य प्राग्वद्वेत्रं पुनर्न्यसेत् । 35

नामोच्चया नन्दपूर्वं तु संबुध्यन्तं यथा भवेत् ।
नामान्तरं च दास्यामि दण्डिन्यन्तं महत्तरम् ॥

मदीयोत्सवकालादौ तव नृत्तानुकूलतः ।
एवं प्रदाप्य तद्धस्ते प्रक्षिपेत्पुष्पसंहतिम् ॥

तामादाय तदा दद्याद् गुरवेऽञ्जलिसंयुतम् ।
पुनरादाय पुष्पाणि शिवाय विनिवेदयेत् ॥

ततः पञ्चपदीत्यादि नृत्तं यद् भरतोदितम् ।
शिवप्रीतिकरं सौख्यं कारयेच्छिवसन्निधौ ॥

एवं स्त्रीणां तु दीक्षा स्यात् पञ्चाचार्येषु कथ्यते ।
देशिकस्य गृहे वाथ स्वगृहे वा मनोरमे ॥ 40

देवेशं मध्यमे भागे समभ्यर्च्याङ्गसंयुतम् ।
विन्यस्य तत्पुरःकुम्भं स्वर्णवस्त्रादिसंयुतम् ॥

पञ्चाक्षरेण जप्तेन तत्तोयमभिमन्त्रयेत् ।
पञ्चाचार्यान् कृतस्नातान्शुक्लवस्त्रादिभिर्युतान् ॥

तदम्भसा तु संप्रोक्ष्य शिरः कूर्चेन संस्पृशेत् ।
पञ्चाक्षरसमोपेतं तदा कर्माधिकारिता ॥

प्रवेशो रुद्रकन्यानामादौ संक्षिप्य कथ्यते ।
निर्दिष्टदिवसात् पूर्वं मङ्गलाङ्कुरमाचरेत् ॥

प्रासादस्य चतुर्दिक्षु पूर्वास्यं मण्डपद्वयम् ।
विधाय मण्डपे पीठं बलिपीठवशाद्भवेत् ॥ 45

सर्वस्मिन्मण्डपे कुण्डं स्थण्डिलं वा तदग्रतः ।
निष्पाद्य देवदेवेशं .पूर्वेद्युस्संप्रपूजयेत् ॥

गन्धाद्यैर्युगसंख्याता रुद्रकन्या उपोषिताः ।
धौतदन्ताश्च सुस्नातास्सर्वावयवशोभिताः ॥

सर्वमङ्गलसंयुक्ताः पञ्चाचार्यास्तथाविधाः ।
कृतसर्वनताः शान्ता शुद्धपविस्तरान्विताः ॥

अधिवास्य च पूर्वेद्युः प्रातरेनां क्रियां नयेत् ।
संस्थाप्य देवदेवेशं सहस्रकलशादिभिः ॥

संपूज्य गन्धपुष्पाद्यैः प्रभूतहविषान्वितम् ।
मण्डपाच्छिवपिनं सम्यग्विसृज्य लिप्य गोमयैः ॥ 50

पुण्योदप्रोक्षणं कृत्वा ब्राह्मणान् भोजयेत्ततः ।
मध्यपीठस्य मध्ये तु यजेद्देवं सदाशिवम् ॥

नटेश्वरं वा देव्या च सासनं ब्रह्मविग्रहम् ।
साङ्गं चावरणोपेतमावृतिस्स्वधुनोच्यते ॥

नन्दिनं पूर्वदेशे तु ब्रह्माणं दक्षिणे यजेत् ।
स्कन्दं च पश्चिमे देशे विष्णुं सौम्ये समर्चयेत् ॥

तद्बहिर्लोकपालांश्च शस्त्रजालं बहिर्यजेत् ।
पूर्वस्यां रुद्रमभ्यर्च्य गौरीदेव्या समन्वितम् ॥

प्राग्वदावरणोपेतं ब्रह्माणं दक्षिणे यजेत् ।
सरस्वत्या समोपेतं लोकपालादिसंयुतम् ॥ 55

पश्चिमे मण्डपे स्कन्दं लोकपालादिसंयुतम् ।
उदग्विष्णुं यजेद्धीमांल्लोकपालावृतिं बहिः ॥

संस्कृत्य वह्निं कुण्डं च स्वस्ववह्नौ स्वदेवताम् ।
आवाह्याभ्यर्च्य गन्धाद्यैर्नाडीसन्धानपूर्वकम् ॥

होमयेच्छतसंख्याताभावृतिं दशसंख्यया ।
समिदाज्यान्नलाजैश्च तिलैः पूर्णां समाचरेत् ॥

देवं संपूज्य रङ्गे तु शुद्धनृत्तं च कारयेत् ।
प्रागुक्तविधिना पूर्वं संस्कृताश्चेद् द्विजोत्तमाः ॥

तद्धीनाश्चेत्तु संस्कारं कृत्वा नृत्तं च कारयेत् ।
नृत्तारम्भे च पूजा स्याद् देशिकस्य विशेषतः ॥ 60

पश्चाचार्येषु कन्यासु वस्त्राद्यैर्भूषणादिभिः ।
भृतिं दद्यात्ततस्तासां यथा स्यात् प्रेम तु द्विजाः ॥

नित्योत्सवान्ते कर्तव्यं सौख्यं तद्रुद्रकन्यया ।
कृतस्नानाङ्गभूषाद्यशुक्लमाल्यादियुक्तया ॥

पश्चाचार्यसमोपेतं रङ्गेशं प्राग्वदावृतिम् ।
समभ्यर्च्य तदग्रे तु नवनाट्यरसान्वितम् ॥

श्लोकार्थभावनोपेतं शुद्धनृत्तं समाचरेत् ।
ब्रह्मा विष्णुश्च रुद्रश्च सन्ध्यात्रयाधिपाः स्मृताः ॥

प्रातर्मध्याह्नसायेषु क्रमाच्छ्लोकत्रयं पठेत् ॥

मन्दारपुष्पपरिकीर्णविचित्रगन्ध-
मत्तालिवृन्दमधुरध्वनिगीतयुक्तः ।
नानाविधाङ्गकरणैरभिवर्धमानः
पुष्पाञ्जलिर्भवतु मे कमलासनाय ॥ 65

भावानुबन्धेन रसोत्तरेण नृत्तेन नृत्तागमसम्भवेन ।
आमोदमत्तैरलिभिर्विकूजत्पुष्पाञ्जलिस्स्यात् पुरुषोत्तमाय ॥

सान्तानिकादिशिवसंस्कृतरुद्रकन्या-
नानाविधाभिनयकैरभिवर्धमानः ।
नानाप्रसूननिचयैर्नृपराष्ट्रवृद्ध्यै
पुष्पाञ्जलिर्भवतु मे परमेश्वराय ॥

स्थापने प्रोक्षणेऽन्यत्र प्रायश्चित्तेऽद्भुतादिके ।
उत्सवे स्नपने मासपूजायां होमकर्मणि ॥
ध्वजारोहणकालादौ काम्यादौ च विशिष्यते ॥ 68

इति उत्तरकामिकाख्ये महातन्त्रे
सौख्यकर्मविधिस्त्रिसप्ततितमः पटलः ॥

## वैशिष्ट्यविधानविधिः

विशीयतेऽथ वैशिष्ट्यं सर्वेषां सर्वकर्मसु ।
आचार्यस्साधकोऽन्यश्च पुत्रकस्समयीति च ॥

माहेश्वरेण पश्चैते पूर्वपूर्वगुणाधिकाः ।
संस्कारेण विशेषोऽयं जात्या वैशिष्ट्यमुच्यते ॥

ब्राह्मणाद्याश्चतुर्वर्णास्त्वनुलोमाःपडेवऽहि ।
प्राग्वदेव गुणोत्कृष्टा जात्या वैशिष्ट्यमीरितम् ॥

वयसा विद्यया चैव भक्त्या वैराग्यतोऽपि वा ।
योगेन क्रियया वाथ चर्ययापि विशिष्यते ॥

आदौ राजगुरू राजा तत्पत्नी तत्पुरोहितः ।
तत्पुत्रा मन्त्रिणश्चैते विशिष्यन्ते क्रमेण तु ॥ 5

आचार्यस्त्वर्चकश्चैव निष्कलस्येतरस्य च ।
दैवज्ञश्च क्रमेणैषां वैशिष्ट्यं शिवधामनि ॥

पश्चान्मठपती राजा तन्नियुक्तस्त्वनन्तरम् ।
मद्भक्ता नैष्ठिकाः पश्चाद् भौतिका भृतिवर्जिताः ॥

परिचारकपूजकाश्च भक्ताश्च भृतिसंयुताः ।
स्वतन्त्रगानकृद्दीणामन्त्रगानादितत्पराः ॥



तथाचार्याश्च नर्तकन्या देवदासश्च वादकाः ।
क्रमेणैषां च वैशिष्ट्यं स्वस्वकर्मभिरीरितम् ॥

अनुक्तानामतोऽन्येषां तत्तत्कर्मानुरूपतः ।
ब्राह्मणादिक्रमेणापि ज्ञात्वा वैशिष्ट्यमादरात् ॥ 10

पूजयेद्देवकल्याणे पवित्रारोहणादिके ।
सर्वेषामुदितं तेषां मुख्यत्वं देशिकाज्ञया ॥

देशिकोऽहमिति प्रोक्तो येन तेन गुरुर्वरः ।
देशिकाज्ञा ममाज्ञा सा मयैवोक्ता शिवागमे ॥

तस्मादादौ तु सर्वेषां पूजनीयो यथार्हतम् ।
सन्मार्गादिक्रमेणापि वैशिष्ट्यमिह संमतम् ॥

सन्मार्गी पुत्रमार्गी च सहमार्गी तथापरः ।
दासमार्गी चतुर्थैषां क्रमाद्वैशिष्ट्यमिष्यते ॥

सन्मार्गी त्यक्तसंस्कारस्समर्थः शुचिभक्तियुक् ।
समदृङ् निरहंकारी शिवयोगकृतश्रमः ॥

पुत्रमार्गी भवेत्सर्वशैवागमविशारदः ।
पुत्रीकृतजनश्चैवाचार्यस्सान्तानिकश्च सः ॥

सहमार्गी शिवार्चाग्निजपहोमपरायणः ।
प्रवेशकशिवज्ञानी स्वोपदेशिक एव वा ॥

दासमार्गी शिवोद्यानलिङ्गबिम्बालयादिकृत् ।
शैवनृत्तनतिस्तोत्रगानकृद्द्रोहिमर्दकः ॥

एवं बहुप्रकारेण शैवैस्सह विचार्य च ।
एवं गुणसमायुक्तैर्वैशिष्ट्यं परिकल्पयेत् ॥ 19

इति उत्तरकामिकाख्ये महातन्त्रे
वैशिष्ट्यविधानविधिश्चतुस्सप्ततितमः पटलः ॥

## व्याधिनाशविधानविधिः

व्याधिनाशविधानं तु वक्ष्ये संक्षेपतः क्रमात् ।
सर्वेषामपि मर्त्यानां भूपतीनां विशेषतः ॥

रोगगजाश्वाजमहिषप्रमुखानां चतुष्पदाम् ।
ज्वरमारिमहावेशापस्मारेषु विशेषतः ॥

क्षयशोफलिङ्गगुल्मशूलधुन्मादसाधने ।
वातपित्तकफोद्रेके दाहमोहव्रणोत्कटे ॥

महोदराश्मरीग्रन्थिप्रमेहादिसमुद्भवे ।
एवमन्यमहाव्याधौ शिरोदरदन्तकर्णजे ॥



आस्याक्षजसमुद्भूतरोगेऽनुक्ते समुत्थिते ।
पालकादिसमुत्पत्तौ गजादीनां द्विजोत्तमाः ॥

तद्व्याधिविनिवृत्त्यर्थं रोगानुत्पत्तिहेतवे ।
पुष्ट्यर्थं च बलार्थं च विधिर्लिङ्गशान्तिगद्यते ॥

देवालये नदीतीरे पर्वते काननेऽपि वा ।
अन्यस्मिन् पुण्यदेशे तु तत्तत्स्थाने स्वमन्दिरे ॥

गुप्ते मनोरमे शुद्धे गोमयेनानुलेपिते ।
लिङ्गे वा मण्डले कुम्भे स्थण्डिले फलकादिषु ॥

शिवादिप्रमुखान्देवानावाह्याभ्यर्च्य पूर्ववत् ।
गन्धपुष्पैस्सधूपैश्च दीपैश्च हविषान्वितम् ॥

स्नपनेन समोपेतं पञ्चगव्यामृतादिना ।
संपूज्येष्टतमं देवं जपं कुर्याद्विचक्षणः ॥

अयुतं वा तदर्धं वा अयुतार्धार्धमेव वा ।
सहस्रं वा तदर्धं वा शतमष्टोत्तरं तु वा ॥

तत्तन्मन्त्रानुरूपेण जपकर्म समाचरेत् ।
मन्त्रमुच्चार्य हे देव व्याधिं नाशय नाशय ॥

पठित्वा देवदत्तस्य पदं चात्र विशेषतः ।
एवं जपं विधायैतदिष्टदेवे निवेदयेत् ॥

गन्धपुष्पाक्षतोपेतं कुशदूर्वादलान्वितम् ।
स्तुत्वा प्रणम्य देवेशं होमस्थानं समाश्रयेत् ॥

तत्पूर्वे चैशदिग्भागे चतुरश्रेऽथ वृत्तके ।
कुण्डे वा स्थण्डिले वाथ शिवाग्निं विधिना नयेत् ॥

तन्मध्ये त्विष्टदेवं तु समावाह्य समर्चयेत् ।
गन्धाद्यैस्समिदाज्यान्नतिलैः कल्पोदितैस्तु वा ॥

होमं जपाद्दशांशं तु शतमष्टोत्तरं तु वा ।
कृत्वा पूर्णां समादाय तस्माद्भस्म विसर्जयेत् ॥

देवं कुम्भं शिवाग्निं च गत्वा कुम्भान्तिकं गुरुः ।
होमकर्म निवेद्यास्मै देवं स्तुत्वा प्रणम्य च ॥

तत्कुम्भसंस्थतोयेन व्याधितं प्रोक्षयेत्सुधीः ।
तद्भस्मालेपनं कुर्यात्तन्मन्त्रध्यानसंयुतम् ॥

रुद्रादिभ्यो बलिं दद्याद्व्यञ्जनं सघृतं गुरुः ।
होमान्ते वा बलिं दद्यादन्यथापि निगद्यते ॥

कृत्वा प्रतिकृतिं पैष्टिं तदाकृत्यनुरूपतः ।
गन्धपुष्पादिनाभ्यर्च्य तथा वक्ष्यन्तमेव च ॥

नानाव्यञ्जनसंयुक्तं पायसं मौद्गमेव वा ।
शुद्धान्नं चाज्यसंयुक्तं दध्यपूपादिसंयुतम् ॥

प्रत्यहं तु त्रिसन्ध्यायामेककालेऽथवा पुनः ।
चत्वरे चैत्यवृक्षस्य मूले रथ्यामथापि वा ॥

मातृस्थानसमीपे वा श्मशानादौ विनिक्षिपेत् ।
यस्सस्यो देवदत्तं तु समाश्रित्येह वर्तते ॥

तस्यैवैष बलिर्मूलान्मन्त्रस्साधारणो मतः ।
एकाहादिदशाहान्तं मासात्संवत्सरान्तकम् ॥

वत्सराच्छतवर्षान्तमात्मनः प्राणिनामिह ।
बलिरेष समाख्यातो धूपदीपसमन्वितः ॥

पताकाछत्रादुपानीययुक्तस्साधारणो मतः ।
अथवान्यप्रकारेण व्याधिमोचनमुच्यते ॥

लिङ्गादौ देवमभ्यर्च्य जपहोमौ समाप्य च ।
सौवर्णीं राजतां वाथ शतनिष्कविनिर्मिताम् ॥

तदर्धनिर्मितां वाथ पञ्चविंशतिनिर्मिताम् ।
दशनिष्कमितां वाथ पञ्चनिष्कविनिर्मिताम् ॥

तदर्धनिर्मितां वापि निष्कमात्रमितां तु वा ।
कुर्यात् प्रतिकृतिं विद्वान् वित्तशाठ्यं न कारयेत् ॥

रोगार्तरूपं निर्माय तत्तदाकृतिरूपतः ।
कालरूपं तु वा नेमिरूपं रूपान्तरं तु वा ॥

पूर्वोक्तविधिनाभ्यर्च्य तच्छिवाय प्रदापयेत् ।
अनेन विधिना रोगी अरोगी स्यान्न संशयः ॥



कैवलं बलिदानं वा चतुर्मासान्तमेव वा ।
अथषण्मासपर्यन्तं यावद्व्याधिविनाशनम् ॥

अथवान्यप्रकारेण व्याधिनाशनमुच्यते ।
अष्टम्यां वा चतुर्दश्यां पर्वण्यपि च पक्षयोः ॥

ग्रहणे विषुवे वापि द्वयोरयनयोरपि ।
स्वजन्मर्क्षेऽनुजन्मर्क्षे शुद्धदेशे मनोरमे ॥

गोमयेनानुलिप्तेऽथ प्रोक्षयेदस्त्रवारिणा ।
स्थण्डिलं तत्र कृत्वान्ते साधयेत् कलशांस्तथ ॥

पञ्चविंशतिसंख्यातान् पञ्चसंख्यानथापि वा ।
एको वा मध्यमे तेषां घटस्स्याद्द्रोणपूरितः ॥

ससूत्रान्सापिधानांश्च सवस्त्रान्हेमसंयुतान् ।
सर्वौषधिसमायुक्तान्नानाबीजसमन्वितान् ॥

सकूर्चान् पल्लवोपेतांश्चन्दनाक्षतसंयुतान् ।
गन्धतोयसमायुक्तांस्तत्तन्मन्त्रसमन्वितान् ॥

अभ्यर्च्य गन्धपुष्पैश्च धूपदीपैर्विशेषतः ।
तत्तन्मन्त्रशलाकांस्तत्पूर्वे वा चतुर्ष्वपि ॥

होमं कुर्याद्विशेषेण कुण्डे वा स्थण्डिलेऽपि वा ।
शिवाग्नौ जुहुयाद्धोमान् समिदाज्यान्नसंयुतम् ॥

तस्मात्तद्भस्म संग्राह्य व्याधितं स्नापयेद्गुरुः ।
गोमयालिप्तदेशे तु फलकोपरि संस्थितम् ॥

तत्तदुत्तरदेशस्थं स्नापयेद्रोगसंयुतम् ।
निर्मृज्य पैष्टिकैर्वापि यवाद्यैर्गोमयोद्भवैः ॥

स्नापयेत् संस्मरन्मन्त्रं तत्तद्ध्यानसमन्वितम् ।
प्रोक्षयेद्वाथ मन्त्रेण तद्भस्मालेपनं ततः ॥

कुर्याद्रोगयुतस्सोपि पूजयेद्देशिकं तदा ।
राज्ञां पट्टभृतां वाथ सामन्तानां महात्मनाम् ॥

साधयेच्छतसंख्यातान् कलशाष्टकसंयुतान् ।
पञ्चाशत्संख्यया तेभ्यो न हीनान् साधयेद्गुरुः ॥

कलशेष्वपि सर्वेषु मनुरेकस्तु पूज्यते ।
मध्यमे च विशेषेण तैस्तान् संस्नापयेद्गुरुः ॥

अथान्योऽपि प्रयोगः स्याद्व्याधिनाशे विशेषतः ।
आदित्योदयमारभ्य जले स्थित्वा मनुं जपेत् ॥

अयुतं वा तदर्धं वा तदर्धं वा सहस्रकम् ।
शतमष्टोत्तरं वापि प्रत्यहं जपमाचरेत् ॥

सर्वत्र तर्पणं कुर्यात् प्रागुक्तैर्वक्ष्यमाणके ।
होमेन समसंख्यां वा जपतुल्यं परं मतम् ॥

शक्तश्चेज्जलमध्यस्थो जपेन्नित्यं समाचरेत् ।
अनेनापि प्रकारेण भूर्जपत्रत्वगादिके ॥

सुमुहूर्ते सुलग्ने तु व्याधितस्यानुरूपके ।
कुङ्कुमेन लिखेद्वर्णांस्तद्देवेज्यापुरस्सरम् ॥

पूर्वहोमसमायुक्तं जपतर्पणसंयुतम् ।
विधाय जपमात्रं वा गोरोचनयुतं तु वा ॥

शलाकया लिखित्वार्णान्नाराचेनाथवा गुरुः ।
संपूज्य गन्धपुष्पाद्यैर्गुलिकां कारयेत्ततः ॥

स्वर्णेन रजतेनाथ बध्वा ताम्रेण तन्तुना ।
लाक्षया वाथ सा धार्या यावद्व्याधिविमोचनम् ॥

दुर्बलो बलवान्धीरस्सर्वैस्सम्पूज्यते भुवि ।
कर्णे वा कण्ठदेशे वा शिखायां वा करेऽपि वा ॥

नाभःकटिप्रदेशाच्च मन्त्रसन्निधिहेतवे ।
प्रत्यहं पूजनीयो वा मन्त्रस्सर्वफलप्रदः ॥

जपं वा कारयेन्नित्यं पूजां श्रद्धासमन्वितः ।
पूजां होमं च वा नित्यं जपतर्पणसंयुतम् ॥

एवं करोति यो मर्त्यस्सोऽनिष्टैर्विप्रमुच्यते ।
बलवान् प्रियदर्शश्च राजा धर्मात्मिको भवेत् ॥

अशक्तानां च सर्वेषां शक्तः कर्मणि देशिकः ।
तन्नियुक्तोऽथवा नान्यो विशेषाद्राजकर्मणि ॥ 60

विश्वास्यस्तत्र कर्तव्यो यः परानुग्रहे रतः ।
सर्वत्र सर्वथा सोऽयमादिशैवः प्रकीर्तितः ॥

गजानां बाधकादौ तु रोगे शान्तिरिहोच्यते ।
मध्ये वा गजशालायां शुद्धस्थाने मनोरमे ॥

शिवस्य हर्म्ये विष्णोर्वा दुर्गाया भास्करस्य च ।
विघ्नराजस्य शास्तुश्च मातृणामालयेऽपि वा ॥

नद्यास्तीरे तटाकस्य देवोद्यानेऽन्यदेशके ।
गोमयेनोपलिप्याथ प्रोक्षयेदस्त्रवारिणा ॥

स्थण्डिलं विधिना कृत्वा शालिभिस्तण्डुलैस्ततः ।
लाजदर्भसमायुक्तं द्रोणतोयप्रपूरितम् ॥ 65

सकूर्चं सापिधानं च गन्धोदकसमन्वितम् ।
एलाकुङ्कुमकर्पूरफलत्रयसमन्वितम् ॥

दूर्वापत्रसमायुक्तं श्वेततण्डुलचर्चितम् ।
तत्र साङ्गमघोरास्त्रं सासनं सम्यगर्चयेत् ॥

पङ्कजासनमध्यस्थं षड्भुजं सत्रिलोचनम् ।
सर्वाभरणसंयुक्तं पूर्णचन्द्रसमप्रभम् ॥

कपालशूलसंयुक्तं धनुर्बाणसमन्वितम् ।
ऊर्ध्वकेशं विरूपाक्षं खड्गखेटकधारिणम् ॥

एवं ध्यात्वा द्विजश्रेष्ठा अघोरास्त्रस्वरूपकम् ।
पूर्वोक्ताकृतिसंयुक्तं श्वेतवर्णमथापि वा ॥ 70

गन्धपुष्पसमायुक्तं धूपदीपसमायुतम् ।
नैवेद्यमुपदंशाढ्यं सताम्बूलं निवेदयेत् ॥

सहस्रं वा तदर्धं वा शतमष्टोत्तरं तु वा ।
प्रत्यहं तु जपं कुर्यादस्त्रराजेन देशिकः ॥

तस्याग्रे चैशदिग्भागे वृत्ते वा चतुरश्रके ।
कुण्डे वा स्थण्डिले वापि शिवाग्नौ होममाचरेत् ॥

समिदाज्यचरूपेतं तिलतण्डुलसंयुतम् ।
क्षीरवृक्षसमुद्भूता बिल्वजा ब्रह्मवृक्षजाः ॥

समिधस्संप्रशस्तास्स्युर्दूर्वाहोमोऽथवा मतः ।
सहस्रं वा तदर्धं वा शतमष्टोत्तरं तु वा ॥ 75

प्रायश्चित्तं ततो हुत्वा पूर्णामन्ते समाचरेत् ।
तद्भस्मसंग्रहं कृत्वा देवं कुम्भे विसर्जयेत् ॥

तत्तोयप्रोक्षणोपेतं भस्मलेपनं निरयशः ।
महा रोगाश्च नश्यन्ति तेषां पुष्टिश्च जायते ॥

अनुत्पत्तिश्च रोगाणां तेषामायुष्यमेव च ।
स्यात्तेषां विजयी स्वामी यत्रैष क्रियते विधिः ॥

रुद्रादिभ्यो बलिं दद्यात् क्षेत्रपालान्तिमं यथा ।
बलिभिर्लोकपालेभ्यः कृतगोमयमण्डले ॥

गजशालासमीपे वा होमस्थानेऽथवा बलिः ।
एष एव विधिः प्रोक्तो हयादीनां तु रक्षणे ॥ 80



किं तु धूम्रनिभो देवो ध्यातव्यस्साधकोत्तमाः ।
गजयूथं हयाजं वा गोमहिष्यादिकं तु वा ॥

सम्यक् संरक्षणीयं स्यादस्त्रराजाहितं तदा ।
तत्सर्वं व्याधिनिर्मुक्तं हृष्टपुष्टं विचिन्तयेत् ॥

पूर्वाह्णे वाथ मध्याह्ने रात्रावेतत्समाचरेत् ।
एककालं द्विकालं वा त्रिकालं वा विशिष्यते ॥

नित्यं यः कारयेद्राजा स पुण्यो विजयी भवेत् ।
साधकं पूजयेत्कर्ता सन्तुष्टस्स यथा भवेत् ॥

हयानां च गजानां च रक्षणं चान्यथोच्यते ।
तर्पणं प्रथमं कृत्वा जलेन तदनन्तरम् ॥ 85

कुम्भेऽघोरं समभ्यर्च्य स्थण्डिले शास्त्रचोदिते ।
अष्टद्रोणैस्तदर्धैर्वा खारिभिः द्रोणनिर्मितैः ॥

तदर्धैर्वा दरिद्रश्चेत्तस्याप्यर्धेन वा द्विजाः ।
व्रीहिभिः स्थण्डिलं कृत्वा तत्तदर्धैश्च तण्डुलैः ॥

तिलैर्लाजसमोपेतैर्गन्धपुष्पसमन्वितम् ।
तन्मध्ये द्रोणसम्पूर्णं कुम्भं विन्यस्य देशिकः ॥

सापिधानं सकूर्चं च ससूत्रं पल्लवान्वितम् ।
पूर्वोक्तद्रव्यसंयुक्तं गन्धतोयप्रपूरितम् ॥

तन्मध्येऽघोरमावाह्य पूर्वोक्तध्यानसंयुतम् ।
चन्दनं च सधूपेतं पुष्पं धूपं च दीपकम् ॥ 90

नैवेद्यं च निवेद्याथ शुद्धं पायसमेव वा ।
ताम्बूलेन समोपेतं होमं पश्चात् समापयेत् ॥

समिदाज्यचरूपेतं तिलसर्षपराजकैः ।
क्षीरवृक्षसमुत्पन्नसमिद्भिर्दूर्वयाथवा ॥

सहस्रं वा तदर्धं वा शतमष्टोत्तरं तु वा ।
पञ्चाशत्संख्यया वाथ पञ्चविंशतिसंख्यया ॥

प्रतिद्रव्यं च जुहुयादघोराणुं समुच्चरन् ।
अघोरास्त्रं च तत्संख्यं भक्तार्थं चोत्तरामुखः ॥

कुण्डद्वये वा होतव्यं एकस्मिन्स्थण्डिलेऽपि वा ।
पूर्णाहुतिं प्रधानेन मनुना तर्पयेत्त वा ॥ 95

पृथक्पूर्णाहुतिं दत्वा तदन्ते बलिमाचरेत् ।
साज्येनान्नेन मध्ये तु दिक्ष्वष्टासु बलिं नयेत् ॥

अघोरास्त्रेण मन्त्रेण बलिःस्वाहान्त ईरितः ।
कुण्डस्यैशानदिग्भागे बलिमेनं तथाचरेत् ॥

अघोरास्त्रमहाज्वालाविस्फुलिङ्गशिखान्वितः ।
पूजितस्तर्पितो येन बलितुष्टोऽधुना तवः ॥

रक्ष रक्ष गजानस्य स्वामिनं च विशेषतः ।
स्वाहान्ते बलिरिष्टःस्यात्तर्पणं च विशेषतः ॥

पूर्वाह्णे वाथ मध्याह्ने रात्रौ कुर्यात् क्रियामिमाम् ।
महाबलिश्चेत् कर्तव्यो मध्यरात्रे समाचरेत् ॥ 100

अन्नं मधुघृतोपेतं दधिलाजसमन्वितम् ।
कदलीफलसंयुक्तं पूपैश्च समन्वितम् ॥

नानाघोषसमायुक्तं भेरीवाद्यैस्समन्वितम् ।
दीपहीनं बलिं दद्याद् प्रमादो नित्यमेव च ॥

विशेषाद्राजसदने रक्षस्थाने द्विजोत्तमाः ।
अघोरास्त्रध्वजोपेतं मौनव्रतसमन्वितम् ॥

क्षेत्रपालबलिं दद्याद्रुद्रादिभ्यो यथाबलि ।
तदन्ते कुम्भतोयेन व्याधितान् प्रोक्षयेत्ततः ॥

अघोरं च तदस्त्रं च तस्मिन् काले समुच्चरन् ।
तन्मन्त्रमन्त्रितं भस्म दद्यान्मन्त्रद्वयं स्मरन् ॥ 105

दद्याद्धोमोद्भवं भस्म नीरोगास्स्युर्द्विजोत्तमाः ।
गुरुं सन्तोषयेत् कर्ता भोजनाद्यैश्च देशिकम् ॥

तुष्टेन गुरुणा सर्वं तुष्टं स्थावरजङ्गमम् ।
आलयादावघोरं तु कृत्वा संस्थाप्य देशिकः ॥

शैलादावर्चयेन्नित्यं होमं च बलिमाचरेत् ।
कृत्वादौ घटसंस्थं तु न्यस्य पूजादिकं नयेत् ॥

व्याधयस्सोपसर्गाश्च नश्यन्त्यस्मिन्धरातले ।
केवलं तर्पणं वाथ पूजां हवनसंयुताम् ॥

केवलं यजनं होमं बलिं नित्यं समाचरेत् ।
मर्त्यानामपि सर्वेषां एतत्सामान्यमुच्यते । 110

होमयेज्जपकार्यं तु पूजान्ते नित्यमाचरेत् ।
केवलं वा जपं कुर्यात् सर्वोपद्रवशान्तये ॥

उच्यतेऽन्यप्रकारेण गजानां व्याधिनाशनम् ।
शुद्धदेशमनुप्राप्य गोमयेनानुलेपयेत् ॥

द्रोणपूर्णं समादाय कुम्भं बिम्बसमप्रभम् ।
तन्तुना वेष्टयित्वा तु द्रोणव्रीहिविनिर्मिते ॥

तदर्धतण्डुलोपेते तण्डुलार्धतिलान्विते ।
तिलार्धलाजसंयुक्ते स्थण्डिले स्थापयेद्बुधः ॥

तन्मध्ये विन्यसेत् कूर्चं पञ्चदर्भविनिर्मितम् ।
विन्यसेत् कुम्भमध्ये तु द्रव्याण्येतानि चन्दनम् ॥ 115

फलत्रयसमायुक्तं कुष्ठोशीरसमन्वितम् ।
एलालवङ्गसंयुक्तं चूर्णितानि विनिक्षिपेत् ॥

छादयित्वा पिधानेन कल्पयेदासनं बुधः ।
आधाराख्यमनन्तं च धर्माद्यं च चतुष्टयम् ॥

अधर्मादिचतुष्कं तु अधश्चोर्ध्वछदान्वितम् ।
तन्मध्ये संस्मरेत् पद्मं बीजनाळदळानि च ॥

कर्णिकाः स्वस्वमन्त्रेण पूजयेदासनं गुरुः ।
मूर्तिभूतं स्मरेत् कुम्भं पूर्वोक्तध्यानसंयुतम् ॥

तन्मध्ये प्रणवं देवमघोरं दक्षिणामुखम् ।
अघोराणुं समुच्चार्य यजेत् पाद्यादिभिर्गुरुः ॥ 120

चन्दनोशीरसंयुक्तं पादयोः पाद्यमाचरेत् ।
एलालवङ्गसंयुक्तं फलत्रयसमन्वितम् ॥

दद्यादाचमनीयापः पश्चादष्टाङ्गमर्घ्यकम् ।
आपः क्षीरकुशाग्राणि तण्डुलास्सुमनस्तिलाः ॥

अर्घ्योऽष्टांग इह प्रोक्तो यवैस्सिद्धार्थकैस्सह ।
चन्दनं लघु कुष्ठं च गन्धाद्यं त्रयमुच्यते ॥

नानापुष्पाणि पत्राणि धूपं दद्यादनन्तरम् ।
तत्पद्मदळमूले तु दक्षिणेऽस्त्रं समुच्चरन् ॥

अघोरास्त्रं समभ्यर्च्य प्राग्वत् पाद्यादिकं गुरुः ।
दत्वा स्वावरणोपेतं निरावरणमेव वा ॥ 125

भैरवानसिताङ्गादीन् पूजयेत् प्राग्दिगादितः ।
असिताङ्गो रुरुश्चण्डः क्रोध उन्मत्तभैरवः ॥

कपाली भीषणश्चैव संहारश्चाष्टमः स्मृतः ।
तद्बाह्ये लोकपानिष्ट्वा तदस्त्राणि च तद्बहिः ॥

अस्त्रावरणमात्रं वा लोकभृद्भैरवैर्वृतान् ।
गन्धाद्यैरावृतानिष्ट्वा दीपमाज्यसमुद्भवम् ॥



नैवेद्यं सोपदंशं तु साज्यं देवाय कल्पयेत् ।
अघोराय तदस्त्राय पानीयं च निवेदयेत् ॥

विनिवेद्य च ताम्बूलं जपेदष्टोत्तरं शतम् ।
अघोराय तदस्त्राय संनिवेद्य जपं गुरुः ॥ 130

तदग्रे होमयेद्विद्वान् स्थण्डिले सैकते बुधः ।
प्राग्वत् कुण्डस्य संस्कारं पञ्चसंस्कारसंस्कृते ॥

यजनोक्तक्रमेणैव वह्नावावाह्य होमयेत् ।
क्षीरवृक्षसमिद्भिश्च घृतेन चरुणा पुनः ॥

लाजैश्च तण्डुलोपेतैस्तिलैरष्टोत्तरं शतम् ।
ताम्बूलं जुहुयादन्ते स्वदेवायास्त्ररूपिणे ॥

होमं कृत्वा तदन्ते तु पूर्णाहुतिमथाचरेत् ।
अघोरेण च तद्भस्म संग्राह्यास्त्रेण रक्षयेत् ॥

भोगाङ्गं च लयाङ्गं च कृत्वा वह्निं विसर्जयेत् ।
होमकर्म निवेद्याथ कुम्भस्थेऽघोररूपिणे ॥ 135

प्रार्थयेद्वाञ्छितं कर्म लब्धानुज्ञस्ततो बुधः ।
दत्त्वा पराङ्मुखार्घ्यं तु भोगाङ्गान्युपसंहरेत् ॥

कृत्वा लयाङ्गमस्त्राणुमघोरमुपसंहरेत् ।
हृत्सरोरुहमध्ये तु स्वस्थान्यानपि शम्बरान् ॥

तस्मादुद्धृत्य कुम्भं तु व्याधिस्थमभिषेचयेत् ।
प्रोक्षयेद्वाथ तत्तोयैः प्रत्यहं त्वेवमाचरेत् ॥

सर्वार्थं तद्ध्रुवं वाथ सेचयेदङ्कणादिकान् ।
हित्वाघोरमघोरास्त्रं कुम्भमध्येऽथवार्चयेत् ॥

एकाहं वा त्र्यहं वाथ पञ्चसप्ताहमेव वा ।
पक्षाहं वाथ मासं वा द्वित्रिमासमथापि वा ॥ 140

प्रत्यहं वा प्रकर्तव्यं पाक्षिकादिज्वरापहम् ।
यत्रैतत् क्रियते शान्तिर्नष्टरोगा गजादयः ॥

पुष्टाश्चैव भवेयुस्ते नात्र कार्या विचारणा ।
तद्गजगत्पतिः पुष्टो निरोगी च भवेद्ध्रुवम् ॥

एष एव विधिः कार्यो ह्यश्वानां रोगशान्तये ।
महिषाजगवामेवं कारयेद् द्विजसत्तमाः ॥

अथोपयुक्तं यद्द्रव्यमाचार्याय प्रदापयेत् ।
प्रत्यहं भोजनादीनि दद्यादाज्यसमन्वितम् ॥

तदन्ते दक्षिणां दद्याद्यथाशक्त्या नृपोत्तमाः ।
एवं वाह्नि च रात्रौ वा कर्म नित्यं समाचरेत् ॥ 145

होमान्ते तु बलिं दद्याद् रात्रौ प्रत्यङ्गमाचरेत् ।
गजानां वा हयानां वा शालायामङ्गणेऽपि वा ॥

तत्समीपेऽथवा कार्यो बलिरन्नाज्यसंयुतम् ।
शुद्धे मनोरमे देशे गोमयेनोपलेपयेत् ॥

संप्रोक्ष्य त्वम्भसाघोरमघोरास्त्रसमन्वितम् ।
वज्रादिचक्रपर्यन्तं शस्त्रावरणसंयुतम् ॥

गन्धाद्यैरर्चयित्वा तु स्वाहान्तं बलिमाचरेत् ।
वायुवारुणदिग्भागे क्षेत्रेशस्य बलिं क्षिपेत् ॥

हित्वाघोरमघोरास्त्रं केवलं मध्यमे यजेत् ।
अस्त्रावरणसंयुक्तं रुद्रादिभ्यो यथा बलिः ॥ 150

यत्रैष क्रियते राष्ट्रे बलिः प्रत्यहमादरात् ।
नोपसर्गभयं तत्र रोगपीडा न विद्यते ॥

उत्पन्नरोगनाशश्च भवत्येव न संशयः ।
कर्तुः कारयितुश्चापि देशिकस्य विशेषतः ॥

अघोरस्य तदस्त्रस्य यजनं होमसंयुतम् ।
वर्तते बलिसंयुक्तं यस्य राष्ट्रेषु तस्य तु ॥

आयुष्यमभिवृद्धिश्च भवेन्नीरोगता द्विजाः ।
अनेन सदृशो योगो दुरितक्षयहेतुकः ॥ 151

नास्ति लोके यतस्तस्मादरनादेनं समाचरेत् ।

इति उत्तरकामिकाख्ये महातन्त्रे

व्याधिनाशविधानविधिः पञ्चसप्ततितमः पटलः ॥

---

## राजरक्षाविधिः

राज्ञां रक्षाविधानं तु प्रवक्ष्यामि समासतः ।
भस्म करव्यादिजं सूक्ष्मं सुगन्धं मन्त्रसंस्कृतम् ॥

ईषदर्कं नृपे दद्यात्तामेरुर्ध्वं गुरूत्तमः ।
ललाटमुलह्नाभिबाहुमूलद्वये मनुम् ॥

ईशानाद्यं स्मरन्दद्यादिष्टमन्त्रेण वा सुधीः ।
मध्यमस्थैस्त्रिभिः कुर्यादङ्गुलैर्देवतात्मकैः ॥

ब्रह्मविष्ण्वीशदेवाद्यैरीशानादिक्रमेण तु ।
दद्याद्वानामिकाङ्गुल्या तद्देवात्मिकया शुचिः ॥

ब्रह्मविष्णुशिवा मूलपर्वादिरनुपूर्वशः ।
स्वानुकूलेन मन्त्रेण तत्तत्कर्मानुरूपिणा ॥ 5

सर्वमन्त्राश्च योग्याः स्युश्चतुर्जातिसमन्विताः ।
प्रणवादिनमोऽन्तं तु ब्राह्मणस्य प्रयोजयेत् ॥

स्वाहान्तं क्षत्रियस्योक्तं वौषडन्तं विशां मतम् ।
वौषडन्तं तु शूद्राणां तद्देवध्यानसंयुतम् ॥

स्वस्वजातीशमन्त्रैर्वा तेषां रक्षा विधीयताम् ।
दद्याद्यज्ञोपवीतं तु स्वस्वजातीशमन्त्रितम् ॥

स्वानुकूलाणुसंजप्तमथवा विनिवेदयेत् ।
यज्ञोपवीतद्वितयं स्वोत्तरीयं नृपे मतम् ॥ 9

इति उत्तरकामिकाख्ये महातन्त्रे

राजरक्षाविधिः षट्सप्ततितमः पटलः ॥

---



## दुर्गापूजाविधिः

दुर्गापूजामहं वक्ष्ये सर्वकामार्थसाधनीम् ।
लोकाभिचारपूर्वं तु श्रूयतां द्विजसत्तमाः ॥

कन्यागते सवितरि शुक्लपक्षेऽष्टमीयुता ।
मूलनक्षत्रसंयुक्ता सा महानवमी स्मृता ॥

आश्वयुक्शुक्लपक्षे वा अष्टमी मूलसंयुता ।
सा महानवमी नाम्ना त्रैलोक्येऽतिसुदुर्लभा ॥

अष्टम्यां च नवम्यां च जगन्मातरमम्बिकाम् ।
पूजयित्वाश्वयुङ्मासि विशोको जयति द्विषः ॥

संतर्जयति हुंकारैः खड्गोपान्तकरान् परान् ।
तस्या येऽप्युपयुज्यन्ते प्राणिनो महिषादयः ॥ 5

सर्वे ते सुगतिं यान्ति यतः पापो न विद्यते ।
भवानीप्राङ्गणे प्राणान् ये च मुञ्चन्ति देहिनः ॥

तेषां स्वर्गे भवेद्वासः वीरास्तेऽप्सरसां प्रियाः ।
पूजनीया जनैर्वीराः स्थाने स्थाने पुरे पुरे ॥

गृहे गृहे शक्तिपरैर्ग्रामे ग्रामे वने वने ।
प्रागुदक्प्रवणे देशे रुद्राष्ट त्रिकरैर्गुरुः ॥

मण्डपं कारयेत् कुण्डमाग्नेय्यां हस्तमात्रतः ।
मेखलात्रयसंयुक्तं योनिरश्वत्थपत्रवत् ॥

राजचिह्नानि सर्वाणि सर्वाण्यस्त्राणि यानि च ।
पूजयेद्वेदिकोर्ध्वे तु सर्वत्रैवाधिवासयेत् 10

तन्मन्त्रैरर्चयेत्तानि गन्धाद्यैः प्रत्यहं गुरुः ।
तन्मन्त्रैरेव होमस्स्याद्दुर्गायाश्च विशेषतः ॥

समिदाज्येन हविषा पायसेन च होमयेत् ।
हुतशेषं तुरङ्गानां गजानामुपहारयेत् ॥

बद्धप्रतिसरान् पश्चगजाश्वान् समलंकृतान् ।
भ्रामयेन्नगरे नित्यं नानाघोषपुरस्सरम् ॥

प्रत्यहं नृपतिः स्वाः स्वाः संपूज्य पितृदेवताः ।
पूजयेद्राजचिह्नानि फलमाल्यविलेपनैः ॥

नैवेद्यान्नैस्सताम्बूलैर्नानापूपसमन्वितैः ।
हुतशेषं प्रदातव्यमौपवाह्यनिके गजे ॥ 15

तस्यापि हरणे राज्ञो विजयस्समुदाहृतः ।
पूजामन्त्रान् प्रवक्ष्यामि शृणुध्वं विप्रसत्तमाः ॥

ओं छं छत्राय नमः
यथाम्बराच्छादयन्ति शिवायेमां वसुन्धराम् ।
तथाच्छादय राजानं विजयारोग्यवृद्धये ॥ छत्रमन्त्रः ॥

ओं तुरङ्गाय नमः
गन्धर्वकुलजातिस्त्वं भूयस्त्वं कुलभूषणः ।
ब्रह्मणः सत्यवाक्येन सोमस्य वरुणस्य च ॥

प्रभावाच्च हुताशस्य विजयस्व तुरङ्गम ।
तेजसा चैव सूर्यस्य मुनीनां तपसा तथा ॥

रुद्रस्य ब्रह्मचर्येण पवनस्य बलेन च ।
स्मर त्वं राजपुत्रोऽपि कौस्तुभं च मणिं स्मरन् ॥ 20

यां गतिं ब्रह्महा गच्छेत् पितृहा मातृहा तथा ।
भूम्यर्थेऽनृतवादी च क्षत्रियश्च पराङ्मुखः ॥

सूर्याचन्द्रमसौ वायुर्यावत्पश्यन्ति दुष्कृतम् ।
व्रजेस्त्वं तां गतिं क्षिप्रं तज्जवोऽयं भवेत्तव ॥

निष्कृतिं यदि गच्छेस्त्वं युद्धेऽध्वनि तुरङ्गम ।
रिपून्विजित्य समरे सह भर्त्रा सुखी भव ॥ अश्वमन्त्रः ॥

ओं ध्वं ध्वजाय नमः ।
शक्रकेतो महावीर्य सुवर्णः स्वरुपाश्रितः ।
पतत्रिराड् वैनतेयस्तथा नारायणध्वजः ॥

काश्यपेयोऽमृताहर्ता नागारिर्विष्णुवाहनः ।
अप्रमेयो दुराधर्षो रणे वै रिपुसूदनः ॥ 25

गरुत्मान्मारुतगतिस्त्वया सन्निहितस्थितः ।
साश्वधर्मयुतान् योधान् रक्ष त्वं रिपुसूदन ॥

ओं गं गजाय नमः ।
कुमुदैरावतौ नागो पुष्पदन्तोऽथ वामनः
सुप्रतीकोऽञ्जनो नील एतेऽष्टौ देवयोनयः ॥

एषां पुत्राश्च पौत्राश्च वनान्यष्टौ वनाश्रिताः ।
भद्रो मन्द्रो मृगश्चैव गजसङ्कीर्ण एव च ॥

वने वने प्रसूतास्ते वनयोनिर्महागजः ।
पान्तु त्वां वसवो रुद्रा आदित्यास्समरुद्गणाः ॥

भर्तारं रक्ष नागेन्द्र समयः प्रतिपाल्यताम् ।
अवाप्नुहि जयं युद्धे गमने स्वस्ति नो व्रज ॥ 30

श्रियं सोमाद् बलं विष्णोस्तेजस्सूर्याज्जवोऽनिलात् ।
स्थैर्यं मेरोर्जयं रुद्राद् यशो देवात्पुरन्दरात् ॥

युद्धे रक्षन्तु नागास्त्वां दिशश्च सह दैवतैः ।
अश्विनौ सह गन्धर्वैः पान्तु त्वां सर्वतस्सदा ॥

हस्तिमन्त्रः ॥

ओं पताकायै नमः ।
हुतभुग्वसवो रुद्रो वायुस्सोमो महर्षयः ।
नागकिन्नरगन्धर्वयक्षभूतगणा ग्रहाः ॥

प्रमथाश्च सहादित्यैर्भूतेशो मातृभिस्सह ।
गणस्सेनापतिः स्कन्दो वरुणश्चाश्रितास्त्वयि ॥

प्रज हन्तु रिपून्सर्वान् राजा विजयमृच्छतु ।
श्वानःप्रयुक्तान्यरिभिः दूषणानि समन्ततः ॥

पतन्तूपरि शत्रूणां हतानि तव तेजसा ।
कालनेमिवधे यद्वद्यावत् त्रिपुरघातिनि ॥

हिरण्यकशिपोर्युद्धे यद्वद्देवासुरे तथा ।
शोभितासि तथैवाद्य शोभया समयं स्मर ॥

नीलां श्वेतामिमां दृष्ट्वा नश्यन्त्वाशु नृपारयः ।
व्याधिभिर्विविधैर्घोरैश्शस्त्रैश्च युधि निर्जिताः ॥

सद्यःस्वस्था भवन्ति स्म स्वरपातेनापमार्जिताः ।
पूतना रेवती नाम काळरात्रीति याः स्मृता ॥

दहित्वाशु रिपून् सर्वान् पताके त्वं मयाश्रिता ॥

पताकामन्त्रः ॥

ओं खं खड्गाय नमः ।
असिर्विशसनः खड्गस्तीक्ष्णधर्मा दुरासदः ॥ 40

श्रीगर्भो विजयश्चैव धर्मधारस्तथैवच ।
इत्यष्टौ तव नामानि स्वयमुक्तानि वेधसा ॥

नक्षत्रं कृत्तिका तुभ्यं गुरुर्देवो महेश्वरः ।
हिरण्यं च शरीरं ते धाता देवो जनार्दनः ॥

पिता पितामहो देवस्त्वं मां पालय सर्वदा ॥

खड्गमन्त्रः ॥

ओं वं वर्मणे नमः ।
शमप्रदस्त्वं समरे वर्म सर्वापदो ह्यसि ॥

रक्ष मां रक्षणीयोऽहं तवानघ नमोऽस्तु ते । वर्ममन्त्रः ॥



ओं दुं दुन्दुभये नमः ।
दुन्दुभे त्वं सपत्नानां घोषाद्धृदयकम्पनः ॥

तव भूमिप्रधानानां तथा विजयवर्द्धनः ।
यथा जीमूतघोषेण हृष्यन्ति परवारणाः ॥ 45

तथास्तु तव शब्देन हर्षोऽस्माकं मुदावहः ।
यथा जीमूतशब्देन स्त्रीणां त्रासो हि जायते ॥
तथा च तव शब्देन रुद्रस्य त्वद्द्विषो रणे ।

दुन्दुभिमन्त्रः ॥

ओं चं चापाय नमः ।
सर्वायुधमहामात्र सर्वायुधनिषूदन ॥
चाप मां सर्वदा रक्ष साकं सायकसत्तमैः । चापमन्त्रः ॥

ओं शं शङ्खाय नमः ।
पुण्यस्त्वं पुण्यशङ्खानां मङ्गलानां च मङ्गलः ॥
विष्णुना विधृतो नित्यमतश्शान्तिप्रदो भव ।

शङ्खमन्त्रः ॥

ओं चं चामराय नमः ।
शशांकाकारसंकाश हिमपिण्डितपाण्डर ॥
प्रोत्सारयाशु दुरितं चामरामरवल्लभ । चामरमन्त्रः ॥

ओं क्षुं क्षुरिकायै नमः ।
सर्वायुधानां प्रथमे निर्मितासि पिनाकिना ॥ 50

शूलायुधाग्रं निष्कृष्य कृत्वा मुष्टिमदं शुभम् ।
चण्डिकायाःप्रदत्तासि सर्वदुष्टनिबर्हिणी ॥

त्वया विस्तारिता चासि देवानां प्रतिपादिता ।
सर्वसत्त्वाङ्गभूतासि सर्वाशुभनिवारिणी ॥
क्षुरिके रक्ष मां नित्यं शान्तिं यच्छ नमोऽस्तु ते ।

क्षुरिकामन्त्रः ॥

ओं कं कनकदण्डाय नमः ।
प्रोत्सारणाय दुष्टानां साधूनां ग्रहणाय च ॥

ब्रह्मणा निर्मितश्चासि व्यवहारप्रसिद्धये ।
यशो देहि सुखं देहि देवो हि भव भूपतेः ॥
ताडयामुन् रिपून् सर्वान् हेमदण्ड नमोऽस्तु ते ।

कनकदण्डमन्त्रः ॥

ओं सिं सिंहासनाय नमः ।
विजयी भवदेवोऽसि रिपुघाती प्रियंकरः ॥ 55

दुःखहा धर्मदश्शान्तस्सर्वारिष्टविनाशकः ।
एतेऽष्टौ सन्निधौ यस्मात् तव सिंहा महाबलाः ॥

तेन सिंहासने नित्यं विप्रैर्वेदेषु गीयसे ।
त्वयि स्थितश्शिवस्साक्षात् त्वयि शक्रस्सुरेश्वरः ॥

त्वयि स्थितो हरिर्देवस्त्वदर्थे तप्यते तपः ।
नमस्ते सर्वतोभद्र भद्रं ते भव भूपतेः ॥

त्रैलोक्यं जय सान्निध्यं सिंहासन नमोऽस्तु ते

सिंहासनमन्त्रः ॥

लोकाभिचारकं कुर्यात् कर्मेदं मन्त्रपूर्वकम् ॥

फलनैवेद्यकुसुमैर्धूपदीपविलेपनैः ।
अष्टम्यां पूजयेद्देवीं दुर्गाख्यां स्वर्णनिर्मिताम् ॥ 60

रौप्यां वा ताम्रजां शैलां दारुजां मृत्तिकोद्भवाम् ।
प्रतिमां चित्रसंयुक्तां कृत्वा शक्त्यनुसारतः ॥

पूर्वाह्णे वाथ मध्याह्ने क्रियामेनां समाचरेत् ।
राजा स्नात्वा विभूष्याङ्गं सकलीकृतविग्रहः ॥

स्नापयित्वा विलिप्याथ चन्दनागरुकुङ्कुमैः ।
कर्पूरसहितैः पुष्पैर्बहुभिर्गन्धसंयुतैः ॥

कुसुमैर्गन्धपुष्पैश्च धूपदीपसमन्वितैः ।
नैवेद्यैः फलसंयुक्तैर्नृत्तगानादिभिस्सह ॥

द्रोणपुष्पसमायुक्तैर्बिल्वपत्रैश्च पूजयेत् ।
अष्टदोर्भिस्समायुक्तां महिषासुरमर्दनीम् ॥ 65

तस्योरःक्षिप्तशूलञ्च यकपालां शूलमण्डिताम् ।
धनुर्बाणसमायुक्तां खड्गखेटकधारिणीम् ॥

शङ्खचक्रसमायुक्तां सर्वालंकारभूषिताम् ।
वराक्षमालां मुखरां महिषासुरसंस्थिताम् ॥

सिंहानुगां त्रिनेत्रां वा सर्वशत्रुविनाशिनीम् ।
चतुर्भुजां वा संपूज्य वरदाभयसंयुताम् ॥

शङ्खचक्रसमायुक्तां स्थितां तां शान्तरूपिणीम् ।
नानाविधैश्च गानैश्च नृत्तैर्नानाविधैरपि ॥

एवं हृष्टैर्निशां नीत्वा प्रभाते त्वरुणोदये ।
घातयेन्महिषान्मेषानमतो मृदुकन्धरान् ॥ 70

शतमर्धं तदर्धं वा तदर्धं वा यथेच्छया ।
ततोऽपराह्णसमये नवम्यां स्यन्दने स्थिताम् ॥

भवानीं भ्रामयेद्राष्ट्रे स्वयं राजा स सैन्यवान् ।
कश्चिद्वा प्रेषितो वीरो विभूतेन च हेतिना ॥

भूतेभ्यस्तु बलिं दद्यादन्नं साज्यं मधुप्लुतम् ।
दिक्षु विदिक्षु बलिं दद्यान्मन्त्रेणानेन बुद्धिमान् ॥

बलिं गृह्णन्त्विमं देवा आदित्या वसवस्तथा ।
मरुतो चाश्विनौ रुद्रास्सुपर्णाः पन्नगाः ग्रहाः ॥

असुरा यातुधानाश्च मातृसर्पपिशाचकाः ।
डाकिन्यः क्षेत्रवेताळाः योगिन्यः पूतनाश्शिवाः ॥ 75

जृम्भकास्सिद्धगन्धर्वाः वीरा विद्याधरा नराः ।
दिक्पाला लोकपालाश्च ये च विघ्नविनायकाः ॥

जगतां शान्तिकं कर्म ब्राह्मणाद्या महर्षयः ।
मम विघ्नं मा चरन्तु मा सन्तु परिबन्धिनः ॥

सौम्या भवन्तु तृप्ताश्च भूतप्रेतास्सुखावहाः ।
इत्येवं भ्रामयेद्राष्ट्रे राजा देवीं यथास्थिताम् ॥ 78

नरयानेन वा देवीं सर्वविघ्नविनाशिनीम् ।

इति उत्तरकामिकाख्ये महातन्त्रे दुर्गापूजाविधिः
सप्तसप्ततितमः पटलः ॥

---

## वाजिनीराजनविधिः

शान्तिनीराजनाख्यं तु संप्रवक्ष्यामि वाजिनाम् ।
कुर्यादाश्वयुजे मासि प्रतिसंवत्सरं गुरुः ॥

नवम्यामथवाष्टम्यां पञ्चदश्यामथापि वा ।
द्वादश्यां वा तथा कुर्याच्छुक्लपक्षे विशेषतः ॥

नगर्याश्चोत्तरे पूर्वे कुर्यादीशानदेशके ।
अन्यस्मिन् वा प्रकर्तव्या तद्विधानमिहोच्यते ॥

विस्तारतोऽष्टरत्नीका दशहस्तसमुच्छ्रिता ।
विंशद्धस्तसमायामा यागशालेयमीरिता ॥



षट्स्तंभितां चतुःश्रेणीं त्रिमध्यां वेदिमुद्धरेत् ।
तदर्धं शीर्षकं चैव सा राज्ञां वेदिका मता ॥ 5

गम्भीरं वेदिमध्ये तु वह्निस्थानं प्रकल्पयेत् ।
हस्तमात्रप्रमाणेन मेखलात्रयसंयुतम् ॥

आदौ प्रतिसरं कृत्वा किङ्किण्योषधिसंयुतम् ।
अपां समीपं नीत्वा तु सोऽश्वं सस्त्रीभिरावृतम् ॥

प्रदक्षिणोदके तीरे वेदीं प्रागाननां नयेत् ।
कुण्डं तदूर्ध्वे कर्तव्यं होमार्थं पूर्वमानतः ॥

संस्कृत्य कुण्डमग्निं च होमयेद्देशिकोत्तमः ।
प्रबुद्धेऽग्नौ तत इमाञ्जुहुयाद् ब्रह्मणे हविः ॥

ततो विष्णवग्निरुद्रेभ्यश्शक्राय वरुणाय च ।
ततश्चाचलदेवाय सेनान्यै धनदाय च ॥ 10

नागेभ्यश्च सरिद्भ्यश्च ब्रह्मादिभ्यो यथाक्रमम् ।
जुहुयादाहुतीरेता बलिं चैतेषु विन्यसेत् ॥

नद्यां वाथ समुद्रे वा तटाकादौ सरस्सु वा ।
स्नापयेत् स्नापयेच्चैव यथोक्तैरोषधीगणैः ॥

तिलसर्षपकल्कैश्च दध्ना चैतान् विघर्षयेत् ।
विमर्दितान् वीतमलान् पीतस्नातान्यगाहितान् ॥

वाहनागारमागम्य ब्रह्मचर्यसमन्वितः ।
बद्धौषधानि वीर्याय रक्षार्थं तेषु बन्धयेत् ॥

सायं प्रातश्च जुहुयात् सप्ताहं पूर्ववद्बुधः ।
कुशैस्संशोधयित्वाज्यं कुशैराज्यं समर्पयेत् ॥ 15

समिद्भिस्सुसमिद्धेऽग्नौ द्वितीयमुपहारयेत् ।
आज्यं स्रुचा तृतीयं तु लोहिताश्वमुपाहरेत् ॥

दध्यपूपवराज्यैश्च चतुर्थमपि तर्पयेत् ।
ब्राह्मे मुहूर्ते प्रत्यूषे ब्रह्मघोषाभिनादिते ॥

सूर्याचन्द्रमसो रश्मिर्यथा न स्पृशते हयान् ।
तथा तेषां प्रचारस्स्यात् स्नानं प्रातः प्रशस्यते ॥

कालद्वये प्रधानस्य तुरगस्य विशेषतः ।
पुण्याहं वाचयेन्नित्यं स्वस्त्याशीर्मङ्गलान्वितम् ॥

निवृत्ते सप्तरात्रे तु स्नातश्च पुरतःस्थितः ।
अष्टम्यां स्नापयित्वा तान् गौरसर्षपगोरसैः ॥ 20

उत्तराषाढतारस्य सन्धाने श्रवणस्य च ।
नवम्यां शुक्लपक्षस्य नगराद्वासयेद्बहिः ॥

दिशि पूर्वोत्तरायां वा देशे प्राक्प्रवणे शुचौ ।
प्रदक्षिणोदके सौम्ये विशाले द्रुमसंकटे ॥

तत्र तोरणमुत्थाप्य दशहस्तसमुच्छ्रयम् ।
विस्तारतोऽष्टरत्नीकं प्राङ्मुखं माल्यशोभितम् ॥

तत्पार्श्वे कृतकूटे तु क्रियां पूर्ववदाचरेत् ।
सर्वमङ्गळसंयुक्तो राजा पौरैर्नरैर्वृतः ॥

गच्छेच्छान्तिगृहं हृष्टःशङ्खतूर्यादिभिस्सह ।
प्रविश्य शान्तिगेहं तु विधानमिदमाचरेत् ॥ 25

माञ्जिष्ठां चन्दनं कुष्ठं हरितालमनश्शिलाम् ।
वचां दन्तीं गुडूचीं च प्रियङ्ग्वर्जुनसंज्ञिकम् ॥

हरिद्रां स्वर्णपुष्पं च वह्निमन्थं ततः परम् ।
सकौशं गिरिकर्णिं च ह्रीयमाणं कटम्भराम् ॥

सहदेवां नागपुष्पं कपिकच्छुकमेव च ।
शतावरीं सोमवल्लीं निक्षिपेत् कलशेषु च ॥

कुम्भेषु वाष्टसंख्येषु वस्त्रादिसहितेषु च ।
गन्धैः पुष्पैश्च धूपैश्च दीपैर्नैवेद्यकैरपि ॥

नानाविधैरपूपाद्यैर्दत्त्वा बल्युपहारकम् ।
जुहुयात् पूर्ववत् कुण्डे पूर्वद्रव्यैर्यथाक्रमम् ॥ 30

वैयाघ्रचर्मण्यासीनो राजा गुरुसमन्वितः ।
वेदविद्भाजिवैद्याभ्यां सहितः पूर्वदिङ्मुखः ॥

अग्नेश्शुभाशुभे ज्ञात्वा पूर्णाहुत्यवसानके ।
आरुह्य तुरगश्रेष्ठं प्रापयेत्तोरणान्तिकम् ॥

शनैस्सान्त्वनवाग्भिश्च गानवाद्यादिभिर्युतम् ।
श्वेतचन्दनमालाढ्यं श्वेतवस्त्रसमन्वितम् ॥

होमशेषं तदा पिण्डं पयोदधिसमन्वितम् ।
कदलीफलसंयुक्तं दद्याद्वाजिवराय च ॥

यदि शीघ्रं समश्नीयाद्विजयाय भविष्यति ।
केवलस्थैस्तदा तोयैश्शाखयोदुम्बरोत्थया ॥ 35

प्रोक्षयेत्तु गुरुर्मन्त्रैस्तदा शान्तिकपौष्टिकैः ।
राजानं हस्तिनं पश्चादश्वं संप्रोक्षयेत्तदा ॥

शूलेनोरस्थले भिन्द्याद्वैरिं विप्रोऽथ मृण्मयम् ।
आभिचारकमन्त्रैस्तु तीक्ष्णकृष्णमयेन च ॥

हयाय रक्षकां दत्त्वारुह्य प्रागुत्तरां दिशम् ।
राजा विजयसिद्ध्यर्थं गच्छेन्मङ्गलसंयुतम् ॥

एवमेव गजादीनां तदानीं राजनं नयेत् ।
किं तु तत् कृत्तिकामासे तुरङ्गर्क्षेऽसमाचरेत् ॥

पूर्वोक्तासु च सर्वासु तिथिष्वपि च कारयेत् ।
गजयाने विशेषोऽयं चतुरश्रं च कूटकम् ॥ 40

वेदिका चतुरश्रा च गजभूमिरथोच्यते ।
शतहस्तमितं कुर्याच्चतुरश्रं समाहितः ॥

पञ्चाशत्पञ्चविंशद्वा समन्तात्सभितो हवेत् ।

इति उत्तरकामिकाख्ये महातन्त्रे

वाजिनीराजनविधिरष्टसप्ततितमः पटलः ॥

---

## राजनीराजनविधिः

कार्तिके शुक्लद्वादश्यां प्रदोषे रजनीमुखे ।
वेद्यां तोरणमालाभी रम्ये श्रीचातुरन्तके ॥

ज्वालयित्वा नवं वह्निं हुत्वा मन्त्रैर्गुरूत्तमः ।
वर्धमानतरूत्थाभिर्दीपिकाभिर्हुताशनम् ॥

बदरैः कूर्चकैश्चैव पत्रपुष्पाक्षतैस्तथा ।
संपूज्य गन्धपुष्पाद्यैरेवं नीराजयेत्पुरा ॥

तस्यैवानुमतां गौरीं हरिं लक्ष्मीं चतुर्मुखम् ।
विघ्नेशं चण्डिकां सूर्यं यक्षान्मातृगणांस्तथा ॥



गुहं पितृगणान्नागान् सर्वान्नीराजयेत्ततः ।
नीराजनं गवां कुर्यान्महिष्यादेश्च आनयेत् ॥ 5

भासयन्विघ्नजालं च घण्टानादमहारवैः ।
नीराजयेद्विशेषेण राजानं देशिकोत्तमः ॥

तुरगान् द्विरदान्राजचिह्नानि च गुरूत्तमः ।
सिंहासनस्थं राजानं सामन्तप्रमुखावृतम् ॥

नीराजयेत् कुलस्त्रीभिर्गन्धपुष्पादिपूजितम् ।
रूपयौवनसंपन्नवेश्याभिर्वाथ कारयेत् ॥

यत्रैतत् क्रियते राष्ट्रे पुरे ग्रामे द्विजोत्तमाः ।
तेषां राजा सुखं याति सुभिक्षं जायते तथा ॥

चतुर्णामपि वर्णानां रोगोत्पत्तिर्न विद्यते ।

इति उत्तरकामिकाख्ये महातन्त्रे

राजनीराजनविधिरेकोनाशीतितमः पटलः ॥

---

## पुष्याभिषेकविधिः

पुष्याभिषेकं वक्ष्यामि पवित्रं पापनाशनम् ।
सर्वोत्पातविनाशार्थं श्रूयतां द्विजसत्तमाः ॥

पुण्ये मनोरमे देशे रविहस्तप्रमाणतः ।
कूटं कुर्याच्छुभं भक्त्या मध्यपादं यथा भवेत् ॥

द्वादशस्तम्भसंयुक्तं स्यक्तमध्यमवेदिकम् ।
दर्पणोदरसंकाशं मण्डनैरुपशोभितम् ॥

तस्य पश्चिमभागे च दक्षिणे तस्य बाह्यतः ।
वेदिकाद्वितयं कार्यं पञ्चषड्ढस्तमानतः ॥

चतुरश्रं समं हस्तद्विहस्तोत्सेधसंयुतम् ।
पार्श्वे सोपानसंयुक्तं संश्लिष्टं तद्द्वयं तथा ॥ 5

एवं सर्वं समापाद्य कुर्याद्राजाभिषेचनम् ।
पुष्यमासे तु पुष्यर्क्षे तीर्थेष्वायतनेषु च ॥

उद्यानेषु च पुण्येषु शिवस्थाने विशेषतः ।
कुबेरेन्द्रेशकाष्ठासु गुरुर्मन्त्रसमन्वितः ॥

देवज्ञेन बलिं कुर्यात्पूर्वेद्युरुदारधीः ।
दधिलाजाक्षतापेतं गन्धपुष्पादिभिस्सह ॥

आगच्छन्तु सुरास्सर्वे यत्र पूजाभिलाषिणः ।
दिशो नागा द्विजाश्चैव ये चाप्यन्येऽशभागिनः ॥

आवाह्यैकपदास्सर्वानेवं ब्रूयाद्गुरूत्तमः ।
पूर्वे श्वःपूजां संप्राप्य दत्त्वा शान्तिं महीपतेः ॥ 10

एवमुक्त्वा बलिं दत्त्वा रात्रौ स्वप्नं परीक्षयेत् ।
शुभं चेदारभेत् प्रातरशुभे शान्तिसंयुतम् ॥

मण्डपं भूषयेत् पश्चाद्द्वारतोरणसंयुतम् ।
मङ्गलाङ्कुरकर्मात्र पूर्वप्रोक्तवदाचरेत् ॥

यज्ञवृक्षसमुद्भूतं कुर्याद्भद्रासनं द्विजाः ।
पञ्चषण्मात्रमारभ्य पञ्चाशत्करजान्तकम् ॥

मानं भद्रासने प्रोक्तं सभद्रं वा विभद्रकम् ।
सोपानद्वयसंयुक्तमग्रे पृष्ठे विशेषतः ॥

तद्दक्षिणे विशालव्यमासनं पादसंयुतम् ।
सोपानसहितं कुर्यादिष्टमानसमन्वितम् ॥ 15

श्राद्धं वृद्धिनिमित्तं यत् पूर्वेद्युर्विधिना नयेत् ।
कुर्यात्प्रतिसरं रात्रौ सर्वालङ्कारसंयुतम् ॥

प्रभाते मण्डपं तु तद्विधानेन कारयेत् ।
चतुर्हस्तं समारभ्य षडङ्गुलविवर्धनात् ॥

षड्ढस्तान्तप्रमाणं यन्मण्डले मानमिष्यते ।
शतभागं तु तत्कृत्वा दक्षिणादि ततः क्रमात् ॥

नवांशं भारतं वर्षं वर्णः स्वाभाविको मतः ।
भागद्वयेन हिमवान्श्वेतवर्णः प्रकीर्तितः ॥

वर्षं किम्पुरुषाख्यं यन्नवांशेन प्रकीर्तितम् ।
स्वर्णवर्णं तु तत्प्रोक्तं हेमकूटो द्विभागतः ॥ 20

हेमकूटस्समाख्यातश्चोत्तरे हरिवर्षकम् ।
स्वर्णवर्णं समाख्यातं द्वाभ्यां निषधमश्ववत् ॥

पश्चिमात् पूर्वपर्यन्तमेतेषां संव्यवस्थितिः ।
उत्तरांशात् समारभ्य नवांशं कुरुवर्षकम् ॥

तत्स्वर्णवर्णं विज्ञेयं शृङ्गवान् स्याद्द्विभागतः ।
मयूरवर्णो विज्ञेयस्सुवर्णवर्णसंयुतः ॥

हिरण्यं वा नवांशं तु स्वर्णवर्णं प्रकीर्तितम् ।
श्वेताचलो द्विभागेन स्वर्णयुक् श्वेतवर्णकः ॥

रम्यवर्षं नवांशेन स्वर्णवर्णं प्रकीर्तितम् ।
नीलाचलो द्विभागेन वैडूर्यद्युतिसंयुतः ॥ 25

अवशिष्टाश्चतुस्त्रिंशद्भागा मध्ये व्यवस्थिताः ।
पूर्वां दिशं समारभ्य द्वात्रिंशद्भागसंयुतम् ॥

भद्राश्ववर्षमाख्यातं श्वेतवर्णं प्रकीर्तितम् ।
माल्यवान पश्चिमे भागे निर्मितः कृष्णवर्णयुक् ॥

पश्चिमां दिशमारभ्य वर्षं स्यात् केतुमालकम् ।
द्वात्रिंशत्पदकं कृष्णं नाम्नैतद्गन्धमादनम् ॥

समन्तादेकभागेन वर्षकं स्यादिलावृतम् ।
एकेन श्वेतवर्णं स्याच्चतुरश्रं तु मध्यमे ॥

एषु द्वात्रिंशदंशेन वर्तयेन्मेरुपर्वतम् ।
वायव्याग्नेयपर्यन्तं वृत्ते सूत्रं प्रसार्य च ॥ 30

तथैव नैरृतादीशं विदिक्सूत्रं प्रसारयेत् ।
श्वेतवर्णं तु पूर्वे स्याद्दक्षिणे हेमवर्णकम् ॥

पश्चिमे कृष्णवर्णं स्यादुत्तरे रक्तवर्णकम् ।
अवशिष्टस्तु यो देशस्सर्वः पीतः प्रकीर्तितः ॥

जम्बुद्वीपः समाख्यातश्शतभागविनिर्मितः ।
जम्बुद्वीपसमः प्रोक्तो लवणाब्धिस्ततो बहिः ॥

शाकद्वीपं तु तद्बहिस्स्यात् तच्चद्द्विगुणमानतः ।
बहिस्समुद्रा द्वीपाश्च सप्तसंख्याः प्रकीर्तिताः ॥

जम्बूद्वीपः समाख्यातो लक्षयोजनविस्तरः ।
तद्बाह्ये तत्प्रमाणेन क्षारोदः परिकीर्तितः ॥ 35

क्षारोदाद्द्विगुणं क्षीरं क्षीरोदाद्द्विगुणं दधि ।
दध्नस्तु द्विगुणं सर्पिस्तस्मात्तु द्विगुणो रसः ॥



रसात्तु द्विगुणं माधं मधात् स्वादूदकं तथा ।
जम्बूद्वीपात्तथा शाकश्शाकाच्च कुशसंज्ञकः ॥

कुशात् क्रौञ्चो विनिर्दिष्टः क्रौञ्चात्स्याच्छाल्मली तथा ।
तस्माद् गोमेदसंज्ञश्च गोमेदात् पुष्कलं पुनः ॥

ज्ञेयं स्वादूदकाद्बाह्ये लोकालोक इति स्मृतः ।
अन्तरे रक्तवर्णः स्याद् बाह्ये कृष्णः प्रकीर्तितः ॥

दशकोटिमितो ज्ञेयः क्रीडार्थं स्याद्दिवौकसाम् ।
तस्माच्चाद्रिवरो ज्ञेयो लोकालोक इति द्विजाः ॥ 40

सहस्रदशविस्तीर्णो देवानामाश्रमो मतः ।
हिमाचले पिशाचाः स्युस्तेषां नामान्यमूनि वै ॥

छगलश्चण्डश्च कैलासः कदली बक एव च ।
बडबामुखो द्विपादश्च विपादः कारकः स्मृतः ॥

ज्वाला च कुम्भपात्रश्च तथा कुम्भी प्रतुन्दिकः ।
प्रतुन्दिकोपवीरौ च प्रवीरो लूखलः स्मृतः ॥

उलूखली मर्कटी स्यान्मर्कटश्चक्रषण्डकः ।
चक्रषण्डी पाणिपत्रः पाणिपत्री च वासुकः ॥

वासुकिः पांसुकुत्पांसुमथनी निपुणो मतः ।
निपुणा बलिभुग् ज्ञेया पश्चादुच्छेषणा मता ॥ 45

प्रस्कन्दः स्कन्दिका प्रोक्ताश्चतुस्त्रिंशदुदाहृताः ।
मांसेनान्नेन संपूज्य मद्यैः प्रतिसरादिभिः ॥

श्वेताचले दितिसुता दानवाश्च समीरिताः ।
हिरण्यकशिपुर्नाम्ना हिरण्याक्षो द्वितीयकः ॥

एतौ दितिसुतौ ज्ञेयौ विप्रचित्तिरनन्तरः ।
द्विमूर्धा शम्बरश्चैव ततश्शङ्कुशिरा मताः ॥



यमश्च शङ्कुकर्णश्च द्विपादस्तदनन्तरः ।
गवेष्टिर्मेषवक्त्रश्च मखवान् कपिलो मतः ॥

वामनश्च मरीचिश्च तथेक्षुप उदाहृतः ।
भागोऽभागस्तथा शेषश्शालमह इति स्मृताः ॥ 50

विक्षोभश्च सुकेशश्च केतुवीर्यश्शतह्रदः ।
मन्त्रजिच्चाश्वजित् प्रोक्तस्तथा राजिरुदाहृतः ॥

देवजिच्चैकवक्त्रश्च सुबाहुर्वारको मतः ।
वैश्वानरस्सुलोमा च द्रविणश्च महाशिराः ॥

स्वर्भानुःपूषपूर्वश्च द्विभुजो धृतराष्ट्रकः ।
चन्द्रतापनसंज्ञश्च सूक्ष्मो निश्चन्द्र एव हि ॥

स्वर्गनाभस्ततःप्रोक्तो महागिरिरनन्तरः ।
अभिलोकः सुकेशश्च मलयो मलकस्तथा ॥

नयश्च नगमूर्धा च महोदर उदाहृतः ।
प्रमोदः कुमुदश्चाश्वग्रीवो वैश्रवसंज्ञकः ॥ 55

विरूपाक्षश्चरूपश्चो हरो राजा उदाहृतः ।
हिरण्ययुक् शतमखश्शंबरश्शरभो मयः ॥

शरभस्सूर्यसंज्ञश्च चन्द्रमास्स उदाहृतः ।
चतुष्षष्टिश्च संज्ञानां पूजाश्चैषां च पूर्ववत् ॥

शृङ्गवत्यचले पूज्याः पितरस्समुदाहृताः ।
सुभास्वरामृताश्चाग्निष्वात्ता उपहुता मताः ॥

सोमपाश्च ततो ज्ञेया विज्ञेयाश्च सुकालिकाः ।
क्रव्यादा आज्यपाश्चैव पृथक् त्रय उदाहृताः ॥

सप्तभिश्च गणैरेकविंशतिस्संख्यया मताः ।
अग्निष्वात्ता बर्हिषदस्सोमपाश्च ततो मताः ॥ 60

हविष्मन्तश्चाज्यपास्सुस्तद्वदेव सुकालिकाः ।
अग्न्यनग्निहव्यवाहा हविस्सोम्या दशैव हि ॥

तिलतैलान्नकैर्माषैः पूज्याः प्रतिसरादिभिः ।
नीलाचले च ऋषयः संपूज्याः काश्यपादयः ॥

काश्यपोऽत्रिर्वसिष्ठश्च भरद्वाजोऽथ गौतमः ।
विश्वामित्रो जमदग्निर्मरीचिश्च ततो मतः ॥

पुलस्त्यः पुलहश्चैव क्रतुश्चैवाङ्गिरा भृगुः ।
सनत्कुमारस्सनकः सनन्तश्च सनातनः ॥

दक्षोऽथ जैगिषीव्यश्च दहनैकत एव च ।
द्वितस्त्रितोऽथ जाबाली दुर्वासा दुर्विनीतकः ॥ 65

कण्वः कात्यायनो मार्कण्डेयो दीर्घतमो मतः ।
शुनश्शेफो विदुरथस्साम्बस्संवर्त इत्यपि ॥

च्यवनः पराशरश्चैव ततो द्वैपायनस्ततः ।
यवक्रीतदेवरातौ देवराजोऽजकस्तथा ॥

चत्वारिंशच्च मुनयो गन्धैः प्रतिसरादिभिः ।
ऋग्यजुस्साममन्त्रैर्वा पूज्या वा स्वस्वनामभिः ॥

निषधे पर्वते नागा अनन्ताद्या उदाहृताः ।
अनन्तो वासुकिश्चैव तक्षः कार्कोटकः स्मृतः ॥

पद्मश्चैव महापद्मः शङ्खपालोऽष्टमः स्मृतः ।
गुलिकश्च यजेदष्ट विमिश्रैर्गन्धपुष्पकैः ॥ 70

सितामधुघृतं दत्वा दद्यात् प्रतिसरादिकम् ।
देवाः पूज्या महामेरौ त्रयस्त्रिंशच्च ते मताः ॥

धरो ध्रुवश्च सोमश्च आपश्चैवानिलोऽनलः ।
प्रत्यूषश्च प्रभासश्च वसवोऽष्टाविमे मताः ॥

अजैकपादहिर्बुध्न्यो विरूपाक्षोऽथ रैवतः ।
हरश्च बहुरूपश्च त्र्यम्बको नाम रुद्रकः ॥

सावित्रश्च जयन्तश्च पिनाकी चापराजितः ।
रुद्रा एकादश प्रोक्ता इन्द्रो धाता भगोऽर्यमा ॥

त्वष्टा मित्रश्च वरुणो विवस्वांस्तु ततः परः ।
सविता पूषांशुमान् विष्णुर्द्वादशार्का उदाहृताः ॥ 75

प्रजापतिर्वषट्कारस्त्रयस्त्रिंशच्च देवताः ।
यष्टा प्रणामधूपैश्च घृताहुतिभिरेव च ॥

दद्यात् प्रतिसरार्थं च हेमकूटाख्यपर्वते ।
गन्धर्वाप्सरसः पूज्याः चित्रसेनोऽग्निसेनकः ॥

सुवर्णो गणपश्चैव धृतराष्ट्रस्ततः परम् ।
सूर्यवर्चा युगपुत्रो सुशिरामरनन्दिनौ ॥

द्वैधानतिश्चित्ररथः पर्जन्यश्च ततो मतः ।
उर्वीशश्च कलिश्चैव पर्वतो नारदस्तथा ॥

साधनश्चैव सन्धिश्च कुदरश्च करालकः ।
कृतवीर्यो ब्रह्मचारी सुपर्णो मीन इत्यपि ॥ 80

हिरण्यश्च सुचन्द्रश्च गन्धर्वास्सप्तविंशतिः ।
अकृतयश्चोदयन्त्यो गन्धर्वस्यस्ततः परम् ॥

ऊर्जा युवतयश्चैव हेतुधाया उदाहृताः ।
स्वधाश्चैवामृता मोदाः सुशिवास्तु ततः परम् ॥

रुपाश्च भीरवाश्चैव शौर्याः सत्याश्चतुर्दश ।
मेनका सहजन्या च तत्पूर्वा पुञ्जिकस्थला ॥

घृतस्थला घृताची च विश्वाची पूर्वचित्तिका ।
प्रम्लोचन्त्यनुम्लोचन्ती मोचयन्त्यनुगा ततः ॥



रुद्रारुणप्रिया चैव अत्रसा सुभगा ततः ।
दास्यरिष्टा मनोवर्ती सुकेशा च तिलोत्तमा ॥ 85

अग्निभर्त्री च हेमा वै मेनका चोर्वशी ततः ।
चतुर्विंशतिसंख्याताः सुगन्धैश्च सुमाल्यकैः ॥

यष्टा प्रतिसरार्थं तु हेमाद्व्यपर्वते ततः ।
यक्षान्सम्पूजयेत्ते च महावैश्रवणस्तथा ॥

माणिभद्रश्च सुशिराः पञ्चभिश्च विभण्डकः ।
विधृतः पूर्णभद्रोऽथ विरूपाक्षोऽष्टयक्षराट् ॥

सर्ववर्णकबलिभिः पूज्य सूत्रादिकं ददेत् ।
ततो नीलाचले सिद्धा मन्त्रज्ञो मन्त्रवित्तमः ॥

प्राज्ञोऽथ हंसराजश्च सिद्धपूजित एव च ।
सिद्धिमत्परमसिद्धस्तथा केसरभद्रकः ॥ 90

एतानष्टौ यजेत् सिद्धान् बलिभिस्सर्ववर्णकैः ।
दद्यात् प्रतिसरार्थं तु मेरौ नवग्रहान्वितम् ॥

नक्षत्रैर्वा विघ्नेशसंयुक्तान् मातृभिस्सह ।
ब्रह्मविष्णुमहादेवविशाखांश्चैव लोकपैः ॥

सहिताभिस्सुरस्त्रीभिर्दस्रादिभिः समन्वितम् ।
संयजेद् बलिभिस्सार्धं वर्णकैः क्रमशस्तथा ॥

दद्यात् प्रतिसरार्थं च तेषां नामान्यमूनि वै ।
आदित्यश्चैव सोमश्च अङ्गारकबुधौ ततः ॥

बृहस्पतिश्च शुक्रश्च अर्की च राहुकेतुकौ ।
एते नवग्रहाः प्रोक्ताः कृत्तिका वै ततः पराः ॥ 95

पूर्वाषाढोत्तराषाढाभिजिच्छ्रोणा च पश्चिमे ।
धनिष्ठा शतभिषक् चैव पूर्वाभाद्रपदा पुनः ॥

उत्तराभाद्रपादा च रेवत्यश्वयुजौ मतौ ।
भरण्या चोत्तरस्यां तु ब्राह्मो माहेश्वरी ततः ॥

वाराही वैष्णवी चैव कौमारी च ततो मताः ।
माहेन्द्री चैव चामुण्डो वीरभद्रगणाधिपौ ॥

स्कन्दो विष्णुर्महादेवो ब्रह्मा चैव विशाखकः ।
इन्द्रानलयमाश्चैव निर्ऋतिर्वरुणस्तथा ॥

वायुश्च धनदश्चैव ईशानश्चाष्टमो मतः ।
शची भाजीवनस्कन्दा धूम्रा मण्डलवर्तिनी ॥ 100

पूर्णा चैव सिनीवाली कुहू राकानुमत्यपि ।
आयता व्ययनो चैव प्रज्ञा मेना वला ततः ॥

एताः सुरस्त्रियः प्रोक्तास्संख्यया च चतुर्दश ।
नासत्यावश्विनौ दस्रौ क्रमशस्संयजेद्गुरुः ॥

प्रतिसरं च वस्त्रं च पताका भूषणं तथा ।
यज्ञोपवीतं सर्वेभ्यः प्रदद्याच्च गुरूत्तमः ॥

सार्ववर्णिकमित्युक्तं पञ्चवर्णहविस्ततः ।
ततः पश्चिमवेद्यां तु घृतेनापूरितान् घटान् ॥

ससूत्रान् सापिधानांश्च सवस्त्रान् पल्लवान्वितान् ।
अष्टाविंशतिमष्टौ वा अष्टोत्तरशतं तु वा ॥ 105

संस्थाप्य निश्चलं तस्य चतुष्कोणेषु षोडश ।
सूत्रवस्त्रादिसंयुक्तांस्तेषु द्रव्याणि विन्यसेत् ॥

ज्योतिष्टोमत्रयं पूर्वं अभया चापराजिता ।
जीवा विश्वेश्वरी धारा समाज्ञा विजया तथा ॥

सहा च सहदेवा च पूर्णकोशा शतावरी ।
अरिष्टा च शिवा भद्रा कुम्भेष्वेतानि विन्यसेत् ॥

ब्राह्मी क्षमायुक्ता चैव सर्वबीजानि काञ्चनम् ।
मङ्गलानि यथालाभं सर्वौषधिरसास्तथा ॥

रत्नानि सर्वगन्धांश्च बिल्वं च सविकङ्कतम् ।
प्रशस्तनाम्न्यश्चौषध्यो हिरण्यं मङ्गलानि च ॥ 110

आदायानडुहं चर्म जरया संभृतायुषः ।
प्रशस्तलक्षणं भूतं प्राचीनग्रीवमस्तकम् ॥

ततो भूपस्य यौपव्यचर्मलोहितमक्षतम् ।
सिंहस्यापि तृतीयं च व्याघ्रस्य च ततः परम् ॥

चत्वार्येतानि चर्माणि तस्यां वेद्यामुपस्तरेत् ।
पूजयेद्गन्धपुष्पाद्यैः मृत्युजिन्मन्त्रमुच्चरन् ॥

तदूर्ध्वे स्थापयेद्भद्रपीठसिंहासनस्थितम् ।
सौवर्णं राजतं ताम्रनिर्मितं क्षीरवृक्षजम् ॥

सपादसार्धहस्तोच्चं हस्तोत्सेधमितं तु वा ।
सार्वभौमस्य तच्छ्रेष्ठं मण्डलीकस्य कन्यसम् ॥ 115

अनन्तरचितं मध्यमेवं वा परिकल्पयेत् ।
श्रेष्ठमध्यादिभेदेन सर्वं वैकस्य संमतम् ॥

तदूर्ध्वे विन्यसेत्पुष्पं सौवर्णं तस्य मध्यमे ।
कृतस्नानं विलिप्ताङ्गं सर्वालंकारसंयुतम् ॥

निवेशयेन्नृपेन्द्रं तु पुरन्दरमुखं गुरुः ।
दैवज्ञं मन्त्रिसामन्तैः पुरोहितमुखैर्वृतम् ॥

वेदपुण्याहघोषैश्च नृत्तवाद्यसमन्वितम् ।
गेयमङ्गलशब्दैश्च शैवस्थापनपूर्वकैः ॥

अहतक्षौमवासोयुग् गुरुः पञ्चाङ्गभूषणः ।
कम्बलेन समाच्छाद्याभिषिञ्चेदुदङ्मुखः ॥ 120

आज्यं तेजःसमुद्दिष्टमाज्यं पापहरं परम् ।
आज्यं सुराणामाहार आज्ये लोकाः प्रतिष्ठिताः ॥

भौमान्तरिक्षं दिव्यं वा यत्ते कल्मषमागतम् ।
सर्वं तदाज्यसंस्पर्शात्प्रणाशमुपगच्छतु ॥

उद्धार्य कम्बलं न्यस्त्वा स्थापितैश्च घटाम्बुभिः ।
विविधैः फलपुष्पैश्च स्वादुभिश्च सुगन्धकैः ॥

अभिषिञ्चेन्नृपेन्द्रं तु मन्त्रेणानेन देशिकः ।
सुरास्त्वामभिषिञ्चन्तु ये च सिद्धाः पुरातनाः ॥

ब्रह्मा विष्णुश्च रुद्रश्च साध्याश्च मरुतां गणाः ।
आदित्या वसवो रुद्राश्चाश्विनौ च भिषग्वरौ ॥ 125

अदितिर्देवमाता च स्वाहा सन्धिस्सरस्वती ।
कीर्तिर्लक्ष्मीर्धृतिःश्रीश्च सिनीवाली कुहुस्तथा ॥

नक्षत्राणि मुहूर्ताश्च पक्षाहोरात्रसन्धयः ।
संवत्सरा दिनेशाश्च कलाः काष्ठाः क्षणा लवाः ॥

सर्वे त्वामभिषिञ्चन्तु कालस्यावयवाश्शुभाः ।
अदितिस्सुरसा चैव विनता कद्रुरेव च ॥

देवपत्न्यश्च याश्चोक्ता देवमातर एव च ।
सर्वास्त्वामभिषिञ्चन्तु शुभाश्चाप्सरसां गणाः ॥

वैमानिकास्सुरगणा मनवस्सागरैस्सह ।
सरितश्च महाभागाः किन्नराः पुरुषास्तथा ॥

वैखानसा महाभागा द्विजा वैहायसाश्च ये ।
सप्तर्षयस्सदाराश्च ध्रुवस्थानानि यानि च ॥ 130

मरीचिरत्रिः पुलहः पुलस्त्यः क्रतुरङ्गिराः ।
भृगुस्सनत्कुमारश्च सनकोऽथ सनन्दनः ॥



सनातनश्च दक्षश्च जैगीषव्योऽथ जाजलिः ।
एकतश्च द्वितश्चैव त्रितो जाबालिकाश्यपौ ॥

दुर्वासा दुर्विनीता च कण्वः कात्यायनस्तथा ।
मार्कण्डेयो दीर्घतमाश्शुनश्शेफो विदूरतः ॥

और्वः संवर्तकश्चैव च्यवनोऽत्रिः पराशरः ।
द्वैपायनो यवक्रीतो देवरातस्सहानुजः ॥ 135

एते चान्ये च बहवः पुण्यसंकीर्तनाश्शुभाः ।
तोयैस्त्वामभिषिञ्चन्तु सर्वोत्पातनिबर्हणैः ॥

एतैराथर्वणैरन्यै रुद्राध्यायेन वा गुरुः ।
महारौहिणकूश्माण्डैः कुबेरहृदयैस्सह ॥

जप्त्वा हिरण्यवर्णेति चापो हिष्ठेति मन्त्रतः ।
जप्त्वा शिवमघोरं वा मृत्युञ्जयमथापि वा ॥

अभिषिञ्चेत् क्षितीशं तु विरूक्ष्य स्नापयेत्ततः ।
कार्पासवस्त्रयुगलं दधानः क्षत्रियाधिपः ॥

ततः पुण्याहशब्दैश्च शङ्खतूर्यरवान्वितम् ।
आचम्याभ्यर्चयेद्देवान् स्वगुरुं ब्राह्मणानपि ॥ 140

ततोऽर्चयेद्ध्वजं शस्त्रं श्वेतच्छत्रं स्वकीयकम् ।
अन्योन्यं च तदङ्गानि पूजयेत्पूर्वमन्त्रतः ॥

परिवर्त्य वस्त्रयुगलं सर्वभूषणभूषितम् ।
सर्वालङ्कारसंयुक्तं होमवेदीं प्रविश्य च ॥

वृषस्य पृषदंशस्य रुरोश्च पृषतस्य च ।
सिंहस्य व्याघ्रसंज्ञस्य चर्माण्यास्तीर्य तत्र च ॥

कुण्डे वा स्थण्डिले वापि मुख्यस्थाने गुरूत्तमः ।
होमं कुर्यात् समिद्भिश्च सर्पिर्भिश्च शतं शतम् ॥

पलाशसमिधो मन्त्रो मृत्युजित्परमो मतः ।
होमान्ते प्राञ्जलिर्भूत्वा ब्रूयादेवं गुरूत्तमः ॥ 145

यान्तु देवगणास्सर्वे पूजामादाय पार्थिवात् ।
सिद्धिं दत्त्वा तु विपुलां पुनरागमनाय च ॥

तत्काले दक्षिणां दद्याद्गुरवे प्रीतिकारणम् ।
नृपेन्द्रो ब्राह्मणेभ्यश्च दद्याद्दानं विशेषतः ॥

ततो बन्धाद्विमुच्येत जनान्सर्वान्नराधिपः ।
प्रणम्य देवदेवेशं तस्मै ग्रामादिकाञ्चनम् ॥

दत्त्वा सन्तुष्टचित्तस्तु मकुटादिविभूषितः ।
ततो मातङ्गमारुह्य प्रविशेद्भवनं प्रति ॥

सर्वोत्पातविनाशार्थं सर्वरोगनिवृत्तये ।
सार्वभौमप्रसिद्ध्यर्थमायुरारोग्यसिद्धये ॥ 150

सर्वशत्रुविनाशार्थं विजयार्थं नृपस्य तु ।
पुण्याभिषेकं प्रत्यब्दं पुण्यस्थाने समाचरेत् ॥

इति उत्तरकामिकाख्ये महातन्त्रे
पुण्याभिषेकविधिरशीतितमः पटलः ॥

## ग्रहयज्ञविधिः

ग्रहयज्ञं प्रवक्ष्यामि ग्रहाणां प्रीतिकारणम् ।
सर्वदुःखं च सर्वेषां ग्रहचाराद्यतो भवेत् ॥

नवभागीकृते क्षेत्रे मण्डपादौ गृहेऽपि वा ।
पूजयित्वा तु गुहुयाद्देशिको दीक्षितैस्सह ॥

अर्कस्सोमः कुजस्सौम्यो जीवश्शुक्र शनैश्चरः ।
राहुकेतू नवैव स्युः पूजयेत् स्वस्वनामतः ॥

प्रणवादिनमोऽन्तेन मण्डले संयजेद्गुरुः ।
तत्र वृत्तं चतुष्कोणं त्रिकोणं बाणसन्निभम् ॥

दीर्घाश्रं पञ्चकोणं च चापाङ्गं शूर्पसन्निभम् ।
ध्वजाभं मण्डलं प्रोक्तं ग्रहाणां वर्ण उच्यते ॥

भास्कराङ्गारकौ रक्तौ श्वेतौ शुक्रनिशाकरौ ।
सोमपुत्रो गुरुश्चैव तावुभौ पीतकौ स्मृतौ ॥

कृष्णं शनैश्चर विद्याद् राहुकेतू तथैव च ।
ध्यात्वैवं पूजयेद्विद्वान् गन्धैः पुष्पैरनुक्रमात् ॥

सर्वेषां गुग्गुलुधूपस्तैलेनाथ घृतेन वा ।
दीपः प्रोक्तस्तु नैवेद्यं शाल्विसम्भवमुच्यते ॥

चर्वर्थमपि शाली स्याद्धोमे गव्यं घृतं मतम् ।
कुण्डे वा स्थण्डिले वापि पूजास्थानं प्रकल्पयेत् ॥

होमं कुर्यात्समित्सर्पिस्तिलैरेव समायुतम् ।
अर्कः पलाशः खदिरस्त्वपामार्गो यथाक्रमम् ॥

अश्वत्थोदुम्बरौ चैव शमी दूर्वा कुशस्समित् ।
पलाशः खदिरो वाथ स्वसमित् कुशसम्भवे ॥

क्षीरवृक्षसमुद्भूतावथवा तौ प्रशंसितौ ।
स्रुक्स्रुवौ लक्षणोपेतौ पलाशदलजावथ ॥ 12

होतॄणां दक्षिणां दद्यात् तदन्ते फलसिद्धये ।

इति उत्तरकामिकाख्ये महातन्त्रे

ग्रहयज्ञविधिरेकाशीतितमः पटलः ॥

---

## प्रतिसरविधिः

राज्ञां प्रतिसरं वक्ष्ये सर्वमङ्गलकर्मणि ।
निर्दिष्टदिवसात्पूर्वरात्रे कौतुकबन्धनम् ॥

विद्ध्याद्देशिकश्शुद्धः कृत्वा च सकलीकृतः ।
स्थण्डिलं शालिना कृत्वा तदूर्ध्वे स्थण्डिलं न्यसेत् ॥

श्वेततण्डुलसम्पूर्णं पुण्याहप्रोक्षणान्वितम् ।
वस्त्रसूत्रं च वलयमङ्गुलीयकमेव च ॥

कृत्वा प्रतिसरं स्वर्णपुष्पं हेममयं शुभम् ।
प्रक्षाल्यास्त्रेण चार्घ्येण तण्डुलोर्ध्वे विनिक्षिपेत् ॥

संपूर्णगन्धपुष्पाद्यैर्मन्त्रयेन्मनुभिः क्रमात् ।
ईशानेन शिरःपुष्पं वर्मणा ब्रह्मसूत्रकम् ॥

वलयं हृदयेनैव तद्वदेवाङ्गुलीयकम् ।
बहुरूपेण वा सर्वं मन्त्रयेद्देशिकोत्तमः ॥



कौतुकं हृदयेनैव तेनैव भसितं तथा ।
चन्दनेन विमिश्रं तदैशान्यां स्थापयेद्गुरुः ॥

मध्यादिसोमपर्यन्तं पुष्पाद्यं विनिवेशयेत् ।
ताम्बूलं दापयेद्वाथ पुरुषाख्यमनुं स्मरन् ॥

दूर्वाग्रं केवलं स्वर्णनिर्मितं राजतं तु वा ।
आग्नेये नैर्ऋते न्यस्त्वा हृदयेनाभिमन्त्रयेत् ॥

पटैराच्छादयित्वा तु नगरीं भ्रामयेत्ततः ।
सर्वालंकारसंयुक्तं मातङ्गोपरि संस्थितम् ॥

मुहूर्ते समनुप्राप्ते गुरुर्दैवज्ञसंयुतः ।
पुरोहितमुखैर्विप्रैरन्वितस्सर्वमङ्गलैः ॥

कृतशौचं विलिप्ताङ्गं क्षौमवस्त्रोत्तरीयकम् ।
सर्वाभरणसंयुक्तं सर्वालङ्कारसंयुतम् ॥

सिंहासनादौ नृपतिं पूर्ववक्त्रं निवेशयेत् ।
पुण्याहप्रोक्षणं कृत्वा पुष्पाद्यं पूर्वमन्त्रतः ॥

दत्त्वा नृपस्य सर्वं तु मृत्युजिन्मन्त्रमुच्चरन् ।
बध्वा दक्षिणहस्ते तु कौतुकं सौम्यदिङ्मुखः ॥

सर्वात्मानं समुच्चार्य भस्म दत्त्वा गुरूत्तमः ।
ईशानाद्यैर्यथान्यायमथवा परिकल्पयेत् ॥

क्षुद्रसामकपूर्वं तु पठित्वादौ समुच्चरन् ।
नालिकेरफलान्यत्र लाजपुष्पादिभिस्सह ॥

समन्तात् स्थापयित्वा तु कुर्यात्प्रतिसरं गुरुः ।
देशिकं पूजयेत्कर्ता दैवज्ञं च पुरोहितम् ॥

ब्राह्मणानपि सर्वांश्च ततो मङ्गलवाचकैः ।
अनेन विधिना कुर्याद्देवदेवस्य शूलिनः ॥

अन्येषामपि देवानां चतुर्णामपि वर्णिनाम् ।

इति उत्तरकामिकाख्ये महातन्त्रे प्रतिसरविधिः

द्व्यशीतितमः पटलः ॥

---

## तुलारोहषोडशदानविधिः

वक्ष्ये षोडशदानानि सर्वकामार्थसिद्धये ।
ब्राह्मणादिचतुर्णां तु भूमीन्द्राणां विशेषतः ॥

ग्रहणादिषु कालेषु शुभे देशे विशेषतः ।
हस्तविंशतिमानेन अष्टांशेन द्विरष्टभिः ॥

कूटं वा मण्टपं वाथ तन्मध्ये वेदिकां नयेत् ।
नवषट्सप्तहस्तेन द्विहस्तायर्धहस्ततः ॥

विस्तारेणोच्छ्रयेणापि द्वादशस्तम्भसंयुतम् ।
तद्बाह्ये नव कुण्डानि चतुरश्राणि तानि च ॥

चतुर्द्वारसमायुक्तं चतुस्तोरणभूषितम् ।
दर्भमालासमायुक्तं दिग्ध्वजैश्च समन्वितम् ॥

अष्टमङ्गलसंयुक्तं वितानेनोपशोभितम् ।
सामान्यमेतदाख्यातं तुलाभारादिके द्विजाः ॥

बिल्वाश्वत्थपलाशास्स्युर्यज्ञवृक्षाश्च ये मताः ।
पनसाम्रमधूद्भूताः खादिरो वा प्रशस्यते ॥

एकदारुमयस्सर्वैस्त्वथवा मिश्र इष्यते ।
सप्तषड्ढस्तैश्च पार्श्वस्तम्भोच्छ्रयौ मतौ ॥

उत्तरस्तु तदूर्ध्वे स्यात् षडष्टायामसंयुतम् ।
अङ्गुलत्रयहान्या तु नवधा मानमीरितम् ॥

पार्श्वस्तम्भविशालेन विस्तारोत्सेधसंयुतम् ।
पादाधिकस्त्रिपादो वा उत्सेधः परिकीर्तितः ॥

द्विहस्तं वा त्रिहस्तं वा तयोरन्तरमानकम् ।
तुलादण्डस्य दीर्घं स्याद्विष्कम्भस्तु दशाङ्गुलः ॥

अङ्गुलेनाधिको वापि हीनो वा विस्तरो भवेत् ।
षट्त्रिंशन्मात्रसंयुक्तमायाम वाथ दैर्घ्यकम् ॥

अष्टाङ्गुलेन विस्तारस्त्वथ पञ्चयवान्वितः ।
षट्त्रिंशन्मात्रनाहस्तु मध्यमे तु विधीयते ॥

अग्रे मूले च मध्ये वा हेमपट्टैर्विभूषयेत् ।
तुलादण्डे प्रकर्तव्यमवलम्बनकत्रयम् ॥

ताम्रेणाथ प्रकर्तव्यमायसेनाथवा भवेत् ।
मध्ये चोर्ध्वे मुखं कार्यं त्ववलम्बस्तुशामनः ॥

जिह्वामेकां तुलामध्ये तोरणस्य प्रकल्पयेत् ।
उत्तरस्य तु मध्ये तु अयश्शङ्कुं दृढं नयेत् ॥

शङ्कुं सुषिरसंपन्नं वलयेन समन्वितम् ।
सप्ताष्टषट्शतेनाथ ताम्रेणाधारकौ प्रभोः ॥

एकाङ्गुलप्रमाणाढ्यौ वेदरन्ध्रसमन्वितौ ।
चतुष्कुण्डलसंयुक्तौ हस्तप्रमाणसंमितौ ॥

प्रादेशं वा चतुष्कं च षण्मात्रं स्यात् स्थलोपरि ।
यथा तथाविधेयौ तौ प्राक्पश्चिमगतावुभौ ॥

स्तम्भद्वयशिलामानमुत्तरद्वारसंमितम् ।
कुम्भमध्यादिसंयुक्तावथवा परिकल्पयेत् ॥

खात्वा पुरुषमात्रं तु न्यस्त्वा पादशिलां समाम् ।
तदूर्ध्वे स्थापयित्वादौ वालुकाभिर्दृढं नयेत् ॥

एवं सर्वं समापाद्य शिल्पिमोक्षावसानके ।
पुण्याहं वाचयित्वा तु मण्डपे समलंकृते ॥

मङ्गलाङ्कुरसंयुक्ते नानाफलसमन्विते ।
मण्डलं कारयेद्धीमान् सर्वतोभद्रसंज्ञकम् ॥

वज्रादिशूलपर्यन्तं मण्डपस्याष्टदिक्षु च ।
शूलस्य वामदेशे तु चक्रं पद्मं तु दक्षिणे ॥

मध्यमे देवदेवेशं वामे गौरीसमायुतम् ।
संपूज्य गन्धपुष्पाद्यैर्ब्रह्माणं दक्षिणे यजेत् ॥

वामे संपूजयेद्विष्णुं समन्ताल्लोकपान्न्यसेत् ।
सूर्यं मध्येऽग्निदेशे तु भास्करं नैरृतेऽथवा ॥

भानुं वायौ रविं चैशे दिवाकरमथार्चयेत् ।
उषां प्रभां तथा प्रज्ञां सन्ध्यां सावित्रिमर्चयेत् ॥

मध्यादीशानपर्यन्तं गन्धपुष्पादिनार्चयेत् ।
विस्तारां मध्यमे देशे सुतारां वह्निगोचरे ॥

बोधनीं वायुदेशे तु शार्वे स्वाप्यायनीं यजेत् ।
रविं च मध्यमे देशे पूजयेद्देशिकोत्तमः ॥

प्रभूतं विमलं सारमाराध्यं पूर्वदेशतः ।
उत्तरान्तं च संपूज्य सुखं मध्ये प्रपूजयेत् ॥



दीप्ताद्याः पूजयेच्छक्तीः पूर्वान्मध्यान्तमीरिताः ।
सोमादिकेतुपर्यन्तं महानष्टौ प्रपूजयेत् ॥

ततो होमः प्रकर्तव्यस्तद्विधानमिहोच्यते ।
प्रधानहोमे देवेशं लोकपानष्टदिक्षु च ॥

गायत्र्या होमयेन्मध्ये दिक्षु लोकेशमन्त्रतः ।
स्वाहान्तं प्रणवोपेतं स्वस्वनाम्ना द्विजोत्तमाः ॥

शिवाग्निं स्वस्वशास्त्रोक्तं सम्पाद्याग्निमुखान्वितम् ।
लोकेशसहितं देवं समावाह्य समर्चयेत् ॥

नाडीसन्धानसंयुक्तं जयाद्यन्तसमन्वितम् ।
समिधाज्यघृतोपेतं सहस्रं वा तदर्धकम् ॥

शतमष्टोत्तरं वाथ होतव्यं स्वस्वदिग्गतैः ।
शुद्धपायसमुद्गान्नैश्चरुभिस्त्रिभिरन्वितम् ॥

क्षीराक्तदूर्वया होमं पञ्चविंशतिसंख्यया ।
मृत्युञ्जयं समुच्चार्य वास्तुहोममथाचरेत् ॥

बहुरूपेण कर्तव्यं प्रायश्चित्तं शतं शतम् ।
मण्डले पूजितान्सर्वान् देवानभ्यर्च्य होमयेत् ॥

पूर्णां कृत्वा पुरेशानां क्रियामत्र समाचरेत् ।
सहस्रकलशैश्चैव संस्नाप्य परमेश्वरम् ॥

महापूजा च कर्तव्या प्रभूतहविषान्विता ।
पञ्चामृतैः पञ्चगव्यैः क्षीराद्यैः स्नपनं तु वा ॥



ब्राह्मणान् भोजयेत्पश्चात् तुलारोहणमाचरेत् ।
आहूय नृपतिं स्नातं शुक्लवस्त्रानुलेपनम् ॥

सर्वाभरणसंयुक्तं शुक्लगन्धविभूषितम् ।
कृतप्रतिसरं कान्तं खड्गखेटकधारिणम् ॥

आहूय शिवतोयेन प्रोक्षयेच्छिवमुख्यान् ।
पुण्याहप्रोक्षणं पूर्वं भूतशुद्धिपुरस्सरम् ॥

सकलीकरणं कृत्वा रोपयेन्मन्त्रमुख्यान् ।
रुद्रगायत्रिसंज्ञं तु यजमानस्तदा जपेत् ॥

घटिकार्धं तदर्धं वा तत्रैवासनमाचरेत् ।
पूर्वदिक्स्थानमध्यस्थपश्चिमाभिमुखो यथा ॥

आलोक्य काञ्चनं तत्स्थं कूर्चहस्तो हरं स्मरन् ।
वेदातोद्यसमायुक्तं नृत्तगीतसमन्वितम् ।

जयमङ्गलसंयुक्तं तत्सुवर्णसमं यदि ।
स्वकायेन तदा येन तुलारोहः कृतो भवेत् ॥

शतपर्णं तदर्धं वा श्रेष्ठाद्यनधिकं वरम् ।
देवेन्द्रं वाथ कर्तारं तुलारोहणमाचरेत् ॥

देशिकं पूजयेत्पश्चाद्वस्त्रकाञ्चनभूषणैः ।
होतृंश्च दक्षिणां तेभ्यः प्रदद्याद्भक्तिपूर्वकम् ॥

शतनिष्कं तदर्धं वा तदर्धं काञ्चनस्य तु ।
ऋत्विग्भ्यश्चैव सर्वेभ्यो दशनिष्काः प्रकीर्तिताः ॥

यागोपयुक्तं यद्द्रव्यं देशिकाय प्रदापयेत् ।
शिवार्चकस्य पूजा च प्राग्वदेव समीरिता ॥

तस्यापि दक्षिणा शास्त्रे पञ्चाशन्निष्कसंमिता ।
तुलाधिरोहितं वित्तं ब्राह्मणेभ्यः प्रदापयेत् ॥

मङ्गकेभ्यो विशेषेण तदर्धं वा प्रकल्पयेत् ।
देशिकेभ्यो विशेषेण दद्याच्छ्रद्धासमन्वितः ॥

तत्काले विसृजेद् बद्धान् कारागृहनिवेशितान् ।
यत्र कर्मकरास्तेषां पृथङ्निष्कं प्रदापयेत् ॥

एतत् सामान्यमुद्दिष्टं दानानां द्विजसत्तमाः ।

इति उत्तरकामिकाख्ये महातन्त्रे

तुलारोहषोडशदानविधिस्त्र्यशीतितमः पटलः ॥

## हिरण्यगर्भदानविधिः

हिरण्यगर्भं वक्ष्यामि दानं सर्वार्थसिद्धिदम् ।
कुर्यात् सहस्रनिष्केण त्वधःपात्रं हिरण्मयः ॥

तदर्धेनोर्ध्वपात्रं तु सहस्रेण द्वयं तु वा ।
त्रिपादं वार्धमानं वा सपादं सार्धमेव वा ॥

द्विगुणं वा प्रकर्तव्यं यथालाभं तु वा भवेत् ।
वृक्षवं वाथ तत्कृत्वा स्वर्णपट्टैश्च वेष्टयेत् ॥

तिर्यगङ्गुलं तु मूलं स्यादेकैकाङ्गुलवर्धनात् ।
एकोनत्रिंशमात्रं तु मूलविस्तार इष्यते ॥

विकारांशं तु तत्कृत्वा एकैकांशविवर्धनात् ।
अर्धाधिकं तु विस्ताराद्वास्यविस्तार इष्यते ॥

एकपञ्चाशदारभ्य व्योममात्रविवर्धनात् ।
पञ्चसप्ततिमात्रान्तं तदुत्सेधः प्रकीर्तितः ॥

अथ पादसमायुक्तो भित्तेः पादस्य निर्गमः ।
त्रिमात्राद्यवमात्रान्तं निर्गमे मानमिष्यते ॥

पादुकोत्सेधमानं तु तदर्धं पादमेव वा ।
त्रिपादं वा समं वापि फलकाद्यनमिष्यते ॥

पादुकोपरि दीर्घं वा विस्तारो भित्तिबाह्यतः ।
मायान्ता वा प्रकृत्यन्ता फेलाद्याधिरिहागमे ॥

शिवान्तमूर्ध्वपात्रं स्यान्मध्ये पुरुषरूपवत् ।
आत्मानं भावयेद्विद्वांस्तद्विधानमिहोच्यते ॥

स्थानं च वेदिकोपेतं मण्डलेन समन्वितम् ।
कृत्वा तु पूर्ववत्तस्य मध्ये शालिं विनिक्षिपेत् ॥

तदूर्ध्वे विन्यसेत् फेलां नववस्त्रैर्विवेष्टिताम् ।
नीरन्ध्रं माषकल्पेन कृत्वा गव्येन पूरयेत् ॥

प्रत्येकं पञ्चभिर्वाथ तद्रूपपञ्चामृतैरपि ।
ब्रह्मभिः पूरयेद्विद्वानीशानाद्यैर्गुरूत्तमः ॥

गायत्र्या पूजयेत् पश्चाद्यया शिवमयं भवेत् ।
पूर्ववत् कारयेत् पूजां सामान्यं द्विजसत्तमाः ॥



प्राङ्मुखः प्रविशेत् कर्ता गौरीगायत्रिकां जपेत् ।
छादयेच्च विधानेन गुरुश्शिवमनुं स्मरन् ॥

तदा षोडशसंस्कारान् गर्भाधानादिकान्गुरुः ।
कुर्यादनन्तरं वाथ तद्विशेषस्तु कथ्यते ॥

कर्तारं भार्यया युक्तं सर्वालङ्कारशोभितम् ।
आनीय कुर्यात्तस्यैव गर्भाधानादिकाः क्रियाः ॥

भार्यादक्षपुटे दूर्वारससेचनमाचरेत् ।
एकविंशतिसंख्यातानुदुम्बरफलान्वितान् ॥

कुशानानीय शक्त्याथ कुर्यात् सीमन्तकर्म च ।
त्रिंशन्निष्कमितां कन्यां सर्वालङ्कारशोभिताम् ॥

भार्यापार्श्वे विनिक्षिप्य शिवादिभ्यो निवेदयेत् ।
भोजयेत्पायसैर्विप्रानन्नप्राशनकर्मणि ॥

इत्येवमन्त्रमुच्चार्य सर्वकर्म समाचरेत् ।
अनुक्तमत्र यत्कर्म तुलारोहवदाचरेत् ॥

एवं यः कुरुते मर्त्यः सोऽनन्तफलमश्नुते ।

इति उत्तरकामिकाख्ये महातन्त्रे

हिरण्यगर्भदानविधिश्चतुरशीतितमः पटलः ॥

## तिलपर्वतदानविधिः

तिलपर्वतदानं तु वक्ष्यते द्विजसत्तमाः ।
पूर्ववन्मण्डपं कृत्वा वेदिकारहितं यथा ॥

बाह्यवीथ्यां च कुण्डानि प्रागुक्तविधिनानयेत् ।
पञ्चगव्येन संप्रोक्ष्य मण्डपं मध्यकल्पितम् ॥

संछाद्याहतवस्त्रैश्च द्रोणपुष्पं विकीर्य च ।
पुण्याहप्रोक्षणं दण्डं शतमात्रसमुच्छ्रितम् ॥

वेष्ट्यादिकल्पितं तत्र विन्यसेद्देशिकोत्तमः ।
तिलांश्च निक्षिपेत्तत्र व्योमव्यापिमनुस्मरन् ॥

दण्डात् प्रादेशमात्रं वा यवाङ्गुलमथापि वा ।
कर्तव्यमधिकं चाद्रिश्चतुरङ्गुलमेव वा ॥

दण्डमानसमं वाथ हीनं नैव समाचरेत् ।
वस्त्रैश्च वेष्टयेत् सर्वांस्तिलान् सद्यादिमन्त्रतः ॥

देवं संकल्पयित्वा तु पूजयेत्तु विशेषतः ।
निक्षिपेत् पर्वतप्रान्ते मूर्तिपान् मूर्तिसंयुतान् ॥

शर्वादीन् क्ष्मादिपूर्वांश्च निष्कत्रयविनिर्मितान् ।
तत्रस्थमर्चयेद्देवं तिलपर्वतमध्यगम् ॥

अर्चयेच्च विधानज्ञो यजमानेन देशिकः ।
दर्शयेत् तिलमध्यस्थं देवदेवमुमापतिम् ॥

अयं हि देवदेवेशस्सर्वेषां वृषभध्वजः ।
अस्यार्चने कृते सर्वं ध्रुवं भवति कल्पनम् ॥

अत्रानुक्तं तु यत् किंचिदर्चनं होममेव वा ।
स्नपनं देवदेवस्य सहस्रकलशादिभिः ॥

प्रागुक्तविधिना सर्वं तुलारोहवदाचरेत् ।
विसृज्य देवदेवेशं शिवाय शिवधर्मिणे ॥

दद्याच्छिलनगं कर्ता जलदानपुरस्सरम् ।
असारपरवरं दानं नास्तीह भुवनत्रये ॥

अथवान्यप्रकारेण चाल्पद्रव्यं महाफलम् ।
सर्वदा सर्वकाले च कर्तव्यमिह कथ्यते ॥

गोमयालिप्तदेशोर्ध्वे वस्त्राण्यास्तीर्य देशिकः ।
तिलं भारत्रयं तत्र निक्षिपेद्दशधीजतः ॥ 15

कर्णिकाकेसरोपेतं पद्ममष्टदलान्वितम् ।
दशनिष्केण कृत्वाथ तदूर्ध्वेनार्धमानतः ॥

तन्मध्ये विन्यसेत्पद्मं तन्मध्ये पूजयेच्छिवम् ।
तदुत्तरे तदर्धेन कारयेत्तु मनोन्मनीम् ॥

अष्टौ वामादिशक्तीश्च कृत्वा निष्कत्रयेण तु ।
अष्टौ विद्येश्वरान् बाह्ये तद्वत्स्वर्णमयेन वा ॥

कृत्वा संपूज्य विधिवत् तत्सर्वं तिलसंयुतम् ।
दापयेच्छिवभक्तेभ्यस्तत्कर्ता देशिकोत्तमः ॥ 19

इति उत्तरकामिकाख्ये महातन्त्रे

तिलपर्वतदानविधिः पञ्चाशीतितमः पटलः ॥

## सुवर्णभूमिदानविधिः

सौवर्णभूमिदानं तु वक्ष्येऽहं द्विजसत्तमाः ।
काञ्चनेन सहस्रेण चतुरश्रादिमेदिनी ॥

एकहस्तप्रमाणेन सप्तद्वीपसमन्विता ।
समुद्रपर्वतोपेता सर्वतीर्थसमन्विता ॥

मध्ये मेरुसमायुक्ता कर्तव्या शोभना यथा ।
अनेकमुनिसंयुक्तां नवखण्डां तु भावयेत् ॥

पूर्ववद्देवपूजां च होमं चैव विशेषतः ।
मेर्वादीन् पूजयेत् स्वस्वबीजेनैव गुरूत्तमः ॥

सहस्रकलशाद्यैश्च स्नापयेत्परमेश्वरम् ।
पूर्ववत्तस्य पूजा च विधेया द्विजसत्तमाः ॥ 5

शिवादिभ्यो प्रदातव्या मेदिनी स्वर्णनिर्मिता ॥

इति उत्तरकामिकाख्ये महातन्त्रे

सुवर्णभूमिदानविधिः षडशीतितमः पटलः ॥

—:*:—



## कल्पपादपदानविधिः

कल्पपादपदानं तु वक्ष्येऽहं द्विजसत्तमाः ।
पादपं शतनिष्केण सुवर्णेन समाचरेत् ॥

बहुशाखासमोपेतं पत्रपुष्पसमन्वितम् ।
नानाफलसमायुक्तं सर्वशोभासमन्वितम् ॥

शाखासु बहुधा कुर्यान्मुक्तादामप्रलम्बनम् ।
छदनानि विचित्राणि कुर्यान्मरतकैर्द्विजाः ॥

कारयेत् पल्लवानीह प्रवालैश्च विशेषतः ।
फलानि पद्मरागैश्च विविधानि समाचरेत् ॥

नीलेन दण्डमूलं तु स्कन्धं वज्रेण कारयेत् ।
वैडूर्येण प्रकर्तव्यं द्रुमाग्रं पुष्परागतः ॥ 5

मस्तकं च प्रकर्तव्यं गोमेदकमयं यथा ।
स्कन्धं वै कारयेद्विद्वान् सूर्यकान्तेन सुव्रताः ॥

इन्दुकान्तेन वा वेदिं स्फटिकेन द्रुमस्य तु ।
वितस्तिमात्रमायामं वृक्षस्य परिकीर्तितम् ॥

शाखाष्टकस्य मानं च विस्तारं चोर्ध्वतस्तथा ।
स्थापयेद् वृक्षमूले तु लिङ्गं लोकपसंवृतम् ॥

मण्टपं वेदिकोपेतं मण्डलेन समन्वितम् ।
पूर्ववत् वह्निना कृत्वा तन्मध्ये स्थाप्य पादपम् ॥

लोकपावृतिसंयुक्तमीशानं पूजयेद्गुरुः ।
ईश्वराय द्रुमं दद्यात् तदीयेभ्यो द्विजोत्तमाः ॥ 10

अत्रानुक्तं तु यत्सर्वं तुलाभारवदाचरेत् ।

इति उत्तरकामिकाख्ये महातन्त्रे

कल्पपादपदानविधिः सप्ताशीतितमः पटलः ॥

## गणेशदानविधिः

गणेशदानं वक्ष्यामि सर्वपापप्रणाशनम् ।
पूर्ववन्मण्टपं कुर्याद्वेदिकामण्डलान्वितम् ॥

तन्मध्यमे यजेद्देवं लोकपालसमावृतम् ।
तद्बाह्ये पूजयेदष्टौ विघ्नेशानष्टदिक्षु च ॥

सर्वे ते च सुवर्णेन निर्मिताश्च पृथक् पृथक् ।
तृतीयावरणोपेतान् गन्धपुष्पादिभिर्गुरुः ॥

प्रधाने कुडुमादीशं विघ्नेशानष्टदिक्षु च ।
ईशानादिषु संस्थाप्य सप्तविघ्नान् समर्चयेत् ॥

उत्तरे पूजयेत् कन्यां गन्धपुष्पादिभिर्गुरुः ।
तेभ्यः प्रदद्याद्विघ्नेशान् स्वस्वमन्त्रैरनुक्रमात् ॥ 5

अत्रानुक्तं तु यत् किंचित् तुलारोहवदाचरेत् ।

इति उत्तरकामिकाख्ये महातन्त्रे

गणेशदानविधिरष्टाशीतितमः पटलः ॥

## हेमधेनुदानविधिः

हेमधेनुप्रदानं तु वक्ष्ये संक्षेपतः क्रमात् ।
सर्वपापहरं सर्वभयदुर्भिक्षनाशनम् ॥

काञ्चनेन सहस्रेण तदर्धेनाथवा पुनः ।
तस्याप्यर्धेन वा कुर्याच्छतनिष्केण वा द्विजाः ॥

गोरूपं कारयेद्विद्वान् सर्वलक्षणसंयुतम् ।
पद्मरागं तु शृङ्गे स्यात् खुराग्रे वज्रमिष्यते ॥

भ्रूमध्ये मौक्तिकं विद्याद्वैडूर्यं पुच्छदेशके ।
पुष्यरागं तु दन्तार्थे कल्पयेत् कल्पवित्तमः ॥

गोरूपमेवं कृत्वा तु दशांशेनैव तस्य च ।
वत्सं तद्वत् समापाद्य पूर्ववन्मण्टपं नयेत् ॥ 5

वेदिकामण्डलोपेतं तन्मध्ये विन्यसेत्पशुम् ।
सवत्सां वस्त्रयुग्मेन वेष्टयेद्देशिकोत्तमः ॥

पूजयेद्गन्धपुष्पाद्यैस्तद्गायत्र्या द्विजोत्तमाः ।
अर्चनं पूर्ववत्कुर्याद्धोमं चैव विशेषतः ॥

अथैकाग्निविधानं वा समिदाज्यहविष्ययुक् ।
क्षीराद्यैः पूजयेद्देवं सहस्रकलशादिभिः ॥

त्रिंशन्निष्कोऽथवा ज्ञेयो गुरोरेकाग्निकल्पने ।
अनुक्तं यद्भवेत् किञ्चित्तुलारोहवदाचरेत् ॥ 9

इति उत्तरकामिकाख्ये महातन्त्रे
हेमधेनुदानविधिरेकोननवतितमः पटलः ॥

---

## लक्ष्मीदानविधिः

महदैश्वर्यसिद्ध्यर्थं लक्ष्मीदानमिहोच्यते ।
काञ्चनेन सहस्रेण तदर्धेन तदर्धतः ॥

तदर्धेनाथवा कुर्याच्छ्रीदेवीं लक्षणान्विताम् ।
अष्टोत्तरशतेनाथ निष्कैर्वैनां प्रकल्पयेत् ॥

पूर्ववन्मण्डपं कृत्वा वेदिकामण्डलान्वितम् ।
मण्डले विन्यसेल्लक्ष्मीं विष्णोर्वामे यथा भवेत् ॥

श्रीमन्त्रेण यजेल्लक्ष्मीं श्रीसूक्तेनाथवार्चयेत् ।
विष्णुं च विष्णुगायत्र्या गन्धपुष्पादिनार्चयेत् ॥

पूजयेच्छिवपूजां च होमं चैव विशेषतः ।
एकहोमं तु वा कुर्यात् प्रागुक्तविधिना गुरुः ॥ 5

स्नपनं देवदेवस्य सहस्रकलशादिभिः ।
पूर्ववद्विधिना कुर्यादनुक्तमिह यद्भवेत् ॥

इति उत्तरकामिकाख्ये महातन्त्रे
लक्ष्मीदानविधिर्नवतितमः पटलः ॥

---



## तिलधेनुदानविधिः

तिलधेनुविधिं वक्ष्ये सर्वकामार्थसाधनम् ।
पूर्ववन्मण्डपं कुर्याद्वेदिकामण्डलान्वितम् ॥

तस्याग्रे कारयेद्विद्वान् पद्मं तिलमयं शुभम् ।
अष्टद्रोणेन कर्तव्यं यद्वा भारेण कारयेत् ॥

वस्त्रैराच्छाद्य तन्मध्ये स्वर्णपद्मं विनिक्षिपेत् ।
त्रिंशन्निष्केण चार्धेन तदर्धेनाथवा भवेत् ॥

पञ्चनिष्केण वा कुर्यात् कर्णिकानाळशोभितम् ।
तस्यैवोत्तरदिग्भागे ब्राह्मणान् रुद्रसंख्यया ॥

रुद्रानेकादशान् स्मृत्वा समावाह्य समर्चयेत् ।
विप्रान् द्वादश पूर्वे तु द्वादशादित्यमन्त्रतः ॥ 5

दक्षिणे त्वष्टविप्रेशान् बुधान् विप्रान् समर्चयेत् ।
षोडशैव तु गन्धाद्यैश्चतुर्दिक्षु च भावयेत् ॥

अर्चयित्वाथ तन्मन्त्रैर्वस्त्रं प्रावरणानि च ।
पञ्चाङ्गभूषणोपेतांस्त्वास्तीर्य च तदग्रके ॥

प्रत्येकं नववस्त्रं तु तस्मिन् खारिप्रमाणतः ।
तिलान्निक्षिप्य कांस्ये तु पात्रे नवफलेन तु ॥

इक्षुखण्डं च दातव्यं गां च तेभ्यः क्रमेण तु ।
हेमशृङ्गामरोगां तु दद्याद्रौप्यखुरामथ ॥

प्रतिशृङ्गं तु निष्कं स्यात् खुरं तद्द्विगुणेन च ।
पूर्ववन्मण्टपं कुर्याद्वेदिकामण्डलान्वितम् ॥ 10

तद्वत् पूजा च होमं च स्नपनाद्यं तथव च ।
केवलं रुद्रदानं वा सूर्यदानमथापि वा ॥

मूर्तिविप्रेशदानं वा यथावृद्धि प्रकल्पयेत् ।
पञ्चाङ्गभूषणं पञ्चनिष्केणात्र प्रकल्पयेत् ॥

दक्षिणां पूर्ववद्दद्यादनुक्तं पूर्ववद्भवेत् ।

इति उत्तरकामिकाख्ये महातन्त्रे
तिलधेनुदानविधिरेकनवतितमः पटलः ॥

---

## सहस्रगोदानविधिः

गवां सहस्रसंख्यानां दानं वक्ष्यामि सिद्धये ।
सवत्सास्सगुणा एव संग्राह्या गुणवत्तराः ॥

अष्टौ संपूज्य शृङ्गेषु प्रतिशृङ्गं तु निष्कतः ।
शृङ्गं कृत्वा तु बध्नीयाद् राजतं खुरमेव वा ॥

कण्ठे निष्केण पट्टं च बध्वा दद्याच्चूर्णं ततः ।
मण्टपं वेदिकोपेतं मण्डलेन समन्वितम् ॥

पूर्ववच्छिवपूजा च होमश्चात्र विधीयताम् ।
स्नपनं च शिवस्याथ सहस्रकलशादिभिः ॥

शिवाय शिवविप्रेभ्यो दद्याद् गां दक्षिणायुताम् ।
दशनिष्कं तदर्धं वा तदर्धं निष्कमेव वा ॥ 5

दानकाले पठेत् स्तोत्रमिदं कर्ता तदुच्यते ।
गावो ममाग्रतो नित्यं गावः पृष्ठत एव मे ॥

गावो मे हृदयं नित्यं गवां मध्ये वसाम्यहम् ।
अनुक्तमत्र यत्कर्म तुलाभारवशान्नयेत् ॥

इति उत्तरकामिकाख्ये महातन्त्रे
सहस्रगोदानविधिर्द्विनवतितमः पटलः ॥

---

## हिरण्याश्वदानविधिः

हिरण्याश्वप्रदानं तु विजयार्थमिहोच्यते ।
अयुतस्याश्वमेधस्य फलाच्छ्रेष्ठमिदं मतम् ॥

अष्टोत्तरसहस्रेण तदर्धेनार्धमानतः ।
अष्टोत्तरशतेनाथ कृत्वाश्वं लक्षणान्वितम् ॥

पञ्चकल्याणचित्राङ्गं रजतेन तु कारयेत् ।
सर्वालंकारसंयुक्तं कलाधैश्च समन्वितम् ॥

मण्टपं पूर्ववत् कृत्वा वेदिकामण्डलान्वितम् ।
तन्मध्ये विन्यसेद्वाजिमुख्यैः श्रवसनामतः ॥

गन्धादिभिस्समभ्यर्च्य विप्रेभ्यो विनिवेदयेत् ।
सुरेन्द्रबुद्ध्या संपूज्य पञ्चनिष्कं प्रदाय च ॥

दीनान्धकृपणानाथांस्तोषयेद्भोजनादिभिः ।
मण्डलाभ्यर्चनं होमं कलशस्नपनं तथा ॥

दक्षिणां देशिकादीनां तुलाभारवदाचरेत् ॥

इति उत्तरकामिकाख्ये महातन्त्रे
हिरण्याश्वदानविधिस्त्रिनवतितमः पटलः ॥

## कन्यादानविधिः

सर्वदानोत्तमं वक्ष्ये कन्यादानं द्विजोत्तमाः ।
सर्वलक्षणसम्पन्नां कन्यां दोषविवर्जिताम् ॥

विभिन्नगोत्रप्रभवामनुकूलदिनोद्भवाम् ।
दत्त्वा धनादिकं पित्रोस्तत्संवादपुरस्सरम् ॥

उभयोश्चित्तमालोक्य पुत्रीकृत्य च तां पुनः ।
संस्नाप्य गन्धमालाभिर्भूषणैर्वस्त्रसंयुतैः ॥

संभूष्य कन्यकां दद्याद्यागाय विधिनामुना ।
पूर्ववन्मण्टपं कुर्याद्वेदिकामण्डलान्वितम् ॥

तत्र संपूज्य देवेशं कुर्याद्धोमं च पूर्ववत् ।
नैमित्तिकोदितं शान्तं शिवभक्तिसमन्वितम् ॥

संपूज्येश्वरबुद्ध्या च गन्धपुष्पस्रगादिभिः ।
पश्चाद्भूषणैश्चैव वासोभूमिधनान्वितम् ॥

महोपकरणोपेतं दासीदासमनुत्तमम् ।
दद्याद्वराय संस्मृत्य शिवं श्रद्धापुरस्सरम् ॥

एवं यः कारयेद्दानं कन्यायास्सुखमेधते ।
कन्यारोमाणि यावन्ति तावद्वर्षशतं द्विजाः ॥

इति उत्तरकामिकाख्ये महातन्त्रे
कन्यादानविधिश्चतुर्नवतितमः पटलः ॥

—:*:—



## हिरण्योक्षप्रदानविधिः

हिरण्योक्षप्रदानं तु संक्षेपेणाधुनोच्यते ।
काञ्चनेन सहस्रेण कुर्यान्निष्केण वार्धतः ॥

तदर्धेनाथवा कुर्यात् तस्याप्यर्धेन वार्धतः ।
वृषं सलक्षणं कुर्यादष्टोत्तरशतेन वा ॥

स्फटिकेनार्धचन्द्राभं ललाटे राजतं खुरम् ।
कर्णे च पद्मरागेण गोमेदेन ककुद्भवेत् ॥

घण्टामालां तु कण्ठे तु रत्नचित्रा यथा भवेत् ।
वृषाङ्गं कारयेद् विद्वान् किङ्किणीमालयावृतम् ॥

पूर्ववन्मण्टपं कृत्वा वेदिकामण्डलान्वितम् ।
तन्मध्ये विन्यसेदुक्षं पश्चिमास्यं द्विजोत्तमाः ॥

गायत्र्या पूजयेदुक्षं तदूर्ध्वे परमेश्वरम् ।
पूर्ववच्छिवपूजा च होमं चैव विशेषतः ॥

शिवाय शिवभक्तेभ्यो दद्यादुक्षं महत्तरम् ।
समिदाज्यचरूपेतं शान्तिहोममथापि वा ॥

चरेदनुक्तमिह यत् तत्तुलाभारवद्गुरुः ।

इति उत्तरकामिकाख्ये महातन्त्रे
हिरण्योक्षप्रदानविधिः पञ्चनवतितमः पटलः ॥

—:*:—

## गजदानविधिः

अतः परं प्रवक्ष्यामि गजदानं द्विजोत्तमाः ।
गजं सलक्षणं कुर्यात् सौवर्णं राजतं तु वा ॥

सहस्रेण तदर्धेन तस्यार्धेन तदर्धतः ।
अष्टोत्तरशतेनाथ कारयेद्देशिकोत्तमः ॥

पूर्ववन्मण्टपं कुर्याद्वेदिकामण्डलान्वितम् ।
गजेन्द्रं विन्यसेन्मध्ये गन्धपुष्पादिनार्चयेत् ॥

पूर्ववच्छिवपूजा च होमयेच्च विशेषतः ।
शिवाय शिवभक्तेभ्यो दद्याच्छ्रद्धासमन्वितम् ॥

अन्यत्सर्वमनुद्दिष्टं तुलाभारवदाचरेत् ।

इति उत्तरकामिकाख्ये महातन्त्रे
गजदानविधिः षण्णवतितमः पटलः ॥

—:*:—

## लोकपालाष्टकदानविधिः

अष्टानां लोकपालानां दानं वक्ष्याम्यतः परम् ।
प्रागुक्तदेशकाले तु वेदिकामण्डलान्विते ॥

पूर्ववच्छिवपूजा च होमश्चैव द्विजोत्तमाः ।
शैवानष्टौ समाहूय सर्वलक्षणसंयुतान् ॥

उदङ्मुखान् समासीनान्नववस्त्रोपरि स्थितान् ।
अर्चयेद्गन्धपुष्पाद्यैर्मन्त्रैर्लोकेशवाचकैः ॥

एकस्मिन् स्थण्डिले वाथ कुण्डे वा होममाचरेत् ।
दक्षिणा दशनिष्का स्याद्भूषणैश्च समन्विता ॥

वस्त्रं प्रावरणं दद्यादासनं कम्बलं तु वा ।
अत्रानुक्तं तु यत् किंचित् तुलाभारवदाचरेत् ॥

लोकेशदानमेवं स्यात् सर्वसंपत्समृद्धिदम् ।
परचक्रप्रमथनं गजवाजिविवर्धनम् ॥

पुत्रदं राष्ट्रवृद्ध्यर्थं गोब्राह्मणहितावहम् ।

इति उत्तरकामिकाख्ये महातन्त्रे

लोकपालाष्टकदानविधिः सप्तनवतितमः पटलः

—:※:—

## सर्वदानोत्तमविधिः

सर्वदानोत्तमं नाम्ना दानमाद्यं वदाम्यहम् ।
मण्टपं विधिना कुर्याद्वेदिकाकुण्डसंयुतम् ॥

प्रपायां विधिरेवं स्यात् पूर्ववन्मण्डलान्वितम् ।
मध्यमे देवदेवेशं ब्रह्मविष्णुसमन्वितम् ॥

गन्धाद्यैरर्चयेदीशं ब्रह्मणे विष्णवे पुनः ।
ब्रह्मन् ब्राह्मणमेदाय ब्रह्मणे धनदायिने ॥

शिवाय हरये स्वाहा स्वधा वौषड्वषण्नमः ।
नारायणाय विद्महे वासुदेवाय धीमहि ॥

तन्नो विष्णुः प्रचोदयात् ।
शेषहोमः प्रकर्तव्यस्ततःकुण्डे समाहितैः ।
चतुर्वेदविदो ब्राह्मा जपारम्भ एव हि ॥

तानुद्दिश्य यथान्यायं द्विजेभ्यो दापयेद्धनम् ।
शतमष्टोत्तरं तेषां पृथक्पृथगनुत्तमम् ॥

पञ्चाङ्गभूषणोपेतं सद्वस्त्रावरणान्वितम् ।
अत्रानुक्तं तु यत् सर्वं पूर्वोक्तविधिनाचरेत् ॥

इत्युत्तरकामिकाख्ये महातन्त्रे

सर्वदानोत्तमविधिरष्टनवतितमः पटलः ॥

उत्तरकामिकं समाप्तम्

